# दृष्टान्तसर्व्वस्वं

## व्याकरणम्।

उपक्रमः।

उपाध्यायोपदेशेन विना यत्कृपया सुखम्।
प्राविशं पाणिनौ वन्दे तं परानन्दमीश्वरम्॥
सिद्धे शब्दार्थसम्बन्धे यतः शब्दानुशासनम्।
धर्म्माय नियमस्तेन, दृष्टान्तानुगमोऽत्र तत्॥
धर्म्मं नीतिं ज्ञानं विज्ञानघटितमिह प्रसमवेत्य।
मुख्यं श्रुतत्वमस्य गौणं व्याकरणत्वं ध्येयम्॥
अवैयाकरणस्येयं कृतिर्यद्यद्विलक्षणा।
प्रशंस्यं तत् परेशस्य, भ्रान्तिर्मे क्षम्यतां बुधैः॥
साहित्यादरतो योऽसौ व्याकरणे उदासयन्।
उपाकरोच्छम्भुचन्द्रेणैमि तं भीमलोचनम्॥

*(१) अ इ उ ण् (२) ऋ ऌ क् (३) ए ओ ङ्
(४) ऐ औ च् (५) ह य व र ट् तथा।
(६) ल ण् (७) ञ म ङ ण न म् (८) झ भ ञ्
(९) घ ढ ध ष् (१०) ज ब ग ड द श्॥
(११) ख फ छ ठ थ च ट त व्
(१२) क प य् (१३) श ष स र् (१४) हलित्यमी।

वर्णाः समुपदिश्यन्ते प्रत्याहारार्थ-मिद्युताः ॥

"एकस्मान् ङञणवटा द्वाभ्यां षस्त्रिभ्य एव कणमाः स्युः ।
ज्ञेयौ चयौ चतुर्भ्यो रः पञ्चभ्यः शलौ षड्भ्यः ॥"

यथा—ङ—एङ् । ञ—यञ् । ण—अण् । व—छव् । ट—अट् । ष—झष् भष् । क—अक् इक् उक् । ण—अण् इण् यण् । म—अम् यम् ङम् । च—अच् इच् एच् ऐच् । य—यय् मय् झय् खय् । र—यर् झर् खर् चर् शर् । श—अश् हश् वश् जश् झश् बश् । ल—अल् हल् वल् रल् झल् शल् ।

(क) आदिरन्त्येन सहेता [यथा ऽण् सुप् तिङ् सुडित्यमी] ।

अन्त्येन इता सह आदिः [ग्राहकः] । (१।१।७१)

महावृत्तिरिति ख्यातां काशिकामवमत्य न ।
वृत्तिबन्धेऽभिलाषोऽस्ति ततः सूत्रानुवर्त्तनम् ॥

(ख) मुखनासिकावचनोऽनुनासिको [ऽभ्र आँ अपः] [१।१।८] ।

(ग) [बाल स्मृत] उपदेशेऽजनुनासिक इत् ;—

(घ) हलन्त्य [मणि णः स्यात्] ।

उपदेशेऽनुनासिकोऽच् इत् स्यात् । (१।३।२)

उपदेशेऽन्त्यं हल् इत् । (१।३।३)

(ङ) न विभक्तौ तुस्माः [स्युः] ; (च)आदिर्ञि-टु-डवः [स्मृताः] ।

विभक्तौ तु-स्-मा न इतः (१।३।४) । आदिस्था ञि-टु-डवः इतः । (१।३।५)

(छ) [स्यात्] षः प्रत्ययस्य ; (ज) चुटू ;—

(झ) ल-श-क्वतद्धिते [मताः] ।

प्रत्ययस्य आदिः ष इत् (१।३।६) । प्रत्ययस्यादौ चुटू इतौ (१।३।७) । अतद्धिते लशकु इतः । (१।३।८)

(ञ) तस्य लोपो[ऽणृगिङादौ विलुप्ता णकङादयः ]।

तस्य इतो लोपः। (१।३।६)

(ट) आद्यन्तौ टकितौ [ज्ञेयौ],

(ठ) मिदचोऽन्त्यात् परः [स्मृतः]। (१।१।४६।४७)

(ड) स्वं रूपं शब्दस्याशब्द-संज्ञा[स्नेढैक् ना प्पित्तस्य]। (१।१।६८)

(ढ) येन विधिस्तदन्तस्य [यथैरच् विजयश्चयः]। (१।१।७)

इत्युपक्रमः।

——०——

## संहिता।

१। शब्दाम्बुधौ सेतुकृतो मुनित्रय-
स्येच्छन् समाच्छादितमत्र माञ्छिदत्।
प्राधान्यमित्युद्यतवान् स निन्दया
ह्रीच्छन्नु वाणीछविमङ्ग मुष्यतु ॥

---

प्रणम्य परमात्मानं धर्म्मविज्ञानभीतिदान्।
अन्वयानुगमेनैव श्लोकान् व्याचक्महे सुखम्॥
महावृत्तौ भाष्यसङ्गमन्यां व्याख्यानमुत्तमम्।
सूत्राणां वेदितव्यन्तद्दृष्टान्तार्थोऽत्र दृश्यताम्॥

१। शब्दाम्बुधाविति। शब्दाम्बुधौ शब्दसमुद्रे 'सेतुकृतः'—"कृसस्य पिति कृति तुक"—तत्पारगमनाय सेतुं निर्म्मितवतो मुनित्रयस्य पाणिनिः कात्यायनः पतञ्जलिरिति

(क) [स्याद्] ह्रस्वस्य पिति कृति तुक् [प्रकृत्य च सोमसुत्]।

पिति कृति ह्रस्वस्य तुक् भवति । (६।१।७१)

(ख) संहितायाम् ;—

(ग) छे च [यथा वृक्षच्छाया च गच्छति] ।

संहितायामित्यधिकारः (६।१।७२) । छे ह्रस्वस्य तुक् स्यात् । (६।१।७३)

(१) [शिशो] परः सन्निकर्षः संहिते[ति विदुर्बुधाः] ।
(१।४।१०९)

(घ) आङ्माङोश्च[मा च्छेत्सीत्] ;—

(ङ) दीर्घात् [म्लेच्छति बालक] ।

आङ्माङोश्च छे तुक् (६।१।७४) । दीर्घात् छे तुक् । (६।१।७५)

(२) ऊकालोऽज्झ्रस्व-दीर्घ-प्लुतो [दधि बधूः शिशो] ।

उ-ऊ-उ३-कालोऽच् ह्रस्वदीर्घप्लुतः । (१।२।२७)

अनुवृत्त्यनुरोधात्—

(३) अचश्च[परिभाषेयं यथा ह्रस्वो नपुंसके] । (१।२।२८)

(च) . पदान्ताद्वा [कुटीच्छाया कुटीछायात्र सेव्यते] ।

पदान्ताद् दीर्घात् छे तुक् । (६।१।७६) पदसंज्ञा त्वग्रे । (१८।ग।१)

---

प्रसिद्धस्य 'समाच्छादितम्' अन्यैर्निबन्धकृद्भिः सम्यगावृतं प्राधान्यं 'माच्छिदत्'—"आङ्-माङोश्च"—उच्छिन्नं माभूत् (कर्म्मणस्तु कर्तृत्वविवक्षायामकर्म्मकत्वम्,उच्छिन्नं माकार्षीदिति व्याख्याने स उह्यः)—इति 'इच्छन्'—"छे च"—उद्यतवान्, दृष्टान्तसर्व्वस्वनामानं प्रबन्धं निबन्धुमुद्यमं कृतवान् । स निन्दया, यदि सुक्षमोऽसि कथं न स्वकृतनूतनशब्दानुशासनेन जनान् तर्पयसीति निन्दावाक्येन 'म्लेच्छन्'—"दीर्घात्"—लज्जां समधिगच्छन् तु 'वाणीच्छविं'—"पदान्ताद्वा"—मुनित्रयनिबन्धरूपां सरस्वत्याः शोभाम् अङ्ग हे बाल मुष्यतु उच्छिनत्तु । एवं मा भूदिति तेषां वन्दनीयानां त्रयाणां मुनीनां प्राधान्यरक्षणाय सूत्राद्युपन्यास इति भावः ।





२। बुद्ध्या सुतन्वा न सुखन्तु धात्रा
नयः समुन्नायभवार्त्तिलावः।
पिचव्यतूलं कलुषं तदग्नौ
नाव्योऽमुना भक्तिमतां भवाब्धिः॥

(क) इको यणचि [दध्यत्र मध्वत्र पित्रदखिडतः]।

अचि इको यण्। (६।१।७७)

इक इत्यत्र—

(१) [ज्ञेया] षष्ठी स्थानेयोगा [इक् स्थाने यण् बाला-त्रैवम्]। (१।१।४९)

(२) यथासंख्यमनुदेशः समानां [कीर्त्यते बुधैः]। (१।३।१०)

दोषांशपरिहाराय—

(३) स्थानेऽन्तरतमो [याद्या यथान्तरतमास्त्विह]। (१।१।५०)

---

२। बुद्धेति। 'बुद्ध्या' धिया 'सुतन्वा' सुन्दरकायेन न सुखम्। तु किन्तु 'धात्रा' विधात्रा—"इको यणचि"—। नन्वेतेनादृष्टवाद एवोत्थापितः? नैवम्, तन्नतं सत्यमुक्तिभङ्ग्या संगृहीतम्। बुद्ध्याद्यभिमानेन न सुखमेधते, यदि विधातृनियोगानुसरणचातुर्य्यमस्ति सद्दजलभ्यन्तदिति कवेरभिप्रायः। 'नयः' नीतिः 'समुन्नायभवार्त्तिलावः'—"एचोऽयवायावः"—समुन्नायेन उत्तरोत्तरोर्द्धभूमिनयनेन संसारक्लेशखण्डनः। एतेन नीत्योत्तरोत्तरोन्नतिः प्रदर्शिता। तदग्नौ नयरूपाग्नौ कलुषं पापं 'पिचव्यतूलं' कार्पासतूलसदृशम्। नीतिमूला हि चरित्रशुद्धिः। अमुना नयेन भवाब्धिः संसारसमुद्रो भक्तिमतां भगवद्भक्तियुक्तानां 'नाव्यो' नौतार्य्यः—"वान्तो यि प्रत्यये"—। न केवलं चरित्रशुद्ध्या संसारसागरोत्तारः किन्तु तद्युक्तभगवद्भक्त्येति फलितार्थः। ननु पूर्व्वं संसारक्लेशखण्डनमुक्तं कथं पुनः भक्त्या संसारपारगमनोक्तिः? न हि केवलं क्लेशखण्डनेन पुरुषार्थता किन्तर्हि भगवति सुखावाप्तिरिति पुनरुल्लेखः।

(४) अलोऽन्त्यस्य ; (१।१।५२) ;—

अनुवृत्त्यनुरोधात्—

(५) ङिच्च (१।१।५३) ;—

(६) आदेः परस्य [सीन एव सः] । (१।१।५४)

(७) [स्यात्] अनेकाल् शित् सर्व्वस्य [अस्तेर्भूर्जश्शसोश्च शिः] । (१।१।५५)

अपीत्यव—

(८) [स्यात्] तस्मिन्निति निर्द्दिष्टे पूर्व्वस्य [की यणच्यतः] (१।१।६६)

अनुवृत्त्यनुरोधात्—

(९) तस्मादित्युत्तरस्य [यथा तिङ्ङतिङोऽत्र तु] (१।१।६७)

(ख) [कल्याणै]चोऽयवायावः [चयनं लवनं यथा] ।

अचि एचः अय्-अव्-आय्-आवः स्युः । (६।१।७८)

(ग) वान्तो यि प्रत्यये [नाव्यः गव्यं दारु बालक] ।

यि प्रत्यये वान्तः [अव् आव्] स्यात् । (६।१।७९)

२ । गव्यूतीनां कोटिद्वयमूर्द्ध्वं त्रिंशता च लक्षेण ।
दूरत्वं पृथ्व्या हि तरणेर्बालक तत्त्वतोऽस्याः ॥

अध्वपरिमाणे च गोर्यूताविति वाच्यम् । * ।

छन्दःसम्बन्धिभिः सूत्रैः पृथक् स्याद्यान्नतिर्यतः ।
अतोऽत्र तत्परित्यागो न दोषाय प्रकल्पते ॥

---

२ । गव्यूतीनामिति । हे बालक, त्रिंशता च लक्षेण ऊर्द्ध्वं त्रिंशल्लक्षेण सम्पन्नं तदाधिक्ययुक्तमित्यर्थः 'गव्यूतीनां'—"अध्वपरिमाणे गोर्यूताविति वाच्यम् ।*।"—क्रोशद्वयानां कोटिद्वयं क्रोशानां षष्टिलक्षाधिककोटिचतुष्टयं तरणेः सूर्य्यादस्याः पृथ्व्याः

४। पव्यं सदा चित्तमवश्यलाव्यं
क्षय्यन्त्वघञ्चेह न प्रेत्य जय्यम्।
क्रय्यो न धर्म्मस्तपसर्षिकृत्यै-
र्नं चेशलाभः क्रपयोदयोऽस्य॥

(क) [वाल] धातोस्तन्निमित्तस्यैव [लव्यो न पल्लवः]।

तन्निमित्तस्यैव धातोरेचो यि प्रत्यये वान्तः [अव् आव्] भवति। (६।१।८०)

(१) भूवादयोधातवः [स्युर्यथा स्पर्द्ध स्पदि क्लिदि]।

(ख) [भवतः] क्षय्यजय्यौ शक्यार्थे [क्षय्यं निपातनात्] (६।१।८१)

(ग) क्रय्यस्तदर्थे [वाल स्यात् क्रय्यः कम्बल एष नः] (६।१।८२)

(घ) एकः पूर्व्वपरयोः [स्यात्];—

(ङ) अन्तादिवच्च [बालक] (६।१।८४।८५)। अधिकारः।

---

पृथिव्यास्तत्त्वतः न तु "खचान्तरे भानु"रित्यादिवदतात्त्विकं दूरत्वम्। यद्यपि पृथिव्या भ्रमणमार्गस्य पूर्णवृत्तत्वाभावाद्दूरत्वं न सर्व्वदैव समं तथापि सामान्यत एतद्दूरत्वं संगृहीतम्। तद्यथा सूर्य्याद्वहुदूरत्वे पञ्चाशीतिलक्षाधिककोटिचतुष्टयमल्पदूरत्वे पञ्चाशन्महस्राधिकाष्टाविंशतिलक्षसमन्वितकोटिचतुष्टयं क्रोशानामिति। इत्युपसंख्यानानां मात्रावृत्तेन सूत्राणान्तु सामान्यवृत्तेन दृष्टान्तनिबन्धनमिति भेदो बोध्यः।

४। पव्यमिति। सदा प्रतिनियतं चित्तं 'पव्यं' शोध्यम्; अघं पापम् 'अवश्यलाव्यम्'—"धातोस्तन्निमित्तस्यैव"--अवश्यच्छेद्यम्। इह तु इहलोक एव 'क्षय्यं' क्षेतुं शक्यं, न 'प्रेत्य'—"ल्वतुकोरसिद्धः"—परलोकं गत्वा जय्यं जेतुं शक्यम्। इहलोके शरीरधारिणां पापमप्रतिविधेयमिति मत्वा परलोके तज्जयो नापेक्षणीयः, यतः पापं हि क्षयिष्णु। धर्म्मो न 'क्रय्य.'—"क्रय्यस्तदर्थे"—क्रयार्थं प्रसार्य्यः। न हि धर्म्मः क्रेयवस्तुवत् तदर्थिभ्यः प्रदर्शनीयः, धार्म्मिकत्वप्रत्यायनाय वृथाडम्बरः परिहार्य्यः। न तेन कृतार्थता प्रत्युतापराध इति भावः। 'तपसर्षिकृत्यैः'—"आद्गुणः"—"उरण्रपरः"—तपसा ऋषिजनोचितानुष्ठानेन 'ईश'लाभः परमेश्वरप्राप्तिः, 'क्रपयोदयो'ऽस्य अस्य लाभस्य उदयः

(च) षत्वतुकोरसिद्धः [स्यात् कोऽस्य प्रेत्योदयः पुनः] (६।१।८६)।

(छ) आद्गुणः [स्यात्तवेयं भो मालेन्द्रोऽयं तवेहते] ।

अवर्णादचि पूर्व्वपरयोर्गुण एकादेशः । (६।१।८७)

(१)[संज्ञातादौ मङ्गलार्थं]वृद्धिरादैच्;(२)अदेङ् गुणः(१।१।१।२)

(३) तपरस्तत्कालस्य [विज्ञेयोऽतोभिसैस् यथा बाल](१।१।७०)

(४) [बाले]को गुणवृद्धी [वाङ्नैपुण्यं भेदबोधकृत्]। (१।१।३)।

(५) [स्यात्]उरण् रपरः[कर्त्ता किरौ द्वैमातुरौ यथा](१।१।५१)

५ । वीर्य्यं चेदरिह्वषु कथमिन्द्रियशरणता पुनरिहैषाम् ।
किन्तु नये छलनेनावह्वे छिदुरतरवृत्तमिह यत् ॥

षत्वतुकोरसिद्ध इत्यत्र—सम्प्रसारणङीट्सु प्रतिषेधो वक्तव्यः । * ।

६ । भवौषधं नाम हरेस्तवैतत्
प्रेम प्रियैश्वर्य्यमतो जनौघः ।
प्रष्ठौह औपम्यमुपैति मृत्यो-
र्न प्रैधते निर्वृतिरन्यतो हि ॥

---

कृपया परमेशकरुणया । ईश्वरकृपया विना सर्व्वविधसाधनं व्यर्थं, साधनन्तु तदाज्ञा-पालनफलमिति भावः ।

५ । वीर्य्यमिति । चेद्यदि 'अरिह्वषु'—"सम्प्रसारणङीट्सु प्रतिषेधो वक्तव्यः।*।"—अरीन् ये युद्धार्थं ह्वयन्ते तेषु वीर्य्यं बलवत्ता, कथं पुनरिह एषामिन्द्रियशरणता इन्द्रिय-वशीभूतता । न तेषु वीरत्वमिति भावः । 'नये छलनेन'—"सम्प्रसारणङीत्यादि"—नीतौ-छद्माचरणेन किन्तु ? यत् यस्मात् इह 'अवह्वे छिदुरतर'वृत्तम्—"सम्प्रसारणङीट्-स्वित्यादि"—छिदुरतरम् अतीवभेद्यस्वभावकं वृत्तं चरित्रम् अवह्वे वह्वे च । सर्व्वदेवाहं नीतिमानभवमिति छलनं व्यर्थं यतस्तात्कालिकचरित्रम् तद्विपरीतप्रमाणमावहति । यस्य चरित्रे दार्ढ्यं नास्ति तस्य वाह्ये नीतिमत्ताप्रदर्शनं विफलमिति भावः ।

६ । भवौषधमिति । हरेर्नाम 'भवौषधं' भवरोगहरणाय भेषजम् । अतः अतएव

(क) वृद्धिरेचि [तवौपम्यम्] ; (ख) एत्येधत्यूठ्सु [बालक] ।

अवर्णादेचि पूर्व्वपरयोर्वृद्धिरेकादेशः । (६।१।८८)

अवर्णादेत्येधत्यूठ्सु एचि पूर्व्वपरयोर्वृद्धिरेकादेशः । (६।१।८९)

७ । अक्षौहिण्या किं स्यात्

क्षमां हि बलमतुलमत्र जानीहि ।

स्वैरगतिर्नहि दूष्या

स्वैरिणि कस्यापि नास्ति सम्मतिरिह ॥

अक्षादूहिन्यामिति वाच्यम् । * ।

स्वादीरेरिणोरिति वाच्यम् । * ।

८ । प्रैष्यजने यदि नास्ति

करुणा किं प्रौढ़वादतः प्रौहः ।

---

'तवैतत्' प्रेम नाम्नि प्रीतिः 'प्रियैश्वर्य्यं' प्रीत्यास्पदसम्पत् । 'जनौघः'—"वृद्धिरेचि"—जनसमूहः मृत्योः समीपे 'प्रष्ठौहः'—"एत्येधत्यूठ्सु"—युगपार्श्वस्थवृषभस्य औपम्यं साद्दश्यम् 'उपैति' प्राप्नोति, हि यस्मात् अन्यतः हरिनामव्यतिरिक्तात् निर्वृतिः परमानन्दः न 'प्रैधते' वृद्धिं गच्छति । मृत्युभयग्रस्तस्य हरिनामैवैकमात्रशरणं सुखवर्द्धनञ्चेति भावः ।

७ । अक्षौहिण्येति।'अक्षौहिण्या'—"अक्षादूहिन्यामिति वाच्यम् *।"—संख्याविशेषयुक्तहस्त्यश्वरथादिसेनया किं स्यात् । अत्र क्षमां हि अतुलं तुलनाविरहितं बलं जानीहि वित्थ । "क्षमया किं न सिध्यति" "शान्तिखड्गः करे यस्य किं करिष्यति दुर्ज्जनः" इति न्यायात् क्षमा हि बलं न तु सैन्यबलं बलमिति भावः । एकेन स्वर्गप्राप्तिरपरेण निरयप्राप्तिरिति विशेषोऽत्र द्रष्टव्यः । 'स्वैर'गतिः स्वेच्छानुसरणं न हि दूष्या दूषणीया ; 'स्वैरिणि'—"स्वादीरेरिणोरिति वाच्यम् ।*।"—स्वेच्छाचारिणि इह कस्यापि न सम्मतिरस्ति । स्वेच्छानुसरणं न खलु दूष्यं, स्वेच्छाचार एव तत्र निन्दनीय इति भावः ।

८ । प्रैष्यजन इति । 'प्रैष्यजने' स्वनियोगाधीनजने यदि करुणा नास्ति अस्य जनस्य 'प्रौढ़'वादतः—"प्रादूहोढोढ्येषैष्येष्विति वाच्यम् ।*।"—निपुणोक्त्या किम् ?

दुःखार्त्ताय च चेन्न

सुखदानमङ्घो किमनेन वा ॥

प्रादूहोढोढ्येषैष्येष्विति वाच्यम् । * ।

ऋते च तृतीयासमासे इति वक्तव्यम् । * ।

९ । प्रार्णं वत्सतरार्णं

न कम्बलार्णं तथाहि वसनार्णम् ।

भीतिमृणार्णं नात्र

वहति दशार्णेऽपि तत् स्वशब्देन ॥

प्रवत्सतरकम्बलवसनार्णदशानामृणे इति वाच्यम् । * ।

१० । स ऐच्चताभूत् किमु तेन प्रार्छति

न प्रार्चयत्यत्र तु प्रर्छयत्यदः ।

---

'प्रौढः' अयं केवलं तर्ककुशलः । वृथैव वाग्विरचनमिति भावः । 'दुःखार्त्ताय'—"ऋते च तृतीयासमासे इति वक्तव्यम् ।*।"—दुःखप्रपीड़िताय चेद्यदि न सुखदानम् अनेन प्रौढ़वादेन किं वा । नायं यदि सान्त्वनाहेतुः किमनेनेति विशेषोक्तिः ।

९ । प्रार्णमिति । 'प्रार्णं' प्रकृष्टमृणं 'वत्सतरार्णं' वत्सतरार्थमृणं—अन्यत्रोक्तं वत्सार्णं वत्सरार्णं न सिद्धं भाष्यविरुद्धत्वादिति भट्टोजिदीक्षितः, अनुक्तसंग्रह इत्यस्माभिः, भिन्नपाठाध्यासो वा—'कम्बलार्णं' कम्बलार्थमृणं, तथाहि 'वसनार्णं' वसनार्थमृणं 'ऋणार्णम्' ऋणात् ऋणं ऋणापनयनाय कृतमन्यदृणं नात्र भीतिं वहतीति न । 'दशार्णे' देशे—"प्रवत्सतरकम्बलवसनार्णदशानामृणे इति वाच्यम् ।*।"—तत् ऋणं दुर्गवाच्यपि स्वशब्देन ऋणमिति स्वरूपेण भीतिं न वहतीति न । ऋणमेवं भयावहं यत् शब्दमात्रेणापि शङ्कां जनयति । कदापि ऋणं मा कार्षीरित्यभिप्रायः ।

१० । स इति । स ईश्वरः 'ऐच्चत'—"आटश्च"—अदो विश्वमभूत् किमु ? न त्वेतमङ्कालविषयः किन्तु तेन ईश्वरेण 'प्रार्छति'—"उपसर्गादृति धातौ"—वृद्धिं प्राप्नोति।

स पश्यतु द्यामथ गां सुखावहां
स प्रेठते नेश्वर एष प्रोण्णते ॥

(क) आटश्च[चिष्ट कल्याणीस्त्रीयदोढीयदङ्ग चात्]।
आटश्च अचि पूर्व्वपरयोर्द्विरेकादेशः। (६।१।९०)

(ख) उपसर्गादृति धातौ [प्रार्च्छसि त्वमुपार्च्छसि]।
आत् उपसर्गात् ऋति धातौ पूर्व्वपरयोर्द्विरेकादेशः। (६।१।९१)
उपसर्गसंज्ञा तु कारकसमाससाधारणनिपातप्रकरणे द्रष्टव्या।

(ग) वा सुप्यापिशलेर्[वाल वोपर्षभयतीति तत्]।
आत् उपसर्गात् ऋति सुपि धातौ पूर्व्वपरयोर्द्विरेकादेशो वा आपिशलेः
(मते) (६।१।९२)

(घ) औतोम्शसो[र्गां पश्य त्वं गा द्यां द्याः पश्य बालक]।
अमृशसोरोत आ पूर्व्वपरयोरेकादेशः। (६।१।९३)

(ङ) [वाले]ङि पररूपं [स्यादुपेलय उपोषति]।

---

"सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्। तदैचत बहु स्यां प्रजायेय" इत्यादि श्रुत्या तद्दृष्ट्या विश्वोत्पत्तिरिति प्रसिद्धेऽपि निरन्तरसृष्टिप्रवाहः साक्षात् तत्कर्तृत्वापेक्ष इति न सर्व्वेषामभिप्रेतमत उक्तं तेन ह्रिं .क्रमोन्नतिं प्राप्नोति। अत्र सृष्टिविषये तु न 'प्रार्चयतु'—"वा सुप्यापिशलेः"—ऋचमाचष्टाम्। कथं ? यदो विश्वं 'प्रर्द्धयति' ऋद्धिमैश्वर्य्यमाचष्टे। तन्महिमानं द्योतयते अतो व्रतस्तोत्रपठनं निष्प्रयोजनम्। स ऋगुच्चारणपरः 'द्यां' द्युलोकम्, 'गाम्'—"औतोम्शसोः"—सुखावहां पृथिवीं पश्यतु। द्युलोकभूलोकादीनेवाश्रित्य ऋचं गायन्ति, अतः साक्षात्तद्दर्शनमेव न्याय्य इति भावः। नन्वनेनोपायेनास्मिन् समये बहवः संशयमापन्नाः कथन्तादृक्पक्षपातिनो मा भूत्। यदि भवति तदपेक्षयाह—स 'प्रेठते' आत्मानं वक्ष्यति एष ईश्वरो न 'प्रोण्णते'—"एङि पररूपम्"—अपनीयते। सृष्टौ संशयजनितदोषदृष्ट्या संशयिन एव मतिराच्छन्ना भवति न त्वीश्वरः कदापि विश्वतस्तिरोदधात्यलीकवत्तद्वा शून्यत्वं भजत इति निर्गलितार्थः।

आत् उपसर्गात् एङि धातौ पूर्व्वपरयो: पररूपमेकादेश: । (६।१।९४)

११ । कर्कन्धूपमनाभिरस्येति किमुत प्रशंसनेनेह ।
क्वेव निवर्त्स्यति रूपं सुभगत्वं सुन्दरेण चरितेन ॥

शकन्ध्वादिषु पररूपं वाच्यम् । *। तच्च टि:—

(१) अचोऽन्त्यादि टि [विज्ञेयमातामचाम् यथा स्मृतम्]

एवे चानियोगे । *। (१।१।६४)

१२ । विम्बौष्ठत्वं नैव वाग्विरचनसुविमलोष्ठहीनस्य ।
सौन्दर्य्याय नरस्य स्थूलोतुरस्मगयाशीलस्य ॥

ओत्वोष्ठयो: समासे वा पररूपं वक्तव्यम् । * ।

१३ । अवेहि तां स्वीकृतिमप्रमत्त:
प्रोक्तं यदोमित्यभिपालनीयाम् ।

---

११ । कर्कन्धूपमेति । अस्य 'कर्कन्धू'पमनाभि:—"शकन्ध्वादिषु पररूपं वाच्यम् ।*।" कर्काणां राजविशेषाणाम् अन्धु: कूप: तत्सदृशो नाभिरिति इह प्रशंसनेन किमुत ? 'क्वेव,—"एवे चानियोगे ।*।"—रूपं निवत्स्यति । सति वार्द्धे यौवने वा रोगादिभी-रूपभ्रंश: सम्भवति, अत: सुन्दरेण मनोहरेण चरितेन चरित्रेण सुभगत्वं शोभनैश्वर्य्यत्वम् । यत् किञ्च वाह्यं तदस्यापि विनाशि । अतएव तदुपेक्ष्य इहपरलोकस्यापि सुन्दरचरित्र-मर्ज्जयेति भाव: ।

१२ । विम्बौष्ठत्वमिति । वाग्विरचन'सुविमलोष्ठ'हीनस्य—"ओत्वोष्ठयो: समासे वा पररूपं वक्तव्यम् ।*।"—वाग्विरचनेन सुविमलौ न त्वसद्वाक्यविरचनेन मलिन-इति भाव:, ओष्ठस्तेन हीनस्य नरस्य 'विम्बौष्ठत्वं' विम्बफलसदृशोष्ठत्वं न सौन्दर्य्याय । 'स्थूलोतु:' स्थूलदेही विड़ालश्च अस्मगयाशील: भोजनपटुर्न तूपद्रवनिवारणदक्ष: न सौन्द-र्य्याय गृहशोभावर्द्धनाय । यस्य यल्लक्ष्यं यदि न तेन तत् सिद्धं भवति वृथैवेति भाव: ।

१३ । अवेहीति । 'यदोमि'ति—"ओमाङोश्च"—यदा ओमिति प्रोक्तं तदा तां स्वीकृतिम् अप्रमत्त: सन् अभिपालनीयां सर्व्वतोभावेन रक्षणीयाम् 'अवेहि' वेत्थ ।

ते छिन्द्युरेतां कलुषाधमा ये
कुनीतयो बाल वहन्ति दण्डम् ॥

(क) ओमाङोश्च[योमित्याह साध्वोढ़ेयं मनस्विनी] ।

आत् ओमाङोश्च पूर्व्वपरयोः पररूपमेकादेशः । (६।१।९५)

(ख) उस्यपदान्तात् [बालादुः] ;—

(ग) अतो गुणे [पचन्ति ते] ।

आत् अपदान्तात् उसि पूर्व्वपरयोः पररूपमेकादेशः । (६।१।९६)

अतोऽपदान्तात् गुणे पूर्व्वपरयोः पररूपमेकादेशः । (६।१।९७)

१४ । किञ्चिदाक्रम्य झटिति पटत्पटदिति प्रिय ।
पटत्पटेति कुरुते बालोऽनयवशो हि यः ॥

(क) अव्यक्तानुकरणस्यात इतौ [पटिति प्रिय] ।

अव्यक्तानुकरणस्य अत इतौ पूर्व्वपरयोः पररूपमेकादेशः । (६।१।९८)

(ख) [भो] नाम्रेड़ितस्यान्तस्य तु वा [पटत्पटेत्यहो] ।

अव्यक्तानुकरणस्याम्रेड़ितस्य अत इतौ न पूर्व्वपरयोः पररूपमेकादेशः ; अन्तस्य तु वा । (६।१।९९)

द्विरुक्तस्य यत् परं तदाम्रेड़ितसंज्ञमिति द्विरुक्त्यधिकारे वक्ष्यते ।

---

एतां स्वीकृतिं ते 'छिन्द्युः'—"उस्यपदान्तात्"—उच्छिन्नां कुर्य्युः ये कलुषाधमाः पापाधमाः । हे बाल, कुनीतयः कुत्सितचरित्राः दण्डं 'वहन्ति'—"अतो गुणे"—दण्डभाजनानि भवन्ति । नीत्युच्छेदकारिणः प्रधानत ईश्वरादप्रधानतो मनुष्येभ्यो दण्डं लभन्तेऽतस्तत्कारी मा भूरिति श्लोकार्थः ।

१४ । किञ्चिदिति । हे प्रिय, यो हि बालोऽनयवशः स 'झटिति'—"अव्यक्तानुकरणस्यात इतौ"—किञ्चिदाक्रम्य 'पटत्पटदिति' 'पटत्पटेति'—"नाम्रेड़ितस्यान्तस्य तु वा।"—कुरुते । न त्वमेवमनीतिपरो भवेति भावः ।

१५ । बाल मटमटाकृद्दम-
दमाकरोषि कथमत्र चपल: सन् ।
स्वदिति स पतति नितान्त-
मनयेन हि य इह धावति हठेन ॥
अनेकाज्ग्रहणं कर्त्तव्यम् । * ।
नित्यमाम्रेड़िते डाचि पररूपं वक्तव्यम् । * ।

१६ । व्यर्थात्र वाणीश्वरता बह्वर्व्वी
दातृषभलञ्च तथोर्ज्जभूती ।
भक्तानन् ज्ञाननयौ परेऽन्त-
स्तन्वौ न चेत् प्राणहरा वियय्य: ॥

(क) अक: सवर्णे दीर्घो [ऽत्रागच्छ भातीह भानुमान्] ।
अक: सवर्णे अचि पूर्व्वपरयोर्दीर्घ एकादेश: (६।१।१००)

---

१५ । बालेति । हे बाल, इह यो नितान्तमनयेनानीत्या हठेन धावति स 'स्वदिति'—"अनेकाज्ग्रहणं कर्त्तव्यम् । * ।"—पतति । कथमत्र चपल: सन् मटमटाकृत् दमदमाकरोषि—'नित्यमाम्रेड़िते डाचि पररूपं वक्तव्यम् । * ।"— । मैवं कार्षीरन्यथा तत्प्रतिफलं पतनादिना लप्स्यसे ।

१६ । व्यर्थेति । 'वाणीश्वरता' वागाधिपत्यं 'बह्वर्व्वी' बहुभूमि: 'व्यर्थाच' विफला । 'दातृषभलञ्च'—"अक: सवर्णे दीर्घ:"—ऌकारस्य साधुदृष्टान्ताभावात्त-दृष्टान्त उपेक्षित:, दातृश्रेष्ठत्वं व्यर्थम् । तथा 'ऊर्ज्जभूती'—"प्रथमयो: पूर्व्वसवर्ण:"—उत्साहोन्नती व्यर्थे । चेद्यदि 'भक्तान्'—"तस्माच्छसो न: पुंसि"—अनु ज्ञान'नयौ'—"नादिचि"—ज्ञानञ्च नयश्च तौ, 'अन्तस्तन्वौ' अन्तश्चित्तं तनूश्च ते—"दीर्घाज्जसि च"—न परे परमेश्वरे, प्राणहरा: 'वियय्य:' विमार्गा:, यान्त्यनेनेति ययी मार्ग: । वाणीश्वरता-प्रभृतय: परमात्मन्यसमर्पिता विमार्गप्रस्थानाय भवन्तीत्यर्थ: ।

(१) [स्यात्] तुल्यास्यप्रयत्नं सवर्ण[मिद्दिश];—

(२) नाज्झलौ । (१।१।९-१०)

(३) [विवृतोऽकार एवात्र शास्त्रान्ते] अ अ [इत्यतः] ।
(८।४।६८)

(ख) [बाल] प्रथमयोः पूर्व्वसवर्णो[ऽग्नी नरा जनान्] ।
प्रथमयोः अकः पूर्व्वपरयोः पूर्व्वसवर्णो दीर्घ एकादेशः । (६।१।१०१)

(ग) तस्माच्छसो नः पुंसि [स्यात्] ;—
तस्मात् पूर्व्वसवर्णदीर्घात् शसः पुंसि नः स्यात् । (६।१।१०२)

(घ) नादिचि [ज्ञापकौ नरै] ।
आत् इचि न पूर्व्वसवर्णदीर्घः । (६।१।१०३)

(ङ) दीर्घाज्जसि च [सेनान्यौ कुमार्य्यः सरला यथा] ।
दीर्घाज्जसि इचि च पूर्व्वसवर्णदीर्घो न । (६।१।१०४)

१७ । होतॄतकं खलु बाल
होत्लृतकमिति बहुशः कुमारीयम् ।
गच्छन्ती तं पश्चा-
दशक्तितः पुनरुदाजहार ॥
ऋति सवर्णे ऋ वा । * ।
लृति सवर्णे लृ वा । * ।

१८ । न चेष्टमिष्टं मनुते परेऽस्मिन्
शिष्योऽनुरागो न यदि प्रमुक्तः ।

---

१७ । होतॄतकमिति । हे बाल, त्वं 'होतॄतकं'—"ऋति सवर्णे ऋ वा" ।*।—पक्षे सवर्णदीर्घः होतुः ऋतकं नामानं पुत्रम् अशक्तितः खलु पुनः 'होत्लृतक'मिति—"ऋति सवर्णे लृ वा" ।*।—पश्चाद्गच्छन्तीयं कुमारी बहुश उदाजहार कथयति स्म । मा त्वमुपहस यतोऽशक्तिनिबन्धनमेतदिति भावः ।

१८ । न चेष्टमिति । न च 'इष्टम्'—"अभि पूर्व्वं."—अभिलषितम् 'इष्टम्'—

हेतोः स कर्त्तुर्निखिलस्य सख्युः
पत्युः प्रियो राध्यतमोऽत्र नित्यम् ॥

(क) अमि पूर्व्वो[यथा वृचमैचदग्निं न सेवते] ।
अमि अकः पूर्व्वपरयोः पूर्व्वं एकादेशः । (६।१।१०६)

(ख) [भो] सम्प्रसारणाच्चो[मं गृहीतं चेज्यया यथा] ।
सम्प्रसारणादचि पूर्व्वपरयोः पूर्व्वं एकादेशः । (६।१।१०७)

(१) [इष्टे उप्ते गृहीतेऽत्र] इग्यणः सम्प्रसारणम् (१।१।४५)

(ग) एङः पदान्तादति [तं शिश्रोऽत्र पश्य सन्ततम्] ।
पदान्तादेङः अति पूर्व्वपरयोः पूर्व्वं एकादेशः । (६।१।१०८)

(१) सुप्तिङन्तं पदं [ज्ञेयं] (१।४।१४) ;—

अनुवृत्त्यनुरोधात्—

(२) न क्ये (१।४।१५) ; (३) सिति च [ऋत्वियः](१।४।१६)

(४) [स्यात्] स्वादिष्वसर्व्वनामस्थाने [राजभिरिज्यते] ।

(५) यचि भम् [गार्ग्यो दाचिः स] (१।४।१८) ;—

(६) तसौ मत्वर्थे [इष्यतेऽङ्ग] (१।४।१९) ।

---

"सम्प्रसारणाच्च"—यज्ञादिकर्म्म मनुते । यदि न 'परेऽस्मिन्'—"एङः पदान्तादति"—अस्मिन् परमेश्वरे हे 'शिश्रोऽनुरागः' । यदि न परमात्मन्यनुरागो यज्ञादिकं सर्व्वमेव भक्तसन्निधावनभिलाषास्पदम् । 'प्रमुक्तेर्हेतोः'—"ङसिङसोश्च"—निखिलस्य 'कर्त्तुः'—"ऋत उत्"—'सख्युः' 'पत्युः'—"ख्यत्यात् परस्य"—परमेश्वरस्य 'सोऽनुरागः' 'प्रियो राध्यतमोऽत्र'—"अतो वरमुतादमुते" ; "हशि च"—प्रियो हृद्यः, अतएवात्र नित्यं राध्यतमः सेव्यतमः । अनुरागशून्यं कर्म्मादिकं नानुगृह्णाति परमेश्वरोऽतः स एव यत्नेनोपार्ज्जनीय इति भावः ।

इति दृष्टान्तव्याख्यायां प्रथमं प्रकरणम् ।

(घ) ङसिङसोश्च [वायोः खम्] ;—

(ङ) ऋत उत् [होतुरागतः] ।

एङ: ङसिङसो: अति पूर्व्वपरयो: पूर्व्व एकादेशः । (६।१।१०९)

ऋत: ङसिङसो: अति पूर्व्वपरयो: उत् एकादेश: । (६।१।११०)

(च) ख्यत्यात् परस्य [सख्युः स्वं पत्युरागच्छति प्रिय ।

ख्यत्यात् ङसिङसो: अति पूर्व्वपरयो: उत् एकादेश: । (६।१।१११)

(छ) अतो रोरप्लुतादप्लुते[ऽसौ शुद्धोऽतिसारवान्] ।

अप्लुतादत: अप्लुते अति रो: उत् आदेश: । (६।१।११२)

(१) ससजुषो रु[र्वायुः स सजूर्ऋषिभिरुत्तम] । (८।२।६६)

(ज) हशि चा[तो विभात्येष यातो भानुरितोऽन्यत:] ।

हशि चात: रोरुदादेश: (६।१।११३) ।

इति दृष्टान्तसर्व्वस्वे दृष्टान्तानुगमने संहितायां

प्रथमं प्रकरणम् ।

---

# अथ प्रकृतिभाव: ।

"प्रकृत्यान्त: पादमव्यपरे" ऽत: सोऽनुवर्त्तते ।

१९ । गोऽरालगोअश्वसमन्वित: किं

गवोष्ट्रगोऽजाढ्य गवेन्द्र एष: ।

---

१९ । गोऽरालेति । 'गोऽरालगोअश्वसमन्वित:'—"सर्व्वत्र विभाषा गो:"—गौर्भूमिश्च अरालो मत्तहस्ती च गौश्च अश्वश्च तै: समन्वित: किम् एष हे 'गवोष्ट्रगोऽजाढ्य'—"अवङ् स्फोटायनस्य"—हे तदपिचयाल्पधनेन धनिक 'गवेन्द्र,'—"इन्द्रे च"—

भो देवदत्ता इह चाग्निवायू
अञ्जारणी अत्र अमू अनीशौ ॥
अमी उ आहो इह वैदिका यथा
सानो इति स्थाणविति ह्वयन्ति किम् ।
वित्यूँ इति प्राणितयो इतीशता
आ एवमसग्रामधि भौतिकी तनू ॥

(क) [स्यात्] सर्व्वत्र विभाषा गोः ;—

(ख) अवङ् स्फोटायनस्य [भोः].।

गोरेङ् प्रकृत्या विभाषा सर्व्वत्र (६।१।१२१) ।

स्फोटायनस्य [मते] अचि गोः अवङ् (६।१।१२२) ।

---

गवामिन्द्रियाणामिन्द्र ईश्वरः? न हि गोशब्दसाहचर्य्येनैव कोऽपि वशीकृतेन्द्रियग्राम इति तत्प्रधानं धनं तुच्छमिति भावः । भो 'देवदत्ता३ इह'—"प्लुतप्रगृह्या अचि"—'अग्निवायू अञ्जारणी अत्र अमू अनीशौ'—"ईदूदेद्द्विवचनं प्रगृह्यम्"—"अदसो मात्"—अग्निश्च वायुश्च तौ अञ्जश्चन्द्रश्च अरणिः सूर्य्यश्च तौ अत्र अमू अनीशौ नेश्वरपदवाच्यौ । यदि नैते परमेश्वरपदवाच्याः कथं वेदे तेषान्तद्रूपेण स्तुतिरित्यपेक्षायां प्रश्नमुखेनाह—'अमी उ आहो इह'—"अदसो मात्"—"निपात एकाजनाङ्"—"ओत्"—इह अमी वैदिकाः उ अहो आहो किं तथा ह्वयन्ति यथा 'सानो इति' 'स्थाणविति'—"सम्बुद्धौ शाकल्यस्येतावनार्षे"—प्राणितया 'उ इति' 'विति' 'ऊँ इति'—"उञः"—"ऊँ"—ह्वयन्ति तं सानुं स्थाणुञ्चेति शेषः? उत्तरमाह—'आ एवमसां भौतिकी तनू अधि'—"ईदूतौ च सप्तम्यर्थे"—प्राधान्येन गृहीत्वेति यावत् ईशता भौतिकपदार्थानामिति शेषः । 'आ एवम्'—"निपात एकाजनाङ्"—आ वाक्यारम्भे । अधि सप्तम्यर्थद्योतकः । सानौ स्थाणौ वा प्रतिहता यथा बालास्तत्कर्तृत्वमभिसन्धाय तं तं प्राणिज्ञानेन सम्बोधयन्त्येवं तत्तद्भौतिकपदार्थेषु शक्तेर्विकाशमभिलक्ष्य तानीश्वरत्वेन ते जगृहुरिति फलितार्थः । अभेदज्ञानेन प्रथमं भेदज्ञानेन पश्चादग्रहणं ज्ञानोन्मेषं लक्षयति ।

(ग) द्वन्द्वे च [स्यान्नवेन्द्रोऽयं] ; (घ) प्लुतप्रगृह्या अचि[हो]।

द्वन्द्वे च अचि गोरवङ् (६।१।१२३)।

अचि प्लुतप्रगृह्याः प्रकृत्या भवन्ति (६।१।१२४)।

(१) वाक्यस्य टेः प्लुत उदात्तः [टितोऽग्निचि३त् प्रसिद्ध्यति] (८।२।८२)।

(२) प्रत्यभिवादेऽशूद्रे [भो आयुष्मानेधि भारत३]। (८।२।८३)

(३) दूराद्धूते च [भो] ;—

(४) है हे प्रयोगे हैहयोः [ग्रिमो]। (८।२।८४-८५)

(५) गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचां [शुभ]। (८।२।८६)

(६) [स्या]दीदूदेद्द्विवचनं प्रगृह्यं [वी इहागतौ]। (१।१।११)

(७) अदसो मा[दमू अत्र अमी अत्र यथा शुभ]। (१।१।१२)

(८) निपात एकाजनाङ् ;—

(९) ओत् [उ अटाग्नावहो इति]। (१।१।१४-१५)

प्रागीश्वरान्निपाताः [स्यु]श्चादयोऽसत्त्व [एव ह] इति पश्चाद्वक्ष्यते।

(१०) [स्यात्] सम्बुद्धौ शाकल्यस्येतावनार्षे [सुबुद्धे]। (१।१।१६)

(११) उञः ;—

(१२) ऊँ [उ इति विति ऊँ इतीति रूपत्रयम्]। (१।१।१७-१८)

(१३) ईदूतौ च सप्तम्यर्थे [आस्ते गौरी अध्यास्थित्य] (१।१।१९)

२० । वारि अस्य दयां नित्यं प्रख्यापयति उच्चकैः ।
मधु आवर्षति ह्येषा वाणि अस्या नु कीर्त्तनैः ॥

(क) इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च [नु इत्यशात्] ।

शाकल्यस्य [मते] असवर्णेऽचि इकः प्रकृत्या ह्रस्वश्च (६।१।१२६) ।

२१ । पार्श्वं द्वादशयुग्ममेकैकं तस्य मेरुदण्डेन ।
लग्नं सप्तोरोऽस्थ्ना शेषमलग्नं व्यवस्थेयम् ॥

सिन्नित्यसमासयोः शाकलप्रतिषेधो वक्तव्यः । ※ ।

---

२० । वारि इति । 'वारि अस्य' परमेश्वरस्य दयां नित्यं 'प्रख्यापयति उच्चकैः' उच्चैः घोषयति । सामान्यमपि जलं तृषासन्तापकालेऽसामान्यामस्य दयामुच्चैः कथयति । 'वाणि अस्याः'—"इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च"—दयायाः कीर्त्तनैर्नु मधु आवर्षति हि । परमेश्वरदयानुकीर्त्तनेनैव वाचि मधुरता ।

२१ । पार्श्वमिति । 'पार्श्वं' पर्शूनां पार्श्वास्थ्नां समूहः पर्शु + णस्—"सिन्नित्यसमासयोः शाकलप्रतिषेधो वक्तव्यः ।※।"—द्वादशयुग्मं चतुर्व्विंशतिसंख्यकम् । तस्यैकैकं मेरुदण्डेन लग्नम् । सप्त युग्मानाम् उरोऽस्थ्ना वक्षोऽस्थ्ना लग्नानीति शेषः । शेषं पञ्चयुग्मम् अलग्नम् असंयतं 'व्यवस्थेयम्'—"सिन्नित्यसमासयो"रित्यादि । ननु सुश्रुतादौ पार्श्वयोः षट्त्रिंशद्युग्मं दृश्यते कथमत्र द्वादशयुग्मम् ? छेद्यावयव-वियोगतवैलक्षण्यात् स्थालक-पार्श्वकार्व्वुदानां समसंख्यकानामसंयुक्तावस्थायां गणनया संख्याधिक्यम् । एवं सर्व्वत्र प्राचीननवीनयोः संख्याव्यतिक्रमे यथायोग्यं समाधानं कर्त्तव्यम् । स्थालकपार्श्वकार्व्वुदानां स्वातन्त्र्येण संख्याग्रहणं यथा चरके "पार्श्वयोश्चतुर्विंशतिः पार्श्वकास्तावन्ति चैव स्थालकानि तावन्ति चैव स्थालकार्व्वुदानि" इति । तन्त्रान्तरेऽपि "पार्श्वकाः स्थालकैः सार्द्धमर्व्वुदैश्च द्विसप्ततिः ।"

२२ । देवऋत्यनुगतात् सुमङ्गले-
त्याभिमुख्यकरणं किमर्थ्यते ।
अस्तु हीति वदतोऽस्य शन्ततं
तत्तथास्तु विमलद्यु तद्दिनम् ॥

(क) ऋत्यकौ [माल ऋष्योऽयं] ;—

(ख) अप्लुतवदुपस्थिते ।

शाकल्यस्य [मते] ऋति अकः प्रकृत्या ह्रस्वश्च (६।१।१२७)।

उपस्थिते [अनार्ष इति करणे] अप्लुतवत् (६।१।१२८) ।

(ग) ई३ चाक्रवर्म्मणस्या[स्तु हीत्यब्रवीदयं यथा] ।

चाक्रवर्म्मणस्य [मते] ई३ अचि अप्लुतवत् (६।१।१२९) ।

(घ) दिव उत् [द्युमणिर्भाति द्युकामो द्युभिरावृतः] ।

दिवः पदस्य उत् (६।१।१३०) ।

---

२२ । देवेति । 'देवऋष्य'नुगतात्'—"ऋत्यकः"—नारदपथाश्रितात् ज्ञानसमन्वितभक्तियोगानुष्ठानपरात् हे 'सुमङ्गलेति'—"अप्लुतवदुपस्थिते"—हे सुमङ्गल३ इति आभिमुख्यकरणम् अत्यादरेण दूरादाह्वानं किम् अर्थ्यते याच्यते । न हि तादृशजना लौकिकरीत्या समागतानाद्रियन्तेऽतो न तेभ्यस्तदपेक्ष्यमिति भावः । 'अस्तु हीति'—"ई३ चाक्रवर्म्मणस्य"—वदतः, कुशले पृष्टे तत्प्रतिवचने अस्तु ही३ इति वदतस्तस्मादस्य प्रश्नकृतः ततं विस्तृतं शं कुशलम् । तद्दिनं तस्य प्रश्नकृतो दिनम् विमलद्यु—"दिव उत्"—निर्मलाकाशं विघ्नाभावादिति भावः । अस्तु इति वदतस्तस्मात् तद्दिनं तथा भवति । यत एवमलौकिकविषयाः सम्पद्यन्ते, न ततो लौकिकभद्राचारापेक्षा युज्यत इति समुदायार्थः ।

२३ । एष चेदनुपासीनः पापेनैषोऽभिभूयते ।
स पुण्यात्मा क्षमोऽनैषः सको भवति चेत् पुनः ॥

(क) एतत्तदोः सुलोपोऽकोरनञ्समासे हलि [प्रिय] ।

अनञ्समासेऽकोरेतत्तदोर्हलि सुलोपः संहितायाम् (६।१।१३१) ।

२४ । "सैष दाशरथी रामः सैष राजा युधिष्ठिरः" ।
सत्येनैकोऽनृतेनान्योऽभजदीश्वरतां तमः ॥

(क) [सैष बाल यथा] सोऽचि लोपे चेत् पादपूरणम् ।

स सुलोपोऽचि चेल्लोपे पादपूरणं भवति (६।१।१३३) ।

इति दृष्टान्तसर्व्वस्वे दृष्टान्तानुगमने संहितायां द्वितीयं प्रकरणम् ।

---

२३ । एष इति । 'एष चेत्' यदि—"एतत्तदोः सुलोपोऽकोरनञ्समासे हलि"—अनुपासीनः उपासनाविमुखः पापेन 'एषोऽभिभूयते' परास्तो भवति । चेत् यदि पुनः 'अनैषः' 'सको' भवति उपासनापरायणो भवति, स पुण्यात्मा क्षमः पाप-पराजयसमर्थो भवति । उपासनेनैव पापजये सामर्थ्यमतद्भावेऽसामर्थ्यमिति समुदायार्थः ।

२४ । सैष इति । 'सैष'—"सोऽचि लोपे चेत् पादपूरणम्"—दाशरथिः दशरथस्यापत्यं रामः सैष राजा युधिष्ठिरः प्रसिद्ध इति भावः । एकः रामः सत्येन ईश्वरत्वम् अन्योऽनृतेनासत्येन तमो नरकम् अभजत् । पितृसत्यपालनेन रामो देवत्वं प्राप्तवानश्वत्थामा हत इत्यनृतोक्त्या धर्म्मात्मा युधिष्ठिरोऽन्धतमसमाविशदतः सर्व्वथाऽसत्यं परिहार्य्यमिति भावः ।

इति दृष्टान्तव्याख्यायां द्वितीयं प्रकरणम् ।

## सुट्।

२५। चित्तं समस्कार्षुरिहानुरागात्
सञ्चस्करुस्तत् तपसा पुराणाः।
संस्कर्त्तुरेतत् खलु भूषणं यत्
परिष्क्रियोपस्करणं समध्या॥

(क) सुट् कात् पूर्व्वो[ऽधिकारोऽयं करोतेः संस्कृतिर्यथा]
(६।१।१३४)

(ख) अड़भ्यासव्यवायेऽपि [समस्कार्षीत् समस्करोत्]।

अड़्-अभ्यास व्यवायेऽपि सुट् कात् पूर्व्वः (६।१·१३५)।

(ग) संपर्य्युपेभ्यः करोतौ भूषणे [सा परिष्क्रिया]।

सं-परि-उपेभ्य. करोतौ सुट् कात् पूर्व्वः भूषणे (६।१।१३६)।

२६। उपस्कृतिः सा ननु सर्व्वसम्प-
दुपस्कृतान्नं त्विह को नु भुङ्क्ते।

---

२५। चित्तमिति। इह भक्तिमार्गे पुराणाः प्राचीनभक्ताः अनुरागात् परानुरक्तिवशात् चित्तं 'समस्कार्षुः'—"सुट् कात् पूर्व्वः"—"अड़भ्यासव्यवायेऽपि"—संस्कृतवन्तः; तपसा कठोरयोगसाधनेन पुराणा ऋषयः तत् चित्तं 'सञ्चस्करुः' संस्कृतवन्तः। समध्या योगभक्तिसम्मेलनेन यत् 'उपस्करणम्' संस्करणं सा 'परिष्क्रिया' संस्क्रिया—"संपर्य्युपेभ्यः करोतौ भूषणे"—। एकत्र योगस्यान्यत्रानुरक्तेरभावादपूर्णत्वमपूर्णत्वे न संस्कारस्यापि पूर्णता, अतस्तयोरङ्गाङ्गिभावेन स्थितिरेव संस्क्रियेत्युक्तम्। 'संस्कर्तुः' ईश्वसंस्कारकस्य खलु तदेतत् अनुष्ठानेनं योगभक्तिसम्मेलनं भूषणम्। सर्व्वत्र युगपद्योगभक्तिकर्म्मानुसरणेनैव कृतार्थतेति भावः।

नोपस्कृतं जल्पति तान्मतेऽत्र
स्वं तैरुपस्कारमहो लुनाति ॥

(क) समवाये च [तत्राभूत् संस्कृतञ्च परिष्कृतम्] ।
समवाये करोतौ संपर्य्युपेभ्यः सुट् कात् पूर्व्वः (६।१।१३७) ।

(ख) [बालो]पात् प्रतियत्नवैकृतवाक्याध्याहारेषु ।
प्रतियत्न-वैकृत-वाक्याध्याहारेषु करोतौ उपात् सुट् कात् पूर्व्वः (६।१।१३८) ।

(ग) किरतौ लवने [बालोपस्कारं ते लुनन्ति तत्] ।
उपात् किरतौ लवने सुट् कात् पूर्व्वः (६।१।१३९) । णमुलच वक्तव्यः * ।

२७ । प्रतिस्किरति बालोपस्कारकः श्रेय उत्क्षिपन् ।
यथापस्किरते श्वात्र कुक्कुटो वृषभस्तथा ॥

(क) हिंसायां प्रतेश्च [यथा स शस्त्रैः प्रतिचस्करे] ।
उपात् प्रतेश्च हिंसायां किरतौ सुट् कात् पूर्व्वः (६।१।१४०) ।

---

२६ । उपस्कृतिरिति । सा 'उपस्कृतिः'—"समवाये च"—योगभक्तिकर्म्मसमवायः ननु सर्व्वसम्पत् पूर्णसम्पत्तिः । तान्मते इह कौ नु 'उपस्कृतम्' अध्याहृतं वाक्यं न जल्पति, 'उपस्कृतान्नं'—"उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु"—गुणान्तरापादितम् ओदनं न भुङ्क्ते ? योगभक्तिकर्म्मसमवायं विना सर्व्वं साधारणमिति भावः । न केवलं साधारणं तैः पृथक्त्वेनावस्थितैः योगभक्तिकर्म्मभिरहो स्वमात्मानम् 'उपस्कारं'—"किरतौ लवने" "णमुल्"—लुनाति उत्क्षिप्य विनाशयति । पुरा तेषां पृथक्त्वेनावस्थितौ न कापि क्षतिरासीत् कालस्य तत्तत्प्राधान्यसम्भावितत्वादधुना तु न तथा तत्तत्प्रधानसम्प्रदायानां विकार एव तत्र प्रमाणम् ।

२७ । प्रतिस्किरतीति । हे बाल, 'उपस्कारकः' हिंसकः—"हिंसायां प्रतेश्च"—श्रेयः कल्याणमुत्क्षिपन् 'प्रतिस्किरति' हिनस्ति । यथात्र श्वा कुक्कुटो वृषभः 'अपस्किरते'—"अपाच्चतुष्पाच्छकुनिष्वालेखने"—"हर्षजीविकाकुलायकरणेष्विति वाच्यम्" *।"

(ख) अपाच्चतुष्पाच्छकुनिष्वालेखन [ईषत्त्विदम्]।

अपात् किरतौ चतुष्पाच्छकुनिष्वालेखने सुट् कात् पूर्व्वः (६।१।१४१)।

हर्षजीविकाकुलायकरणेष्विति वक्तव्यम्।*।

हर्षजीविकाकुलायकरणेष्वेव किरतेरात्मनेपदोपसंख्यानम्।*।

२८। कुस्तुम्बुरूपस्करणा हि वङ्गै-
भुंज्यन्त एतैरपरस्परास्तैः।
सनारिकेला द्रविड़ैस्तु सूपाः
सर्व्वत्र भिन्ना रुचयो विभान्ति॥

(क) कुस्तुम्बुरूणि जातिः [स्यात् कुस्तुम्बुरुरियं यथा]।

कुस्तुम्बुरूणि जातिः [चेत्] सुट् [निपात्यते]। (६।१।१४२)।

(ख) अपरस्पराः क्रियासातत्ये [यान्त्यपरस्पराः]।

अपरस्पराः क्रियासातत्ये सुट् [निपात्यते] (६।१।१४३)।

२९। गोष्पदं भजनतो गृहौकस-
स्तद्विना तु वनमित्यगोष्पदम्।

---

"हर्षजीविकाकुलायकरणेष्वेव किरतेरात्मनेपदोपसंख्यानम्।*।"—हर्षात् जीविकार्थं कुलायकरणार्थं वा भूमिमालिख्य विक्षिपति, तथा स हिंसया हर्षादिलाभार्थं श्रेयःसमुत्क्षेपणपरो भवति। अस्य हर्षादयः कुक्कुरादीनामिव पशुत्वमात्रव्यञ्जका इति भावः।

२८। कुस्तुम्बुर्व्विति। एतैर्वङ्गैः सूपाः 'कुस्तुम्बुरूपस्करणाः'—"कुस्तुम्बुरूणि जातिः"—धन्याकोपस्करणाः 'अपरस्पराः'—"अपरस्पराः क्रियासातत्ये"—सन्ततमविच्छेदेन भुज्यन्ते, तैः द्रविड़ैस्तु सनारिकेलाः। कथमेवं प्रभेदः?- सर्व्वत्र भिन्नाः रुचयो विभान्ति शोभन्ते। आहारपरिच्छदादयः सामान्यविषया रुचिमनुवर्त्तन्ते न तत्र किञ्चिदुपहास्यं निन्दनीयं वेति भावः।

२९। गोष्पदमिति। भजनतो गृहौकसः गृहस्थस्य भवार्णवो 'गोष्पदम्', तद्विना तु भजनं विना तु 'अगोष्पदम्' गोभिरसेवितं दुरवभेद्यं वनं चेत् एति, तथापि भवाब्धि-

चेद्भवाब्धितरणाय गोष्पद-
मात्रजीर्णतरणेर्न चास्पदम् ॥

(क) गोष्पदं सेवितासेवितप्रमाणेषु [बालक] ।
सेवितासेवितप्रमाणेषु गोष्पदं सुट् [निपात्यते] (६।१।१४४) ।

(ख) [स्यात्] आस्पदं प्रतिष्ठायां [लब्धमास्पदमत्र तैः] ।
आस्पदं प्रतिष्ठायां सुट् [निपात्यते] (६।१।१४५) ।

३० । आश्चर्य्यमेतन्ननु यद्यवस्करा-
त्तरोर्विशेषा फलपुष्पवृद्धिः ।
अपस्करो यस्य जगन्निजार्थं
तस्मिन् स्थितः स्या ननु विष्किरो वा ॥

(क) [स्यात्] आश्चर्य्यमनित्ये [ऽङ्ग] ;—

---

तरणाय 'गोष्पदमात्रजीर्णतरणेः'—"गोष्पदं सेवितासेवितप्रमाणेषु"—गोष्पदपरिमाण-जीर्णतरणेरपि न 'आस्पदम्'—"आस्पदं प्रतिष्ठायाम्"—। गृहस्थोऽपि भजनेनाव-हेलया संसारं तरति, निविड़ं वनं गच्छतोऽपि ईश्वराराधनरूपां भक्तिं विना न केवलं भवार्णवोत्तारासम्भवस्तत्राणुमात्रमप्यस्य नास्त्यधिकार इति समुदायार्थः ।

३० । आश्चर्य्यमिति । 'आश्चर्य्यम्'—"आश्चर्य्यमनित्ये"—एतन्ननु, यद्यि 'अव-स्करात्'—"वर्च्चस्कोऽवस्करः"—वर्च्चस्कात् तरोः वृक्षस्य विशेषा फलपुष्पवृद्धिः। असार-मलात् सारोत्पत्तिः विस्मयकरी । एतेन परमेश्वरनिर्भरतो दुःखात् सुखोत्पत्तिर्ध्वनिता । यस्य जगत् 'अपस्करः'—"अपस्करो रथाङ्गम्"—रथारम्भककाष्ठम् । पराधिष्ठानवशा-ज्जगतस्तथात्वम् । तच्छक्तिरेव जगतो धारणे गत्युत्पादने च कारणमतोऽस्य केवलमप-स्करत्वं न तु कुवरत्वं चक्रत्वं वा । तस्मिन् परमेश्वरे स्थितः नन्ववश्यं निजार्थं 'विष्किरो'

(ख) वर्चस्कोऽवस्करः [शुभ] ।

अनित्ये आश्चर्यं [निपात्यते] (६।१।१४६) ।

वर्चस्केऽवस्करो [निपात्यते] (६।१।१४७) ।

(ग) अपस्करो रथाङ्गं [स नारुचत्तमपस्करम्] ।

अपस्करो [निपात्यते] रथाङ्गं [चेत्] (६।१।१४८) ।

(घ) [बाल] विष्किरः शकुनिर्विकिरो वा [च विष्किरः]।

विष्किरो [निपात्यते] शकुनिर्विकिरो वा [चेत्] (६।१।१४९) ।

२१ । प्रतिष्कशोऽपि प्रस्कण्वो हरिश्चन्द्र इति स्मयः ।
ऋषित्वं किमु नाम्ना स्यान्मस्करेण न मस्करी ॥

(क) [स्यात्] प्रतिष्कशश्च कशेः [पुरोयायी प्रतिष्कशः] ।

कशेः प्रतिष्कशश्च सुट् [निपात्यते] (६।१।१५१) ।

(ख) [भो] प्रस्कण्वहरिश्चन्द्रावृषी [वेदविदां वरौ] ।

प्रस्कण्वहरिश्चन्द्रावृषी [चेत्] सुट् [निपात्यते] (६।१।१५२)।

---

या—"विष्किरः शकुनिर्विकिरो वा"—विहग इव स्याः । विहगा आत्मभरणपोषणादौ स्वभावतो निश्चिन्तास्त्वन्तु परमेश्वरस्य विचित्रशक्तिं विज्ञाय तथा भवेति पूर्व्वापरसम्बन्धः ।

२१ । प्रतिष्कश इति । 'प्रतिष्कशो'ऽपि—"प्रतिष्कशश्च कशेः"—वार्त्तापुरुषोऽपि 'प्रस्कण्वः' 'हरिश्चन्द्र' इति—"प्रस्कण्वहरिश्चन्द्रावृषी"—स्मयः अहं नाम्ना प्रस्कण्वः हरिश्चन्द्र इत्यभिमानः । ऋषित्वं किमु नाम्ना स्यात् ? ऋषिनाम्ना न कस्यापि तद्गुणसम्पन्नत्वं सम्भवत्यतोऽस्य वृथा गर्व्व इति भावः । तदेव वाक्यान्तरेण दर्शयति—'मस्करेण' वेणुना न 'मस्करी'—"मस्करमस्करिणौ वेणुपरिव्राजकयोः"—परिव्राजकः । न नामवेशाभ्यां कस्यापि कृतार्थता, तद्भावभावितत्वेनैवेति समुदायार्थः ।

(ग) मस्करमस्करिणौ वेणुपरिव्राजकयोः [शिशो] ।

वेणुपरिव्राजकयोर्मस्करमस्करिणौ [निपात्येते] (६।१।१५३) ।

२२ । कास्तीरं नाम नगरमजस्तुन्दं कुतो गतम् ।
कारस्करः स्नायुहितः कीर्त्त्या पारस्करोऽमरः ॥

(क) कास्तीराजस्तुन्दे नगरे [गच्छति स कास्तीरम्] ।

कास्तीराजस्तुन्दे [निपात्येते] नगरे (६।१।१५४) ।

(ख) कारस्करो वृक्ष [एष कारस्करफलोपमः] ।

कारस्करः [निपात्यते] वृक्षः [चेत्] (६।१।१५५) ।

(ग) [बालस्यात्] पारस्करप्रभृतीनि च संज्ञाया [मह्]।

पारस्करप्रभृतीनि च संज्ञायां [निपात्यन्ते] (६।१।१५६) ।

२३ । बुद्ध्या बृहस्पतिश्चेन्न तस्करः सत्सु सङ्गमीयेत ।
प्रायश्चित्तं त्यागो गोरिव य इह प्रस्तुम्पति हि ॥

---

२२ । कास्तीरमिति । ईषत्तीरयुक्तं 'कास्तीरं' नाम नगरम् अजस्य तुन्दमिव नगरवासिनां तुन्दं यस्मिन् तन्नामधेयम् 'अजस्तुन्दम्'—"कास्तीराजस्तुन्दे नगरे"—नगरं कुतो गतम् । नगरादिकं सर्व्वमनित्यमिति भावः । 'कारस्करः'—"कारस्करो वृक्षः"—विषतिन्दुः स्नायुहितः स्नायुविकारप्रशमनस्तद्बलविधायकः । 'पारस्करः'—"पारस्करप्रभृतीनि च संज्ञायाम्"—गृह्यसूत्रप्रणेता मुनिविशेषः कीर्त्त्या तत्सूत्रप्रणयनजनितयाऽमरो मरणधर्म्ममतिक्रम्य सर्व्वजनविदितोऽवतिष्ठत इत्यर्थः ।

२३ । बुद्ध्येति । चेद्यदि बुद्ध्या 'बृहस्पतिः' तत्तुल्य इत्यर्थः न 'तस्करः'—"तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च । * ।"—सत्सु साधुषु सङ्गं सहवासम् ईयेत प्राप्नुयात् । यो गौरिह हि 'प्रस्तुम्पति'—"प्रात् तुम्पतौ गवि कर्त्तरि । * ।"—प्रतिघातेन





तद्बृहती: करपत्योर्योरदेवतयो: सुट् तलोपश्च । ॐ ।
प्रात तुम्पतौ गवि कर्त्तरि । * ।
प्रायस्य चित्तिचित्तयो: सुड़स्कारो वा । * ।

इति दृष्टान्तसर्व्वस्वे दृष्टान्तानुगमने संहितायां
तृतीयं प्रकरणम् ।

---

## समासाश्रयविधि-घटिता संहिता ।

३४ । यदोपगूढ़ं तमसास्य चित्तं
नरस्य नीरागभवो विवेक: ।
कुत: स वोढ़ा किमु सम्पदां वा
परोदयस्यापि च सुष्ठु सोढ़ा ॥

---

जनान् मृत्युमुखं नयति, तस्य गोत्याग इव त्याग: 'प्रायश्चित्तम्'—"प्रायस्य चित्तिचित्तयो: सुड़स्कारो वा । ॐ ।"— । नैष त्याग: प्रेमशून्य: किन्तु शोधनायातएव नात्यन्तिको बोध्य: । इति दृष्टान्तव्याख्यायां तृतीयं प्रकरणम् ।

---

३४ । यदेति । यदास्य नरस्य चित्तं तमसा विषयान्धकारेण 'उपगूढ़म्', तदा कुत: 'नीराग'भव:—"ढ्रलोपे पूर्व्वस्य दीर्घोऽण:"—विषयासक्तिशून्यताजनितो विवेक: । स किमु सम्पदां 'वोढ़ा' वहनकर्त्ता, परोदयस्य परेषाम् अभ्युदयस्यापि च सुष्ठु 'सोढ़ा' "सहिवहोरोदवर्णस्य"—सहनचम: ? विषयनिमग्नस्य विवेकवाणीश्रवणं दुर्लभं तद्विना तु नापि सम्पत्, नापि पराभ्युदयसहनचमता । यद्यप्ययं दृष्टान्तो न संहितान्तर्गतस्तथाप्यनुवृत्त्यनुरोधादत्र निविष्ट: । अस्य परवर्त्तिप्रकरणे प्रयोजनमस्ति । अत

(क)　[बाल] ढ्रलोपे पूर्व्वस्य दीर्घोऽणो [लीढ़ नीरसम्] ।

ढ्रलोपे पूर्व्वस्य अण: दीर्घः । (६।३।१११) ।

(ख)　[बुद्धिमन् सग्रात्] सहिवहोरोदवर्णस्य [सोढुमैत्] ।

ढ्रलोपे सहिवहो: अवर्णस्य ओत् । (६।३।११२) ।

३५ ।　विष्टकर्णोऽष्टकर्णोऽथ पञ्चकर्णोऽत्र कल्पते ।
मणिकर्णो भिन्नकर्णश्छिन्नकर्णोऽङ्ग मानवैः ॥
छिद्रकर्णः स्रुवकर्णः पशुः स्वस्तिककर्णकः ।
दात्राकर्णः स्वामिविज्ञापनार्थं किं वयं तथा ॥

(क)　संहिताया [मधिकृतिः समासाश्रयसङ्गता] ।

(६।३।११४)

(ख)　[सग्रात्] कर्णे लक्षणस्याविष्टा-
ष्टपञ्चमणिभिन्नच्छिन्नच्छिद्र-
स्रुवस्वस्तिकस्य [दात्राकर्णः] ।

---

एवाधुनिकवैयाकरणैः "रो रे लोपो धातोर्ढो ढे तत्पूर्व्वस्य च दीर्घता"इति सूत्रं निरमायि । ननु चरमदृष्टान्तस्याप्यनुवृत्त्यनुरोधादन्यत्र निवेशयोग्यता, तदभावे कथं नास्य प्रकरणस्य समासप्रकरणे सन्निवेशः ? संहितायामित्यधिकारस्य प्राधान्यादत्र निवेशः, तदेवं पूर्व्वमेव समासाश्रयविधिज्ञानलाभान्न कापि क्षतिः ।

३५ । विष्टकर्ण इति । अङ्ग हे शिशो, अत्र स्वामिविज्ञापनार्थं कस्य स्वामिनोऽयमिति ज्ञापनार्थं पशुः विष्टकर्णः अष्टकर्णः पञ्चकर्णः मणिकर्णः भिन्नकर्णः छिन्नकर्णः छिद्रकर्णः स्रुवकर्णः स्वस्तिककर्णः दात्राकर्णः—"कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य"—मानवैः कल्प्यते, वयं किं तथा ? स्वामिविज्ञापनार्थं चिह्नविशेषं धारयामेति भावः । अहमीश्वरस्येति विज्ञापनाय लिङ्गविशेषधारणं तुच्छमिति फलितार्थः ।

अ-विष्टा ष्ट-पञ्च मणि-भिन्न च्छिन्न-च्छिद्र स्रुव-स्वस्तिकस्य लक्षणस्य कर्णे दीर्घः स्यात् । (६।३।११५) ।

३६ । विलसदुपानतेह जनसङ्कुलनीवृति सैन्यमाविश-
दुपगतप्रावृषि प्रतिपथं हृदयाविदनेन नीरुचः ।
विपणिपणा विलुण्ठनहताः किमृतीषड़हो न दूयते
त इह परीततोऽङ्ग कथयन्ति हि बर्व्बरकाल-
संस्थितिम् ॥

(क) [बाल] नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वा-
[वुपानत्] ।

नहि-वृति-वृषि-व्यधि-रुचि-सहि-तनिषु क्वौ दीर्घः संहितायाम् । (६।३।११६) ।

---

३६ । विलसदिति । 'उपानता' पादत्राणेन विलसत्, एतेन सभ्याभिमानः सूचितः, अथच हृदयानि विध्यतीति 'हृदयावित्' सैन्यं जनसङ्कुल'नीवृति' बहुजन-समाकीर्णजनपदे इह उपगत'प्रावृषि' उपस्थितप्रावृट्काले प्रतिपथम् आविशत् । प्रविश्य किं कृतम् ? अनेन सैन्येन 'नीरुचः' अत्युज्ज्वलाः विपणिपणाः—पणाः निलयाः सम्पत्तयः क्रयविक्रयादिकारकाः—विलुण्ठनहताः विलुण्ठनैर्विलुण्ठने च हताः विनष्टाः जनपण्यशून्यत्वात् केवलं भग्नगृहमात्रावशेषाः कृताः । किम् 'ऋतीषड्' अरातीनां सोढ़ा न दूयते एवम्भूतेन दुःखेन न दुःखितो भवति ? अवश्यमेव भवतीति शेषः । अङ्ग हे बाल, 'परीततः'—"नहि-वृति-वृषि-व्यधि-रुचि-सहि-तनिषु क्वौ"—सर्व्वतो विसरणशीला इह ते पणाः हि निश्चितं बर्व्बरकालसंस्थितिं कथयन्ति । धन-द्रविणादीनपहृत्य जनस्थानान्यपि दुरवस्थितान्यकार्षीदतो नायं सभ्यसमयोचितव्यव-हारी बर्व्बरकालसङ्गत एवेति वृथा तद्गर्व्वः । अनेन चातोऽयं कालः, न तु ज्ञान-प्रेमोत्साहप्रधानो ब्राह्म इति सूचितः । पञ्चकावलीवृत्तमेतत्—"नजभजजा जरा"विति लक्षणात् ।

३७। कोटरावणमासाद्य जनः किंशुलकागिरिम्।
न तपस्वी, मनःस्थैर्य्याद्गृहे धन्यः कृषीवलः॥

(क) वनगिर्य्योः संज्ञायां कोटरकिंशुलकादीनां [दृ]।

वनगिर्य्योः कोटर-किंशुलकादीनां संज्ञायां दीर्घः। (६।३।११७)।

(ख) वले [कृषीवलो धन्यः सारल्यात् प्रकृतिः शिशो]।

वले पूर्व्वस्य दीर्घः। (६।३।११८)।

३८। उत्साहवलः प्रबलो न भ्रातृवलः पितृवलो वा।
अन्तस्तेजो नियतं ज्ञेयं सर्व्वत्र सम्पदां हेतुः॥

अनुत्साहभ्रातृपितॄणाम्। *।

३९। मोदतेऽमृततां प्राप्य यत्र ज्ञेयामरावती।
किमजिरवती नेयं यत्र भोग्येषु संरताः॥

---

३७। कोटरेति। 'कोटरावण' कोटरप्रधानं वनं 'किंशुलकागिरिं'—"वनगिर्य्योः संज्ञायां कोटरकिंशुलकादीनाम्"—पलाशप्रधानपर्व्वतम् आसाद्य समाश्रित्य न तपस्वी। मनःस्थैर्य्यात् इन्द्रियचाञ्चल्यविरहितमनस्त्वात् गृहे 'कृषीवलः'—"वले"—कृषकः धन्यः। मनःस्थैर्य्यमेव तपस्यान्यथा वृथैव वनाश्रय इति भावः।

३८। उत्साहेति। 'उत्साहवल.' उत्साहवान् प्रबलः, न 'भ्रातृवलः' भ्रातृमान् न 'पितृवलः'—'अनुत्साहभ्रातृपितॄणाम्। *।"—पितृमान्। कथम्? नियतं सर्व्वदा अन्तस्तेजः अन्तःकरणस्य बलं सर्व्वत्र सम्पदां हेतुः ज्ञेयम्। न कोऽपि परबलेन बलवान् किन्त्वात्मबलेनेति निष्कर्षः।

३९। यत्र अमृततां परमां गतिं प्राप्य मोदते सा 'अमरावती'—"मतौ बह्वचोऽनजिरादीनाम्"—अमृतत्वलाभेनामराणां निवासभूमिर्ज्ञेया। किं नेयम् 'अजिरवती' तन्नामधेया नगरी यत्र भोग्येषु स्रक्चन्दनादिभोगविलासेषु रताः? पौराणिकैर्वर्णिता भोगाधिष्ठानामरावती न त्वमरावती किन्तु पार्थिवनगर्य्यजिरवत्येव चयशील-

(क) [स्यान्] मतौ बह्वचोऽनजिरादीनां [मशकावती]।

मतौ बह्वचोऽनजिरादीनां दीर्घः संज्ञायाम्। (६।३।११९)।

४०। शरावतीतटे रम्ये ध्यानं धन्यमृषीवहम्।
न पिण्डवहसंस्थानं न पीलुवहदक्षिणा॥

(क) शरादीनाञ्च [विज्ञेया यथा वंशावती शुभा]।

शरादीनाञ्च मतौ दीर्घः संज्ञायाम्। (६।३।१२०)।

(ख) [कल्याणे] कौ वहेऽपीलो [र्वनञ्चैतत् कपीवहम्]।

अपीलोरिकी वहे दीर्घः। (६।३।१२१)।

४१। स्रोती दारुवहञ्चेत्तृणसंछेदि नितरां न तस्य रयः।
कालस्य जातु तुलनां वहति जनायुर्हरस्यास्य॥

अपीलादीनामिति वक्तव्यम्।*।

---

त्वात्। शीघ्रगमनशीलत्वद्योतकाजिरशब्दं गर्भीकृत्यामरावतीवैपरीत्यं प्रदर्शितम्। अजिरः पुम्-ऋषिभेदे तन्निवासभूमिरजिरवतीत्यनुमीयते। नदीनाम्नि तु स्त्री। साधारणतोऽजिरशब्देन चत्वरमभिधीयते।

४०। शरावतीति। रम्ये 'शरावती'तटे—"शरादीनाञ्च"—'ऋषीवहम्'—"इकी वहेऽपीलोः"—ऋषिवाहकम् ऊर्द्धभूमिनयनदक्षं ध्यानं धन्यम्। 'पिण्डवह'-संस्थानं देहरचकसंस्थानं न धन्यम्, पशूनामपि तन्निरतत्वात्। न पीलुवहदक्षिणा दिक् धन्या। पीलुः कौङ्कणदेशख्यातगुड़फलवृक्षस्तद्वहा दक्षिणा दिक् न धन्या अन्यत्रापि तादृग्गदहरतरुनिचयसद्भावात्।

४१। स्रोत इति। चेद्यदि स्रोती 'दारुवहम्'—"अपीलादीनामिति वक्तव्यम्। *।"—नितराम् अत्यर्थम् तृणसंछेदि, एवं तीव्रवेगवद्यत् मुष्टिगता तृणराजिः संछिन्ना भवति। न तस्य स्रोतसो रयो वेगः जातु कदाचित् जनायुर्हरस्यास्य कालस्य तुलनां वहति, तदपेक्षयास्य शीघ्रगामित्वात्।

४२ । वीमार्गगो जनो नित्यं निषाद इव दोषभाक् ।
सद्गुणानां प्रसारो हि सत्पथाश्रयिणः सदा ॥

(क) [स्यात्] उपसर्गस्य घञ्यमनुष्ये बहुलं [शिशो] ।

उपसर्गस्य घञि अमनुष्ये बहुलं दीर्घः । (६।३।१२२) ।

४३ । प्रासादः प्राकारो न हेतुरिह हि प्रसादस्य ।
स रिपुप्रतिवेशवसतिजनितातिचरणप्रतीरोधात् ।

सादकारयोः कृत्रिम इति वाच्यम् । * ।

प्रतिवेशादीनां विभाषा दीर्घत्वं वाच्यम् । * ।

४४ । वीकाशो हट्टनीकाशो यस्य चित्तमसंयतम् ।
परे परीत्तचित्तन्तु प्रत्तावकाशपत्तनम् ॥

---

४२ । वीमार्गग इति । 'वीमार्गगः'—"उपसर्गस्य घञ्यमनुष्ये बहुलम्"—विपरीतपथगामी धर्म्मपथाद्विच्युतो जनः 'निषादः' निषीदत्यस्मिन् पापमिति निषादश्चाण्डाल इव नित्यं दोषभाक् दोषभाजनम् । दौवारिकवाचकप्रतीहारशब्दे तु "प्रतीहारो द्वारं तत्स्थात् ताच्छब्द्य"मिति मनोरमा । सत्पथाश्रयिणो जनस्य हि निश्चितं सदा सद्गुणानां प्रसारो विस्तृतिः क्रमोन्नतिरित्यर्थः ।

४३ । प्रासाद इति । इह हि 'प्रासादः' "चतुर्भागीकृते चैत्रे भित्तिर्भागेन विस्तरात् । अद्रिभागेन गर्भः स्यात् पिण्डिका पादविस्तरात् ॥" इत्यादिलक्षणयुक्तो नृपनिवासः, 'प्राकारः' प्राचीरादिः न 'प्रसादस्य'—"सादकारयोः कृत्रिम इति वाच्यम् । * ।"—चित्तप्रसन्नतायाः हेतुः । स प्रसादः रिपूणां प्रतिवेशवसतिः प्रत्यासन्ननिवासस्तज्जनितानामतिचरणानां प्रतीरोधात्—"प्रतिवेशादीनां विभाषा दीर्घत्वं वाच्यम् । * ।"—आत्मसंयमादिभिरेवायं सम्भवति ।

४४ । वीकाश इति । यस्य चित्तम् असंयतं तस्य 'वीकाशः' हर्षादिः हट्ट-'नीकाशः'—"इकः काशे"—हट्टसदृशः आगमापायजर्ज्जरितः परमार्थशून्यः । परे पर-

(क) [वाले]कः काशि[ऽनूकाशोऽङ्ग यथा प्रकाशोऽयम्] ।

इकः काशे दीर्घः । (६।३।१२३) ।

(ख) दस्ति [नीत्तं यथा वित्तमवत्तं प्रत्तमुत्तम] ।

दः ति इकः दीर्घः । (६।३।१२४) ।

४५ । अष्टापदैर्बद्धमतिर्विनष्टो
न जात्वसावेकचितीक आसीत् ।
विश्वावसावस्य मनो न विश्वा-
राड्‌त्र वैश्वानरवत् प्रविष्टः ॥

---

मेश्वरे 'परीत्त'चित्तन्तु—"दस्ति"—सम्यङ्‌निष्ठासम्पन्नहृदयन्तु 'प्रत्ता'वकाशपत्तनं सुवि-स्तीर्णमहानगरम् । तत्र हर्षादयो देवगुणाः "यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्व्वैर्गुणै-स्तत्र समासते सुराः" इति न्यायात् चिरनिवसतिं कुर्व्वन्ति ।

४५ । 'अष्टापदैः'—"अष्टनः संज्ञायाम्"—स्वर्णैर्बद्धमतिस्तदधीनबुद्धिर्विनष्टः । कथम् ? न जातु असौ एकचितीकः—"चितेः कपि"—एकत्वावस्थितचेतनः "हराव-भक्तस्य कुतो महद्‌गुणा मनोरथेनासति धावतो बहिः" इति न्यायात् परिभ्रष्टनिखिल-सद्गुणः । नायं चितिशब्दो ब्राह्मणादौ प्रसिद्ध इष्टकाभेदादौ "पञ्चचितिकोऽग्नि"रित्यादौ दीर्घाभावात् । अस्य जनस्य 'विश्वावसौ' गन्धर्व्वभेदे मनः आसीत् । यत्रादितिजन्म-शीलोऽयमधुना तु प्रेतासक्तचेताः धनादिलाभार्थं तदाराधननिरतः । अत्र जने 'विश्वा-राट्'—"विश्वस्य वसुराटोः"—परमेश्वरः 'वैश्वानर'वत्—"नरे संज्ञायाम्"—वैश्वानरस्तु विश्वानराज्जन्मासाद्याग्निलोकाधिपत्यं चकारेति कथा काशीखण्डादवगन्तव्या, अनलवत् न प्रविष्टः । ईश्वरोऽस्मिन् प्रच्छन्नस्तिष्ठति न प्रज्वलदग्निराशिवदाविर्भूत इत्यर्थः । ईश्वरा-विष्टचित्तो न कदापि विषयासक्तः प्रेताद्याराधनानिरतो भवितुमर्हति, अतोऽस्य जीवन-मेव तद्विपरीतप्रमाणं दर्शयति ।

४६ । अष्टाकपालमिह चेद्गविरष्टागवमथात्र शकटं ते ।
आमुष्मिकमथवैहलौकिकमतुलसुखमेधते नैतैः ॥

(क) [स्यात् कल्याणा]ष्टनः संज्ञाया[मष्टावक्र एष भोः] ।

संज्ञायाम् अष्टनः दीर्घः । (६।३।१२५) ।

गवि च युक्ते भाषायामष्टनो दीर्घो भवतीति वक्तव्यम् । * ।

(ख) चितेः कपि [त्रिचितीको द्विचितीको यथा शुभ] ।

कपि चितेः दीर्घः । (६।३।१२७) ।

(ग) विश्वस्य वसुराटोः [स्याद्विश्वाराट् विश्वभावनः] ।

वसुराटो. विश्वस्य दीर्घः । (६।३।१२८) ।

(घ) नरे संज्ञाया[मभवद्वैश्वानरिरिहोत्तम] ।

संज्ञायां नरे विश्वस्य दीर्घः । (६ ३।१२९) ।

४७ । विश्वामित्रोऽपि तपसा चाण्डालीप्रसवो मुनिः ।
वर्णभेदविवादैः किं मृषा तत्र कचाकचि ॥

---

४६ । अष्टाकपालमिति । इह चेत् ते तव 'अष्टाकपालम्'—"अष्टनः कपाले हविषि"—अष्टसु कपालेषु संस्कृतं हविः, अथात्र 'अष्टागवम्'—"गवि च युक्ते भाषायामष्टानां दीर्घो भवतीति वक्तव्यम् । * ।"—अष्टभिर्गोभिर्युक्तं शकटं ; न एतैर्वाह्योपकरणैः आमुष्मिकं पारलौकिकम् अथवैहलौकिकम् अतुलसुखं तुलनाविरहितब्रह्मसंस्पर्शसुखम् एधते । एतत्सर्व्वं हेयमिति भावः ।

४७ । विश्वामित्र इति । चाण्डालीप्रसवः चाण्डालीगर्भसम्भूतः "चाण्डालीगर्भसम्भूतो विश्वामित्रो महामुनि"रिति वज्रसूच्युपनिषत् 'विश्वामित्रोऽ'पि—"मित्रे चर्षौ"—तपसा मुनिः ब्राह्मणश्रेष्ठः । वर्णभेदविवादैः किम् ? मृषा वृथा तत्र 'कचाकचि' केशाकेशि—"अन्येषामपि दृश्यते"— । "यस्य यल्लक्षणं प्रोक्तं पुंसो वर्णाभिव्यञ्जकम् ।

(क) मित्रे चर्षौ [यथा विश्वामित्रोऽप्यासीन्महामुनिः]।

ऋषौ मित्रे विश्वस्य दीर्घः। (६।३।१३०)।

(ख) [जलाषाड़थ केशाकेशि] न्येषामपि दृश्यते।

अन्येषामपि दीर्घो दृश्यते। (६।३।१३१)।

४८। श्वादन्तान्नियतं त्वमात्मानं रक्षाङ्ग नितराम्।
मत्तानां विषदन्तैर्बहुलो मृत्युमुपैति मनुजः॥

शुनी दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु। *।

४९। न प्राचाद्भ्रियते मौढ्यान्मधुशब्दाद्धलाहलः।
कौमुदगन्धीपुत्रोऽयं कल्पनाद्वेत्तसम्भवः॥

(क) चौ [दधीचा यथा बाल];—

चौ दीर्घः। (६।३।१३८)।

(ख) [स्यात्] सम्प्रसारणस्य [भो]।

सम्प्रसारणस्य दीर्घः। (६।३।१३९)।

इति दृष्टान्तसर्वस्वे दृष्टान्तानुगमने संहितायां समासाश्रयविधि-
घटितसंहितानुकथनं नाम चतुर्थं प्रकरणम्।



---

यदन्यत्रापि दृश्येत तत्तेनैव विनिर्दिशेत्॥" इति न्यायादब्राह्मणादिकुले जन्मनो व्यर्थत्वमिति भावः।

४८। श्वादन्तादिति। अङ्ग हे बालक, त्वं नियतं श्वादन्तात्—"शुनी दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु। *।"—कुक्कुरदन्तादात्मानं रक्ष। कथम्? मत्तानां कुक्कुराणां विषदन्तैर्बहुलो बहुसंख्यको मनुजो मनुष्यो मृत्युमुपैति।

४९। नेति। मौढ्यात् मूढ़तावशतः मधुशब्दात् मधुशब्दसाहाय्यात् 'प्राचा'—

# हल्विसर्ज्जनीयाश्रया ।

५० । महानसि त्वद्रहिता च संस्क्रिया
न पुंश्चलीवास्य हरेत मानसम् ।
हरेऽनयांश्छेदयितात्र सेवकान्
नॄंपासि कांस्कान् न पुनस्तवानुगान् ॥

(१) तयोर्य्वावचि संहितायाम् [अतः सानुवर्त्तते] ।
इत्यधिकार आध्यायपरिसमाप्तेः (८।२।१०८) ।

(२) मतुवसो रु सम्बुद्धौ छन्दसी[तो रु वर्त्तते] ।

(क) अत्रानुनासिकः पूर्व्वस्य तु वा [धिक्कृतिः स्मृता] ।
अत्र रोः पूर्व्वस्य तु अनुनासिको वा (८।३।२) ।

---

"चौ"—मद्यरूपी हलाहलो नाद्रियते । मधुशब्देनात्र मधु प्राश्नीमीति नवीनानां भ्रान्तिर्वस्तुतस्तु नैतन्मधु प्राणान्तिकविषमेव । "ये गुणास्तु विषे प्रोक्तास्तेऽपि मद्ये व्यवस्थिताः" इति वैद्यकात् । अयं 'कौमुदगन्धीपुत्रः'—कुमुदस्येव गन्धोऽस्य कुमुदगन्धिस्तस्यापत्यं कौमुदगन्धीपुत्रः प्रयोग इति शेषः कल्पनाचित्रसम्भवः कविकल्पनाप्रसूतः ।

इति दृष्टान्तव्याख्यायां चतुर्थं प्रकरणम् ।

---

५० । महानिति । हे हरे त्वं 'महानसि'—अत्र महां असीति यत्पदं सम्भवति तत् छान्दसम्—त्वद्रहिता च 'संस्क्रिया'—"समः सुटि"—देशसंस्कारः 'पुंश्चली'व—"पुमः खय्यम्परे"—अस्य जनस्य मानसं न हरेत । 'अनयांश्छेदयिता'—"नश्छव्यप्रशान्"—अनीतीश्छेदयिता त्वमत्र 'कांस्कान्'—"कानाम्रेडिते"—तवानुगान् सेवकान् 'नॄंपासि'—"नॄं पे"—न पुनः ? पास्येवेत्यर्थः ।

(ख) [स्यात्] अनुनासिकात् परोऽनुस्वारः [संस्क्रिया यथा]।

अनुनासिकात् [अनुनासिकं विहाय] रोः पूर्व्वस्मात् परोऽनुस्वारः (८।३।४)।

(ग) समः सुटि [स्यात् संस्कर्त्ता] ;—

सुटि समोरुः (८।३।५)।

(घ) पुमः खय्यम्परे [पुंस्पुंशी]।

अम्परे खयि पुमः रुः। (८।३।६)।

सं-पुं-कानां सो वक्तव्यः। *।

(ङ) [स्यान्] नश्छव्यप्रशान् [बाल] ;—

अप्रशान् नः अम्परे छवि रुः (८।३।७)।

(च) नॄंपे [नॄं पाहि बालक]।

पे नॄन् रुः (८।३।१०)।

(छ) कानाम्रेड़ित [एह्यत्र कांस्कान् भोजयसि प्रिय]।

आम्रेड़िते कान् नः रुः (८।३।१२)।

५१। लीढं विषं सोढ़ुमलं स वोढ़ा
नीरन्ध्ररागस्तपसा विमुक्तः।

---

५१। लीढ़मिति। स 'वोढ़ा' सर्व्वदुःखानां वहनकर्त्ता 'लीढ़'—"ढो ढे लोपः" —आस्वादितं सर्व्वैरिति शेषः विषं संसारदत्तहलाहलं 'सोढुम्' अलं समर्थः। कथमस्य तादृगलौकिकसामर्थ्यम्? 'नीरन्ध्ररागस्तपसा विमुक्तः'—"रो रि"—"खरवसानयोर्विसर्ज्जनीयः"—सान्द्रानुरागो जनः तपसा विषयानुरागविलोपकसाधनेन विषयपाशविमुक्तः। 'यशःसु'—"रोः सुपि"—'भो यस्य यएष तुच्छबोधो हि असौ अस्तु' —"भो भगो अघो अपूर्व्वस्य योऽशि"—"व्योर्लघुप्रयत्नतरः शाकटायनस्य"—"लोपः शाकल्यस्य"—यस्य यशःसु यएष तुच्छबोधः सोऽसौ तुच्छबोधस्तस्य अस्तु वर्त्तताम्।

यशःसु भो यस्य य एष तुच्छ-
बोधो ह्यसावस्तु अघो अदीनः ॥

(क) ढो ढे लोपो [यथा गूढ़म्] ;—

ढ ढो लोपः (८।३।१३) ।

(ख) रो रि [सोऽग्नीरथो यथा] ।

रि रो लोपः (८।३।१४)

(ग) खरवसानयोर्विसर्ज्जनीयो [गौस्तरत्यसौ] ।

रः खरवसानयोः विसर्ज्जनीयः (८।३।१५) ।

(१) विरामोऽवसानं [विवेको विवेकि-
प्रियो ह्येष ईशोद्भवोऽयं निदेशः] ।

(घ) रोः सुपि [बाल नितरां पयःसु मा प्लवस्व भोः] ।

रोः सुपि विसर्ज्जनीयः (८।३।१६) ।

(ङ) [स्याद्]भो भगो अघो अपूर्व्वस्य योऽशि [प्रिया ददुः]।

भो भगो अघो अपूर्व्वस्य रः अशि यः (८।३।१७) ।

(च) व्योर्लघुप्रयत्नतरः शाकटायनस्य [शिशो] ;—

शाकटायनस्य [मते] व्योः पदान्तयोः भोभगो अघो अपूर्व्वस्य अशि लघुप्रयत्नतर आदेशः (८।३।१८) ।

(छ) लोपः शाकल्यस्य [भवेत्] ;—

व्योः पदान्तयोः अपूर्व्वयोः लोपः शाकल्यस्य [मते] अशि (८।३।१९) ।

---

किमनेन स भविष्यति ? 'अघो अदीनः'—"भोती गार्गस्य"—कातर्थ्यविरहितः । न कदाप्ययं पराभवमागमिष्यतीति भावः ।

(ज) ओतो गार्ग्यस्य [भो इदम्] ।
ओतौ यस्य लोपो गार्ग्यस्य [मते] अशि (८।३।२०) ।

(१) पूर्व्वत्रासिद्ध [अस्मा उद्धर द्वा अत्र तिष्ठतः]। (८।२।१)
अनुवृत्त्यनुरोधात्——

(२) न मुने [सोऽमुना भाति विद्वत्तम वृत्तानघ] ।
सिज्लोप एकादेशे सिद्धो वक्तव्यः । * ।
निष्ठादेशः षत्वस्वरप्रत्ययविधीड्विधिषु सिद्धो वक्तव्यः । * ।
वृतविकारस्तुग्विधौ छे सिद्धो वक्तव्यः । * ।
श्चुत्वं धुटि सिद्धं वक्तव्यम् । * ।
अभ्यासजश्त्वचर्त्वे एत्वतुकोः सिद्धे वक्तव्ये । * ।
द्विर्वचने परसवर्णत्वं सिद्धं वक्तव्यम् । * ।
पदाधिकारश्चेद्रुत्वनत्वषत्वनलत्वपत्वणत्वानुनासिकच्छत्वानि सिद्धानि वक्तव्यानि।*।

५२ । स उ एको भगो याति पारं सर्व्वा विपत्तयः ।
न बाधन्ते कदाचित्तं विषमप्यमृतं ततः ॥

(क) [स्यात्] उञि च पदे [वाल स उ एकाग्निरेव हि] ।
अपूर्व्वयोः व्योः पदान्तयोः लोपः उञि च पदे (८।३।२१) ।

(ख) हलि सर्व्वेषा [भाचार्य्या यान्ति भो याति सैनिकः]
हलि भो भगो अघो अपूर्व्वस्य यस्य [पदान्तस्य] लोपः सर्व्वेषां [मते] (८।३।२२)।

---

५२ । स इति। स पूर्व्वोक्तजनः 'उ एकः'—"उञि च पदे"—पारं 'भगो याति' ; 'सर्व्वा विपत्तयः'—"हलि सर्व्वेषाम्"—कदाचित् 'तं' न—"मोऽनुस्वारः" —बाधन्ते । 'विषमपि' ततः तुच्छबोधात् 'अमृतम्'। लोकदृष्टिमवमत्य केवलमीश्वर-दृष्टेरधीनोऽतोऽस्य सर्व्वमसम्भवं सम्भवति ।

(ग) मोऽनुस्वारो [वनं याति वनमन्यद्विहाय सः] ।

मः अनुस्वारः हलि (८।३।२३) ।

५३ । यशांसि नंस्यन्ति न वेत्यपीच्छां
न जातु सम्राड् हृदये दधाति ।
क्षुद्रोऽप्यहो किम्ह्मलयत्यमुष्य
रिपुर्न चित्तं ह्मलितं मरत्वात् ॥

(क) नश्चापदान्तस्य झलि [सूर्य्यो ह्याक्रंस्यते यथा] ।

नः मश्च अपदान्तस्य झलि अनुस्वारः (८।३।२४) ।

(ख) [स्थान्] मो राजि समः क्वौ [स साम्राज्यं भुक्तवान् पुरा] ।

समो मः राजि क्वौ (८।३।२५) ।

(ग) [कल्याण] हे मपरे वा [कथम्ह्मलयसि प्रभो] ।

मपरे हे मः वा (८।३।२६) ।

५४ । स्वो वा किंय्ह्योवासीत्
सुखमुत किंव्ह्वलयति न हृदयम् ।

---

५३ । यशांसीति । न वा 'यशांसि' 'नंस्यन्ति'—"नश्चापदान्तस्य झलि"—अवनतानि भविष्यन्तीत्यपीच्छां जातु कदाचित् 'सम्राड्'—"मो राजि समः क्वौ"—हृदये न दधाति । ऐहलौकिककीर्त्त्याद्यर्थं व्यतिव्यस्ता जना उच्चतमस्थानलाभेऽपि न भयशून्यास्तद्धानिसम्भवसद्भावात्, परमात्मनि रतास्तु न तथा । क्षुद्रोऽपि रिपुः शत्रुः अहो अमुष्य चित्तं न 'किम्ह्मलयति'—"हे मपरे वा"—विचालयति ? 'ह्मलितं' विचलनं मरत्वात् मरणधर्म्मशीलत्वात् । "अमृतत्वस्य तु नाशास्ति वित्तेने"ति । यत्र नामृतत्वं तत्रैव भयम् ।

५४ । स्व इति । 'किंय्ह्यः'—"यवलपरे यवला वेति वक्तव्यम् ।*।"—सुखम

शमनः सततं विषयः
स कथं ल्ह्लादयितुञ्च तदलम् ॥

यवलपरे यवला वेति वक्तव्यम्। *।

५५। धनन्क्रुतव्यं क्रुतवान्न वाच्यं
सधङ्क्शमः कण्ट्सभयं न चास्तु।
सत्यग्रहे त्वं मधुलिट्त्सदा स्या
भवान्त्सहायोऽपकृतेषु मा भूत् ॥

(क) नपरे नः [कथन्क्रुते];—

नपरे ह्रे नः नः वा (८।३।२७)।

(ख) [स्याङ्] ङ्णोः कुक् टुक् शरि [प्रिय]।

ङ्णोः पदान्तयोः कुक् टुक् वा शरि (८।३।२८)।

(ग) डः सि धुट् [मधुलिट्त्साये];—

डः सि धुट् वा (८।३।२९)।

(घ) नश्च [स्यास्त्वं महान्त्सदा];

नः सि धुट् वा (८।३।३०)।

---

आसीत्, श्वो वा आगामिनि दिने किं भवितेति शेषः। उत अपि च शमनो मृत्युः सततं हृदयं न 'किंवक्लयति' प्रकम्पितं करोति। स विषयः शब्दादिः तत् हृदयं 'कथंल्ह्लादयितुम' अलं समर्थः ? न कथमपीत्यर्थः।

५५। धनमिति। 'धनन्क्रुतव्यम्'—"नपरे नः"—अपहारयोग्यं 'क्रुतवान्' अपहृतवान् न वाच्यम्। "यावद्भ्रियेत जठरं तावत् स्वत्वं हि देहिनाम्। अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हती"ति न्यायात् परेषामुपकारायाप्रदत्तमुद्धृत्तं धनं चौर्य्य-दोषग्रस्तं, तदिहामन्यमानो जनो वदति क्रुतव्यं धनमित्यादि, तदयोग्यमित्याह प्रत्युत्त-

५६ । भवाञ्छ्शरणं श्रयतां जनाय
प्रत्यङ्ङसावसभयं तनोति ।
कुर्व्वन्नुपैति प्रबलं तमश्चेत्
भवत्तु किं भो किमु आर्त्तिशान्तिः ॥

(क) ञि तुक् [बाल भवाञ्छेते भवाञ्छङ्करमाप्नुयात्]।

नः ञि वा तुक् (८।३।३१)।

(ख) ङमो ह्रस्वादचि ङमुण्नित्यं [वसवद्दृथा]।

ह्रस्वात् ङमोऽचि नित्यं ङमुट् (८।३।३२)।

(ग) [बाल] मय उञो वो वा [किस्वापदि यथा ञिष्टौ]।

मय उञः वा वः अचि (८।३।३३)।

---

रेण—न वाचामिति। 'सभङ्क्शम'—"ङ्णोः कुक् टुक् शरि"—शमः सहचरः सखा अतएव 'कण्ट्सभयम्' भयवशादार्त्तनादः म चास्तु। न कदाप्येवं दौर्बल्यं भवतु यद्विपदि धैर्य्यलोपः स्यात्। सर्व्वदा शमे तिष्ठेति भावः। सत्यशङ्के सत्यग्रहणे त्वं 'मधुलिट्त्सदा'—"डः सि धुट्"—स्याः। "अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यः कुशली नरः। सर्व्वतः सारमादद्यात् पुष्पेभ्य इव षट्पदः" इति न्यायेन। अपकृतेषु अपकारिषु मा 'भवान्तसहाय'—"नश्च"—भूत्। स्वयन्तु न कर्त्तव्यमपरेषामपि न तेषु सहायेन भवितव्यमिति भावः।

५६। भवानिति। 'भवाञ्छ्शरणं'—"ञि तुक्"—शरणागतपालकं परमात्मानं श्रयताम्। 'प्रत्यङ्ङसावसभयम्'—"ङमो ह्रस्वादचि ङमुण्नित्यम्"—हे प्रत्यङ्, आत्मन्, असौ परमात्मा जनाय असभयं जीवनस्याभयञ्च तनोति। चेद्यदि 'कुर्व्वन्नुपैति' कर्म्माणुतिष्ठन् प्रबलं तमोऽहङ्कारमुपगच्छति, 'भवत्तु'—"मय उञो वो वा"—भव उ अस्तु भवतु किम्? भो 'किमु आर्त्तिशान्तिः' भवक्लेशापगमः? न कदापीति भावः। अतएव त्वं बहुकर्म्मणाभिरतोऽपि सर्व्वथा तच्छरणागतो भवेति पूर्व्वापरार्थसम्बन्धः।

५७। मातुश्चिरं स्यास्तनयस्त्वमस्या-
म्छलैर्विहीनष्टलितैश्च यस्याः ।
कृपा जनैः क्षेपमितापि शश्व-
द्यथा पुरस्सा तु तथा पुनः सा ॥

(क) [बाल] विसर्ज्जनीयस्य स [स्तरश्चिरमुन्नतः] ।

विसर्ज्जनीयस्य सः खरि (८।३।३४) ।

(ख) [कल्याण] शर्परे विसर्ज्जनीयः [पुरुषः त्सरुः] ।

विसर्ज्जनीयस्य विसर्ज्जनीयः शर्परे खरि (८।३।३५) ।

(ग) वा शरि [स्यात् तरुः शेते हरिश्शेते गिरौ यथा] ।

विसर्ज्जनीयस्य विसर्ज्जनीयौ वा शरि (८।३।३६) ।

५८। सन्ति शिरस्थानेऽत्रास्थीनि चतुःपञ्चाशदत्र बाल ।
कपालमुखयोः स्थूलादष्ट च षट्चत्वारिंशद्धि ॥

खर्परे शरि वा लोपो वक्तव्यः । * ।

---

५७। मातुरिति। 'मातुश्चिरं स्यास्तनयस्त्वमस्याम्छलैर्विहीनष्टलितैश्च'—"विसर्ज्जनीयस्य सः"—त्वमस्याः मातुश्चिरं छलैः कापट्यैः टलितैः वैक्लव्यैश्च विहीनस्तनयः स्याः । कस्या इत्यपेक्षयाह—यस्याः कृपा शश्वत् 'जनैः क्षेपम्'—"शर्परे विसर्ज्जनीयः"—अवहेलनमितापि प्राप्तापि यथा 'पुरस्सा तु तथा पुनः सा'—"वा शरि"—अविकृता तिष्ठतीति भावः । मातापि शश्वदवहेलया वैमुख्यमाश्रयति न तु परममाताऽतस्तामेवाश्रयस्वेति फलितार्थः ।

५८। सन्तीति। अत्र 'शिरस्थाने'—"खर्परे शरि वा लोपो वक्तव्यः ।*।"—हे बाल चतुःपञ्चाशदस्थीनि सन्ति । 'कपालमुखयोः स्थूलात्' समष्टितो हि अष्ट षट्चत्वारिंशच्च । कपालेऽष्ट मुखे षट्चत्वारिंशदित्यर्थः । इत्तसंख्यागणनयैषा संख्या-

५८ । य × करोतु हरे*m* पाकः कर्म्मणामिति निश्चयः ।
यशस्काम्यति यस्तत्र यशस्याशं पुनः फलम् ॥

---

ऽन्यथा कपालेऽष्ट मुखे चतुर्द्दश समस्या द्वाविंशतिरिति । तन्निर्णयः सुश्रुतवृद्देहनिर्णये यथा—चतुःपञ्चाशदस्थीनि मस्तके सन्ति देहिनाम् । तेषामष्ट कपाले तु षट्चत्वारिंशदानने ॥ पार्श्वे कर्परयोर्युग्मं कर्णयोरुपरि स्मृतम् । अवसीऽपि तथा युग्मं कर्परेऽस्थिकमस्थि च ॥ अस्थेकमस्तुपरि वाल कृकाटिकायास्तालीस्तथास्ति सुमतेऽस्थियुगं कठोरम् । मस्तिष्करक्षणविधौ विधिनिर्म्मितानि निश्चलानि तदलं परिवेष्टयन्ति ॥ अस्थीन्येतानि सर्व्वाणि वेष्टितानि कपालकैः । ततो निश्चलितान्येतान्यवाप्तानि कठोरताम् ॥ नासिकायान्तु पञ्च द्वे द्वे अपाङ्गकपालयोः । ऊर्द्धहन्वोस्तथा युग्ममेकं ज्ञेयमधःस्थयोः ॥ तालीरधस्तु द्वे स्रोऽधोहन्वोरेकम् चलं स्मृतम् । सर्व्वाण्यन्यानि सन्त्यत्र संयतानि परस्परम् ॥ उत्तमाङ्गमिदं सम्यक् सर्व्वतः परिवेष्टितम् । अस्थिभिर्नैवदखेऽस्य द्वारमेकन्तु वर्त्तते ॥ दन्तानामग्रभागोऽयं कठिनस्त्वतिमात्रतः । इत्यारभ्य द्वात्रिंशदभिजायन्त इत्यन्ता दन्तसंख्या तत्रैव* ।

५८ । य इति । 'य × करोतु' कर्म्मणां 'हरे*m*पाकः'—"कुशी × क*m*पौ च"—कल्याणे परिणमनमिति निश्चयः स्थिरसिद्धान्तः । यस्तत्र कर्म्मणि 'यशस्काम्यति'—"सोऽपदादौ"—अहं कर्त्तेत्यभिमानात्तत आत्मगौरवमाकाङ्क्षति तस्य पुनः फलं 'यशस्याशम्' कुत्सितं सद्भिर्विगर्हितं यशः ।

---

* दन्तानामग्रभागोऽयं कठिनस्त्वतिमात्रतः ।
समाच्छादित एवास्त्यश्मवत् सारवस्तुना ॥
बाल्ये विंशतिसंख्या हि जायन्ते दशनाः पुनः ।
अग्रेष्वष्टमवर्षेषु जायन्ते पुनरष्टभिः ॥
एकोनविंशवर्षेषु वाष्टादशसु देहिनाम् ।
चतुःसंख्यकदन्ताः संप्राप्नुवन्ति प्रवर्द्धनम् ॥
इत्थं दन्ता विवर्द्धन्ते सर्व्वेषां क्रमशो नृणाम् ।
द्वात्रिंशदभिजायन्ते विंशत्यब्देष निश्चितम् ॥

(क) कुप्वो × क $\chi$ पौ च [कल्याण],—

कुप्वोः विसर्ज्जनीयस्य × क $\chi$ पौ च (८।३।३७)।

(ख) सोऽपदादौ [यशस्करः]।

अपदादौ कुप्वोः विसर्ज्जनीयस्य सः (८।३।३८)।

६०। प्रातःकल्पं यत्र ज्ञानं गीःकाम्यति वचनेन।
एवं वसति समुद्गे यस्य विम्रुच्यति स वहिर्जातु॥

अनव्ययस्येति वक्तव्यम्। *।

रोः काम्ये नियमार्थम्। *।

उपाध्मानीयस्य कवर्गे परतः सकार आदेशो भवतीति वक्तव्यम्। *।

६१। सर्पिष्कल्पेन भुञ्जीथा नमस्कृत्य पुरस्क्रियाम्।
मत्वा तन्निष्कृतं तेन दुष्कृतं हि विपर्य्ययात्॥

---

६०। प्रातःकल्पमिति। यत्र जने ज्ञानं 'प्रातःकल्पम्'—"अनव्ययस्येति वक्तव्यम्।*।"—प्रस्फुटोन्मुखमात्रं स जनः वचनेन वाक्येन 'गीःकाम्यति'—"रोः काम्ये नियमार्थम्।*।"—आत्मनो वक्तृत्वमभिलषति स्तुतिं वा। ज्ञानस्य प्रथमोन्मेषे बहुभाषित्वं तत्प्रकाशनेन प्रशंसालाभवासना च साधारणलक्षणम्। विपरीतं दर्शयति—यस्य 'समुद्गे'—"उपाध्मानीयस्य कवर्गे परतः सकार आदेशो भवतीति वक्तव्यम्।*।"—सम्पुटके—"अकृत्वविषये निपातनम्, अथवा नैतदुब्जे रूपम्, किन्तर्हि, गमेर्डुरपसर्गाद्दडो विधीयत" इति भाष्यलिखनादुभयव्युत्पत्तावर्थसाम्यम्—एवं वसति, स जातु कदाचित् वहिः सम्पुटकादिति शेषः विम्रुच्यति अन्विष्यति, न कदापीत्यर्थः। अन्तःसारत्वे न शब्दाधिक्यमिति फलितार्थः।

६१। सर्पिष्कल्पेनेति। 'पुरस्क्रियां' पुरस्कारं मत्वा 'नमस्कृत्य'—"नमस्पुरसोर्गत्योः"—'सर्पिष्कल्पेन'—"इणः षः"—ईषदपरिसमाप्तघृतेन भुञ्जीथाः। कथमपक्वघृतलाभेऽप्येवं कर्त्तव्यम्? तेन नमस्कारकर्म्मणा 'तन्निष्कृतं' दोषविमुक्तं, विपर्य्ययात् अकृतज्ञतानिबन्धनानमस्कारात् 'दुष्कृतं' दोषजनकं कर्म्म भवति। नेदमुतकृष्टमाहार्य्य-

(क) दूण: ष: [स्याद्यजुष्कल्पं सर्पिष्पात्रं यजुष्करः] ।

दूण: विसर्ज्जनीयस्य ष: कुप्ती: अपदाद्यो: (८।३।३९) ।

(ख) नमस्पुरसोर्गत्यो [र्यो नमस्कर्त्ता पुरस्कृतः] ।

नमस्पुरसो: गत्यो: विसर्ज्जनीयस्य स: कुप्वो: (८।३।४०) ।

(ग) [कल्याणि] दुदुपधस्य चाप्रत्ययस्य [निष्कृतम्] ।

इदुदुपधस्य चाप्रत्ययस्य विसर्ज्जनीयस्य ष: कुप्वो: (८।३।४१) ।

६२ । न भवन्तु मुहुःकामाः
सुखिनोऽपुंस्त्वविवशचित्तास्ते ।
दौष्कुल्यं खलु पापा-
न्नतु दुःष्कुलमिति भाषणेन ॥

पुमुस्मुहुसो: प्रतिषेधो वक्तव्य: । * ।

वहिरङ्गलक्षणयोरसिद्धत्वात् षत्वं प्रवर्त्तते ।

---

मिति ज्ञानान्न कोऽपि प्रसन्नहृदयेन तन्नोक्तुमुत्सहते। अप्रसन्नहृदये कृतज्ञतोदय: कुत: ? असत्यां कृतज्ञतायाम् अविदुष्टमप्यन्नं चित्तानैर्म्मल्यहेतुत्वात् दुष्टं भवति । अतो नमस्काररूपकृतज्ञताप्रकाश एव दोषनिर्हारप्रयोजक: । अन्न दोषविमुक्तं भवतीति यदुक्तं, तदेवमाध्यात्मिकविषयएवेत्यवगन्तव्यम् ।

६२ । नेति । 'मुहुःकामाः'—' पुमुस्मुहुसो: प्रतिषेधो वक्तव्य: । * ।''—पुन: पुन: विषयाकाङ्क्षिणो न सुखिनो भवन्तु । कथम् ? ते 'अपुंस्त्व'विवशचित्ता: पुरुषकारविहीना: । न ह्यजितात्मनां कदापि सुखमिति फलितार्थ: । खलु निश्चितं पापात् 'दौष्कुल्यम्' न तु 'दुःष्कुलम्'—''वहिरङ्गलक्षणयोरसिद्धत्वात् षत्वं प्रवर्त्तते'' —इति भाषणेन चीत्काररवेण । पापाचरणमेव दुष्कुलप्राप्तौ कारणं न तु शोकमुखादिति भाव: ।

६३ । तिरस्कर्त्ता तिरःकर्त्तुमुद्यमं द्विष्करोतु वा ।
त्रिःकरोतु सुखं तिष्ठ स्वस्थश्चतुष्करोतु सः ॥

(क) तिरसोऽन्यतरस्यां [तं तिरःकर्त्तुं तिरस्क्रिया] ।
तिरसो विसर्ज्जनीयस्य अन्यतरस्यां सः कृञि (८।३।४२) ।

(ख) द्विस्त्रिश्चतुरिति कृत्वोऽर्थे [तच्चतुष्करोत्यसौ] ।
द्विस् त्रिस् चतुस् इति कृत्वोऽर्थे विसर्ज्जनीयस्य षः अन्यतरस्यां कृञि (८।३।४३) ।

६४ । धनुष्करोति हस्ते वा हविष्याययतेऽथवा ।
हविष्पायनमन्यद्वा व्यनक्ति कुटिलां गतिम् ॥

(क) इसुसोः सामर्थ्ये [स्यात्,कल्याण स सर्पिष्करोति] ।
इसुसोः विसर्ज्जनीयस्य अन्यतरस्यां षः सामर्थ्ये कृञि (८।३।४४) ।

(ख) नित्यं समासेऽनुत्तरपदस्थस्य [धनुष्फलम्] ।
समासे इसुसोः विसर्ज्जनीयस्य अनुत्तरपदस्थस्य नित्यं षः कृञि (८।३।४५) ।

---

६३ । तिरस्कर्त्तेति । 'तिरस्कर्त्ता' 'तिरःकर्त्तुम्'—"तिरसोऽन्यतरस्याम्"—तिरस्कारं कर्त्तुम् उद्यमं 'द्विष्करोतु' 'त्रिःकरोतु' वा—"द्विस्त्रिश्चतुरिति कृत्वोऽर्थे"—स्वस्थः अविकृतः सुखं तिष्ठ, स 'चतुष्करोतु'। असति कारणे बहुवारव्यर्थतिरस्कारेऽपि न विकारमावह, एतमेव तस्य परिभवो नान्यथा ।

६४ । धनुरिति । हस्ते वा 'धनुष्करोति' वधार्थमुद्यमं करोति, अथवा 'हविष्याययते'—"इसुसोः सामर्थ्ये"—'हविष्पायनम्'—"नित्यं समासेऽनुत्तरपदस्थस्य"—अन्यत् धनुर्धारणं वा कुटिलां गतिं व्यनक्ति । असतां मित्रतामित्रते तुल्ये ।

६५ । अयस्कारो ह्ययस्कामस्ततोऽयस्कांसमाहरेत् ।
अयस्कुम्भमयस्पात्रमयस्कर्णीमयस्कुशाम् ॥

(क) अतः कृकमिकंसकुम्भपात्र-
कुशाकर्णीष्वनव्ययस्य [भोः] ।

अतः कृ-कमि-कंस-कुम्भ-पात्र-कुशा-कर्णीषु अनव्ययस्य विसर्ज्जनीयस्य समासे अनुत्तरपदस्थस्य नित्यं सः (८।३।४६) ।

६६ । अधस्पदं याति शिरस्पदं वा
कौतस्कुतः कस्कइति प्रयत्नम् ।
त्वं माश्रिथास्तत्र तु वृत्तमूलं
तदित्यहो सर्व्वजनप्रसिद्धम् ॥

६५ । अयस्कार इति । 'अयस्कारः' कर्म्मकारः हि 'अयस्कामः' लौहाभिलाषी । ततोऽयस्कारात् 'अयस्कांसं' लौहनिर्म्मितपानपात्रम् 'अयस्कुम्भम्' 'अयस्पात्रम्' 'अयस्कर्णीम्' 'अयस्कुशाम्'—"अतः कृ-कमि-कंस-कुम्भ-पात्र-कुशा-कर्णीष्वनव्ययस्य"—आहरेत् । माभूदेकस्मी लभ्यं वस्त्वन्यतः संग्रहणेऽभिलाष इति भावः ।

६६ । अधस्पदमिति । 'कौतस्कुतः' कुतः कुतः आगतः 'कस्कः' 'अधस्पदं' 'शिरस्पदं' वा याति—"अधःशिरसी पदे"—"कस्कादिषु"—इति प्रयत्नं त्वं मा आश्रिथाः तज्ज्ञाने यत्नं मा कुरु । तत्र अधस्पदे शिरस्पदे तत् अधोगमनमूर्द्ध्वगमनम् वृत्तमूलम् इत्यहो सर्व्वजनप्रसिद्धम् । अयत्नसुलभज्ञानविषये कौतूहलचरितार्थताये प्रयत्नानुष्ठानं व्यर्थमिति भावः ।

इति दृष्टान्तव्याख्याने पञ्चमं प्रकरणम् ।

(क) [पापादधस्पदं याति बाला] ऽधःशिरसी पदे।

अधःशिरसी विसर्ज्जनीयस्य समासे अनुत्तरपदस्थस्य सः पदे (८।३।४७)।

(ख) कस्कादिषु [यथा कस्को भ्रातुष्पुत्र इहागतः]।

कस्कादिषु विसर्ज्जनीयस्य सः षः कुप्वोः (८।३।४८)।

इति दृष्टान्तसर्व्वस्वे दृष्टान्तानुगमने हल्व्यञ्जनाश्रयायां
संहितायां पञ्चमं प्रकरणम्।



## षत्वाश्रया संहिता।

६७। वेदे तुराषाड़मितः पुराणे-
ष्वयं सिषेवे परमं स वाचु।
हवींषि कोवोपहरेद्यजुःषु
तिष्ठत्वसौ नाधिकृतिर्हविष्षु॥

---

६७। वेद इति। वेदे 'तुराषाड्'—"सहेः साड्. सः"—इन्द्रः अमितः ईश्वरत्वेन गृहीतः। 'पुराणेषु' अयम् इन्द्रः परमं परमेशं 'सिषेवे'—"इण्कोः"—"आदेशप्रत्यययोः"—तद्दासरूपेण तत्र परिगृहीत इति भावः। स इदानीं 'वाचु' कथासु। कथम्? को वा 'हवींषि'—"नुम्विसर्ज्जनीयशर्व्यवायेऽपि"—उपहरेत् दद्यात्। असौ 'यजुःषु' प्राचीनवेदवाक्येषु तिष्ठतु। 'हविष्षु' हवनीयद्रव्येषु पूजासाधनेषु नाधिकृतिः अस्येति शेषः। "युक्तस्यात्मनि देवते"ति न्यायेनेदानीमन्तर्मुखगतिविशिष्टा न तमाद्रियन्ते। बहिरपि कल्पनां परिहाय "खं वायुमग्निं सलिलं महीञ्चे"त्यादि न्यायेन सर्व्वत्र हरिमेव पश्यन्ति।

(क) अपदान्तस्य मूर्द्धन्यः [सुष्वापाग्निषु कर्त्तृषु] ।

अधिकारः । (८।३।५५) ।

(ख) सहेः साढ़ः स [दृष्येत] ;—

सहेः साढ़ः सः मूर्द्धन्यः (८।३।५६) ।

(ग) [स्यात्] इण्कोः [गीर्षु वाक्षु च] ।

इण्कोरित्यधिकारः (८।३।५७) ।

(घ) [स्यान्]नुम् विसर्ज्जनीयशर्व्व्यवायेऽपि [हवींषि भोः]

नुम्-विसर्ज्जनीय-शर्-व्यवायेऽपि इण्को सः मूर्द्धन्यः (८।३।५८) ।

(ङ) [स्यात्] आदेशप्रत्यययोः [सिषिवेऽग्निषु कर्त्तृषु] ।

आदेशप्रत्यययोः सः इण्कोः मूर्द्धन्य (८।३।५९) ।

६८। शिष्टानुशिष्टावुषिते समौ तौ
स जक्षतुर्गौरपि न प्रभेदः ।
तुष्टूषतीशं प्रसिषाधयिष्य
सम्प्रत्यसौ पापहृतिं मनुष्यः ॥

(क) शासिवसिघसीनाञ्च [सोऽशिषद्जक्षतुर्यथा] ।

शासि-वसि-घसीनाम् इण्कोः सः मूर्द्धन्यः (८।३।६०) ।

---

६८। शिष्टेति। स मनुष्यः गौरपि 'शिष्टानुशिष्टौ' शिष्टैः धीरैः शिक्षितैः अनुशिष्टौ समुपदिष्टौ 'उषिते' अवस्थाने समौ तुल्यौ। तौ 'जक्षतुः'—"शासिवसिघसीनाञ्च"—आहारं चक्रतुः, न प्रभेदः। आहारग्रहणमुपलक्षणं सर्व्वेन्द्रियव्यापारेषु न पार्थक्यम्। सम्प्रति असौ मनुष्यः। कथम् ? पापहृतिं पापहरणं 'प्रसिषाधयिष्य' सम्पादयितुमभिलष्य ईशं परमेश्वरं 'तुष्टूषति'—"स्तौतिण्योरेव षण्यभ्यासात्"—स्तोतुमिच्छति। ईश्वराराधनेनैव मनुष्यत्वमन्यथा पशुत्वमिति भावः।

(ख) [स्यात्] स्तौतिण्योरेव षण्यभ्यासात् [तुष्टूषति प्रभुम्]

स्तौतिण्योरेव षणि अभ्यासात् इणः सः मूर्द्धन्यः (८।३।६१) ।

६९ । बाल सिस्विदयिषस्व सिस्वादयिषसे सुखम् ।
सिसाहयिषति प्रेम्णा स त्वां भाविसुखाय ते ॥

(क) सः स्विदिस्वदिसहीनाञ्च [सिस्विदयिषन् ययौ] ।

स्विदि स्वदि-सहीनां ण्यन्तानां सनि [षभूते] अभ्यासात् सस्य सः (८।३।६२) ।

७० । अभ्यषुणोदभिषवे स पर्य्यषुवदिन्द्रियम् ।
भोगे परिषुवन्नेषोऽभ्यष्यत्ताद्दृगभिष्यति ॥
अभिष्टौति पुराभ्यष्टौदभ्यष्टोभत नापि च ।
अभिष्टोभत एषोऽयं स्तवे नित्यं महत् फलम् ॥
अभितष्ठौ पुरा कुत्राभ्यष्ठाद्वा चेह जन्मनि ।
अत्रेयं व्यर्थसन्धानं सोऽभिष्ठास्यति तत् स्थिरम् ॥

---

६९ । बालेति । हे बाल सुखं 'सिस्वादयिषसे' स्वादयुक्तं कर्त्तुमिच्छसि, 'सिस्विदयिषस्व, आलस्यं परित्यज्य श्रमेणात्मानं स्वेदाभिषिक्तं कर्त्तुमिच्छ । ते तव भाविसुखाय स त्वां प्रेम्णा 'सिसाहयिषति'—"सः स्विदि-स्वदि-सहीनाञ्च"—दुःखादिकं साहयितुमिच्छति।

७० । अभ्यषुणोदिति । स 'अभिषवे' यज्ञाङ्गस्नाने 'अभ्यषुणोत्' स्नानं कृतवान्, अथच इन्द्रियम् 'पर्य्यषुवत्' विषयान् पर्य्यगच्छत् तदनुसरणं कृतवान् । एष जनः भोगे 'परिषुवन्' सर्व्वथाधिपत्यं प्रकाशयन् 'अभ्यष्यत्' नाशं गतवान् । तादृग्वहि-रनुष्ठान-परोऽथच भोगासक्तो जनो'ऽभिष्यति' विनाशं गच्छति । वृथैवानुष्ठानं न चेदि-न्द्रियसंयमः यतो न तेन विनाशनिवारणमिति भावः । अभिष्टौतीति । एषोऽयं जनो'ऽभिष्टौति' स्तुतिं करोति, पुरा पूर्व्वकाले 'अभ्यष्टौत्' अपि च न 'अभिष्टोभते' 'अभ्यष्टोभत' तत्रावहेलनं करोत्यकरोद्वा । कथमेवं करोति ? स्तवे परमेशस्तुतौ नित्यं महत् फलम् । अभितष्ठाविति । पुरा कुत्र 'अभितष्ठौ' इह जन्मनि

अभिषेणयति प्राय: पुराभ्यषेणयत् स तु ।
अभिषिषेणयिषतु शत्रोर्भीत्यै न हत्यये ॥
प्रत्यषेधत् पुरा नित्यं पापेभ्य: प्रतिषेधति ।
अभिषिषिक्षत्यभ्यषिञ्चच्छिवं सोऽभिषिषिक्षति ॥
पापेष्वभ्यषजत् को वाऽभ्यष्वजत सुखञ्च ना ।
अभिषिषङ्क्षन् कल्याणे परिष्वजस्व सत्पदम् ॥

---

वा 'अभ्यष्ठात्' देहारम्भसमये तदनन्तरकाले कुत्र स्थितिं कृतवान् अज्ञेयम् अतएव व्यर्थसन्धानं निष्फलतन्निर्णयचेष्टा। तत् किं सर्व्वथैवानवस्था ? स जनो ऽभिष्ठास्यति' तत् स्थिरम् निश्चितम्। पूर्व्वजन्मनि आत्मा कुत्र स्थितिमकरोदिह जन्मनि देहारम्भो-पादाने स्थितिं कृतवानथवा कुतश्चिदागत्य प्रविष्टवानित्यादि वितर्को जनबुद्ध्यगोचर:। अतस्तदनुसन्धानं परित्यज्य स नित्यकालं स्थास्यतीति ध्रुवज्ञाने सन्तुष्ट: स्यादिति फलितार्थ:। अभिषेणयतीति। 'अभिषेणयति' सेनयाभियाति। पुरा पूर्व्वकाले 'अभ्यषेणयत्' सेनयाऽभ्ययात्। 'अभिषिषेणयिषतु' सेनयाभिगन्तुमिच्छतु। तत् किं समरे शत्रुसधोऽभिमत: ? शत्रोर्भीत्यै भीत्युत्पादनार्थं न हत्यये वधसाधनाय। पूर्व्वं हत्यार्थं समरोद्यमोऽभूदधुना केवलं भीत्युत्पादनार्थमिति महदन्तरम्। पुरैतां भीतिमनु-सृत्य शाक्यवंशध्वंस इति प्रसिद्धि:। प्रत्यषेधदिति। पुरा पूर्व्वकाले नित्यं पापेभ्य: प्रत्यषेधत्, अधुनापि प्रतिषेधति। कथमेवमकरोत् ? स शिवं कल्याणम् 'अभिषिषिक्षति' अभिषिक्तं कर्त्तुमिच्छति। अतएव तदुपायेन शिवम् 'अभ्यषिञ्चत्' अभिषिञ्चति च। पापै: प्रतिरुद्धं कल्याणसाम्राज्यं तन्निरसनेन संस्थापयितुं प्रतिषेध-इति फलितार्थ:। पापेष्विति। को वा नर: पापेषु 'अभ्यषजत्' आसक्तो-ऽभवत् सुखञ्च 'अभ्यष्वजत' आलिङ्गनं कृतवान्, तदसम्भव इत्यर्थ:। कल्याणे 'अभिषि-षङ्क्षन्' आसक्तो भवितुमिच्छन् सत्पदं साधूनां पदम् 'परिष्वजस्व'—"उपसर्गात् सुनोतीत्यादि"—आलिङ्गनं कुरु। साधूनां पादालिङ्गनं न केवलं तेषां चरणचुम्बनं किन्तु तत्पथानुसरणमिति कल्याणेऽनुरागाभ्युदय:।

(क) प्राक्सितादड्व्यवायेऽपि [पर्य्यषेवत सत्पथम्]।

सितात् प्राक् अड्व्यवायेऽपि मूर्द्धन्यः (८।३।६३)।

(ख) [बाल] स्थादिष्वभ्यासेन चाभ्यासस्य [त्रियो ह्यत्र]।

स्थादिषु प्राक् सितात् अभ्यासेन व्यवाये मूर्द्धन्योऽभ्यासस्य (८।३।६४)।

(ग) [बालक सोऽभ्यषुणो]दुपसर्गात्
सुनोति-सुवति-स्यति-स्तौति-स्तो-
भति-स्था-सेनय-सेध-सिच-स-
ञ्ज-स्वञ्जा[मभ्यष्वजत सुखम्]।

उपसर्गात् सुनोति-सुवति-स्यति-स्तौति-स्तोभति-स्था-सेनय-सेध-सिच-सञ्ज-स्वञ्जां सस्य मूर्द्धन्यः (८।३।६५)।

७१। विषसाद व्यषीदत् स विषीदन् प्रतिसीदति।
व्यष्टभ्नादभितष्टम्भ प्रतिष्टभ्नाति तच्छिवम्॥

(क) [विषसाद व्यषीदत् स विषीदन्] सदिरप्रतेः।

अप्रतेरुपसर्गात् सदिर्मूर्द्धन्यः (८।३।६६)।

(ख) स्तम्भेः [तदभितष्टम्भ परिष्टभ्नाति बालक]।

उपसर्गात् स्तम्भेः सस्य मूर्द्धन्यः (८।३।६७)।

---

७१। विषसादेति। स 'विषसाद' 'व्यषीदत्' परीक्षकाले इतः पूर्व्वञ्च विषण्णोऽभूत्। 'विषीदन्' 'प्रतिसीदति'—"सदिरप्रतेः"—अवसन्नो भवति। क्लिन्नो भवति? तत् शिवम् 'अभितष्टम्भ' 'व्यष्टभ्नात्' वर्त्तमाने 'प्रतिष्टभ्नाति'—"स्तम्भेः"—कल्याणप्रतिरोधी विषादोऽतः स परिहार्य्य इति फलितार्थः।

७२ । ईशन्त्ववष्टभ्य य एष वर्त्तते
ऽवष्टब्धधीर्व्यष्वणदेष योऽसौ ।
सदावषष्वाण स विष्वणंश्च
प्रापत् पुनर्बाल पशुत्वमेव ॥

(क) अवाच्चालम्बनाविदूर्य्ययो[र्भवति बुद्धिमन्] ।

अवादुपसर्गात् आलम्बनाविदूर्य्ययो: स्तम्भे: सस्य मूर्द्धन्य: (८।३।६८) ।

(ख) वेश्च स्वनो भोजने [स्याद्यष्वणत् खल्ववष्वणत्] ।

वेरवाच्चोपसर्गात् भोजने स्वन: सस्य मूर्द्धन्य: । (८।३।६९) ।

७३ । निषेवते साधु स पर्य्यषेवत
विषेवतां तन्निषितस्य मोचनम् ।
यतोऽन्यथा तं विषयो निषीव्यति
व्यषीव्यदग्रे खलु कामतन्तुना ॥

---

७२ । ईशमिति । य एष ईशं परमेशन्तु 'आवष्टभ्य' अवलम्ब्य वर्त्तते स एष 'अवष्टब्धधी:'—"अवाच्चालम्बनाविदूर्य्ययो:"—नित्यसन्निहितबुद्धि: 'व्यष्वणत्' सशब्दं भोजनं कृतवान् । तादृशभोजनेऽपि न तस्यासन्निकृतबुद्धिविलोप: । योऽसौ सदा नित्यकालम् 'अवषष्वाण' सशब्दं भोजनं कृतवान्, स पुनर्बाल 'विष्वणं'श्च—"वेश्च स्वनो भोजने"—पशुत्वमेव प्रापत् । ईश्वराश्रयविरहितजनस्य तादृशभोजनं पशुत्ववर्द्धनाय भवतीति भाव: ।

७३ । निषेवत इति । स साधु 'निषेवते' सेवां कुरुते 'पर्य्यषेवत' पूर्व्वमपि सेवां कृतवान् । 'विषेवतां' विशिष्टरूपेण सेवां कुरुताम् । तत् 'निषितस्य'—"परिनिविभ्य: सेव-सित-सये"त्यादि—बद्धस्य मोचनं बन्धनविश्लेष:, षिञ् बन्धने क्तप्रत्ययान्त: सितशब्द: । यतोऽन्यथा सेवाविरहे तं विषय: कामतन्तुना अग्रे तं 'व्यषीव्यत्' अधुनापि

# भाष्यसङ्क्रमनी।

प्रथमोऽध्यायः।

उपाध्यायोपदेशेन विना यत्कृपया सुखम्।
प्राविशं भाष्यसन्दर्भे वन्दे तं परमेश्वरम्॥
भाष्यानुगामिनी साक्षात् काशिका तेन तां पुनः।
भाष्यसङ्क्रमनी ह्येषा व्याख्या सङ्क्रमयिष्यति॥

१। अथ शब्दानुशासनम्।

म, ह,। केषां शब्दानां? लौकिकानां वैदिकानाञ्च। कथमनुशासनम्? प्रकृत्यादिविभागकल्पनया सामान्यविशेषवता लक्षणेन। अथ किमर्थो वर्णानामुपदेशः? प्रत्याहारार्थः। प्रत्याहारो लाघवेन शास्त्रप्रवृत्त्यर्थः।

भा. स.। अत्र भाष्यकारेण शब्दस्वरूपादिनिर्वचनमतिविस्तीर्णं भाष्यमुपनिबद्धम्। वृत्तिकारस्तु सारमात्रसङ्कलनव्यग्रतया तत् सर्वमुपेक्ष्य संगृहीतवान् तत्सारांशं प्रायो भाष्यकारवाक्येनैव। अथ पुनर्भाष्यकारविवृतौ बालानां सुखप्रवेशाय विस्तारादनतिविस्तीर्णं विवरणमुपनिबध्नामः।

"अथ शब्दानुशासन"मित्यत्र, अथशब्दोऽधिकारार्थः (१) । शब्दानुशासनं नाम शास्त्र-

---

उपाध्यायोपदेशेन विना यद्विधिनोदितः ।
समन्वयं विधित्सुस्तत्कृतार्थस्तं परं श्रये ॥
अर्व्वाचीनप्रबन्धा हि विचारकर्कशा इयम् ।
अनुव्याख्या ततस्तत्त्वसङ्कलन्यतिविस्फुटा ॥
यदपि कृतिरियङ्कृपया परस्य तदपि श्रमाकुलनरेऽस्याः ।
अवतरणनिमित्तं स्यादवरुद्धप्रसरताभूमिः ॥

(१) अथेति । अथशब्दः प्रारम्भस्य द्योतको वाचको वेति विवादविषयः । निपातानाञ्च द्योतकत्वं वाक्यपदीये निर्णीतम् । विवरणकारास्तु वाचकत्वमेवेच्छन्ति । स्वरादयो वाचकाश्चादयो द्योतका इति विषयविभागोऽप्यत्र दृश्यते । वाचका हि तदर्थपर्य्यायरूपेण प्रयुज्यन्ते, द्योतकाः केवलमर्थप्रकाशकरूपेण । तद्यथा स्वर्शब्दस्य निपातत्वेऽपि स्वर्गपर्य्यायरूपेण प्रयोगात् वाचकत्वम् ; चशब्दस्य समुच्चयपर्य्यायरूपेणाप्रयोगात् केवलं तदर्थद्योतकत्वम् । निपातेषु "चादयोऽसत्त्वे" इति निर्द्धारणात् द्रव्याद्रव्यविभेदेन वाचकत्वद्योतकत्वयोरवकाश इत्यपि तेषां मतम् । अथशब्दस्य वाचकत्वे अधिकारं जानातीत्यर्थे अथ जानातीति प्रयोगापत्तिः । अत्र वाचकत्वपक्षपातिनो वदन्ति ;— प्रारम्भार्थस्याथशब्दस्यास्ति स्वसमभिव्याहृतस्य प्रथमान्तपदस्यार्थान्वयबोधं प्रति साकाङ्क्षता । अतो नास्यात्र तद्विपरीतप्रयोगस्य सम्भावना । अतएव शब्दानुशासनस्य प्रारम्भ इत्यर्थे शब्दानुशासनस्याथेति न प्रयोगः । द्योतकत्वपक्षे उपसर्गाणां द्योतकत्वं संस्थाप्य तद्युक्त्यान्येषां निपातानाञ्च तत् केनचित् साधितम् । तद्यथा सुखमनुभूयतेऽत्र कर्म्मणि लकारः क्रियामधिकृत्यैव व्यवस्थापितः, न तूपसर्गमुपलक्ष्य, अतोऽस्य द्योतकतैव न वाचकता । अत्रेदं विवेच्यम् । भूधातुः स्वयमकर्म्मकः, तस्य सकर्म्मकत्वमनुयोगादेव सिध्यति । शाकल्यस्य संहितामनु-निशम्य प्रावर्षीदित्यत्र पूर्व्वं क्रियायोगेनोक्तिन्ना पश्चान्निशम्यपदतिरोधानेऽपि वर्त्तमानान्वादीनां कर्म्मप्रवचनीयसंज्ञया द्वितीयोत्पत्तौ शक्तिः सर्व्वेषां बुद्ध्यनुमेया । सैवाचोपसर्गसंज्ञया धातुनाभिन्नाकारतामापन्नानां संसृष्टा सकर्म्मकत्वमुपस्थापयतीति सरलसिद्धान्तः । न खलूपसर्गं विना धातोरत्र कर्म्मग्रहणसामर्थ्यं, नापि धातुं विनोपसर्गस्य कर्म्मग्रहणे शक्तिरतः परस्परसापेक्ष्यत्वादुभयोस्तुल्यं वाचकत्वं द्योतकत्वञ्च स्थितम् भाष्ये तदुभयस्य सत्त्वात् । तद्यथा "भुवादयोधातव" (१।३।१) इति सूत्रे "क्रियाविशेषक उपसर्गः" इत्युपन्यस्य "न चेदं नास्ति, बह्वर्था अपि धातवो

मधिकृतं वेदितव्यम्। केषामनुशासनम्? शब्दानां लौकिकानां वैदिकानाञ्च। गौरश्वः पुरुष इत्यादयो लौकिकाः। "शं नो देवीरभिष्टये" इत्यादयो वैदिकाः।

---

भवन्तीती"ति उपसर्गाणां द्योतकता, क्रियाणां वाचकता। "उपपदमतिङ्" (२।२।१९)ति सूत्रे "पूर्व्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण। साधनं हि क्रियां निवर्त्तयति तामुपसर्गो विशिनष्टि। अभिनिर्वृत्तस्य चार्थस्योपसर्गेण विशेषः शक्यो वक्तुम्" इति उपसर्गाणां वाचकता क्रियाणां तदधीनता प्रस्फुटा। धातूपसर्गाणामपृथक्त्वं हि परमार्थं, साधनार्थं यद्धातोः पृथक्त्वेन ग्रहणं तदपि तमभ्यन्तरीकृत्यैव, अन्यथाकर्म्मकाणां सकर्म्मकत्वं न सिद्ध्यतीति "गतिर्गता"विति (८।१।७०) सूत्रे भाष्यकृता स्पष्टमुक्तम्। तद्यथा "यस्तसौ धातूपसर्गयोरभिसम्बन्धस्तमभ्यन्तरीकृत्य धातुः साधनेन युज्यते। अवश्यं चैतदेवं विज्ञेयम्। यो हि मन्यते पूर्व्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेति; आस्यते गुरुणेत्यकर्म्मकः उपास्यते गुरुरिति केन सकर्म्मकः स्यात्।" अत्र द्योतकत्व-पक्षपातिना कैयटेनाप्युपसर्गाणां विशेषार्थवाचकत्वं स्वीकृतम्। तद्यथा "उपसर्गः क्रियायाः समानाधिकरणो विशेषकः। तत्रान्वयव्यतिरेकाभ्यां धातुः क्रियावचनः उपसर्गास्तु विशेषस्य वाचका इति धातूपसर्गसमुदायं क्रियाविशेषवचनम्।" यत्तु तद्व्याख्याता निपातानां द्योतकत्वं वाचकत्वमुभयं स्वीकृत्य "उपसर्गाणां द्योतकत्वमेवेति स्पष्टं गतिर्गताविव्यत्र भाष्ये" इत्युक्तं तदनुपपन्नम्। अधीत इत्यादौ धातोरनर्थकता उपसर्गविशिष्टस्यैव वाचकतेत्युक्तिः समानन्यायेन धातोरेव वाचकता कर्म्माद्युत्पत्तावुप-सर्गस्यैव निरर्थकतेति प्रत्युक्त्या बाध्यते। केन वा सिद्धान्तेनास्य विपरीतयुक्तिद्वयस्य मीमांसा सम्भवति विना तद्यदस्माभिरुपन्यस्तम्। अनुभवतीत्यादौ धातूपसर्गयोरपृथक्त्व-मङ्गादिसिद्ध्यर्थमेव पृथक्त्वव्यवस्थित्यादि वाक्यमप्येवं सङ्गच्छते। उपसर्गाणां धात्वर्थ-विवर्त्तने सामर्थ्यमनेन मार्गेण सिद्ध्यति। नायमर्द्धजरतीन्यायः, स्वभाव एव हि वस्तु-द्वयस्यापृथक्सम्मेलनस्य। यत्राभेदसम्मेलनं तत्रैवमेवापरिज्ञेयत्वं दृश्यते, तद्यथा तरणेः पश्चिमाभिमुखायाः तत्स्थस्य नरस्य च पूर्व्वाभिमुखस्य गतिश्चेत् समतुल्या, गतिसद्-सम्भावना च युगपत् बुद्धौ प्रतिभासते, अथवा हरिद्राचूर्णयोर्योगेन वर्णान्तरोत्पत्ता-वुभयोः समकारणता नैकस्य तत्र निरर्थकता विभाव्या। किञ्च यदस्माभिरुक्तं तेना-विभक्तपदार्थस्य विभागकल्पनेनैव व्याकरणस्य कृतार्थता सम्भवति। पूर्व्वं धातुमुपसर्गेणास्य

अथ कोऽयं शब्दः ? गौरित्युच्चार्य्यमाणे यत् सास्नालाङ्गूलककुदखुरविषाणार्थरूपं बुद्धौ प्रतिभासते, न स शब्दः, द्रव्यत्वात् ; नापि तच्छरीरपरिचालनादिकं, क्रियात्वात्, नापि शुक्लादिकं, गुणत्वात् ; नापि सामान्यभूतस्य गोव्यक्तिनाशेऽपि यस्य न विनाशः सः, आकृतित्वात् । किन्तर्हि, "येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्दः । अथवा प्रतीतपदार्थको लोके ध्वनिः (२) शब्द इत्युच्यते ।"

---

पश्चात् साधनन्तु येषामभिमतं तदपि न तेषां भाष्यविरुद्धमिति पूर्व्वोक्तेनैवोपपन्नम् । उपसर्गव्यतिरिक्तानां निपातान्तराणामपि वाचकता पदान्तरार्थान्वयबोधं प्रति साकाङ्क्षतया, द्योतकता तु पदान्तराध्याहारेण सिद्ध्यत इत्युभयी गतिः । तद्यथा "अथ शब्दानुशासन"मित्यत्र प्रथमान्तस्य शब्दानुशासनपदस्यार्थान्वयबोधं प्रति अथशब्दस्याधिक्रियमाणार्थकतायाः साकाङ्क्षता ; अधिकारद्योतकत्वपक्षे तु अधिक्रियत इति क्रियाध्याहारः। सुतरां द्योतकत्वं वाचकत्वमुभयमेव सिद्ध्यतीति बोध्यम् । "अव्ययं विभक्तिसमीपे"त्यादि (२।१।६) सूत्रे "अथवा नेमे समासार्थां निर्दिश्यन्ते । किन्तर्हि । अव्ययार्था इमे निर्दिश्यन्ते" इति भाष्येण अव्ययानां वाचकत्वं द्योतकत्वमुभयमेवोपन्यस्तम् । व्याख्यानावसरे "अव्ययं समृद्ध्यादीनां वाचकमिति" वदता कैयटेनापि तदङ्गीकृतम् । अत्र तु द्योतकत्वपक्षमाश्रित्य कैयटेनोक्तम् "अनेकक्रियाविषयस्यापि शब्दानुशासनस्यारभ्यमाणताथशब्दसन्निधाने प्रतीयते ।" सर्व्वेषां पक्षाणामेकैकस्य स्थानगतप्रयोजनमनुसृत्य ग्रहणं सुनिश्चयस्य समीचीनः पन्थाः ।

शब्दानुशासनशब्देनात्र पाणिनिप्रणीतं व्याकरणशास्त्रं विवक्षितम् । अनुशिष्यन्ते विविच्य असाधुभ्यः प्रविभज्य साधवो बोध्यन्तेऽनेनेत्यनुशासनम् । शब्दानामनुशासनं शब्दानुशासनम् । "कर्म्मणि चेति" (२।२।१४) सूत्रस्य निषेधविषयः "उभयप्राप्तौ कर्म्मणि"इति (२।३।६६) सूत्रसिद्धा षष्ठी । अत्र प्रयोजनाभावादाचार्य्यपदानुपादानात् नास्त्युभयप्राप्तिः । अतएव "कर्तृकर्म्मणोः कृति" (२।३।६५) इत्यनेन प्राप्ता या कर्म्मणि षष्ठी तदन्तेनेध्मप्रव्रश्चनवत् समासः । वेदे भवा वैदिकाः, अध्यात्मादित्वाट्ठञ् । लोके भवा यद्वा लोके विदिता लौकिकाः "लोकसर्व्वलोकाट्ठञ्" (५।१।४४) ।

(२) ध्वनिरिति । लोके ध्वनिशब्दयोरभेदो दृश्यते । तद्यथा प्रोद्वेगकरं ध्वनिं कुर्व्वन्तं जनं लोका वदन्ति शब्दं मा कार्षीः, मनोहरध्वनेरनिवृत्तये तु शब्दं कुर्व्विति । अत्र

कानि पुन: शब्दानुशासनस्य प्रयोजनम् ?

---

भाष्यकृता भेदेऽपि ध्वनिस्फोटयोरभेदेन ग्रहणं कृतम् । "स्फुट्यते व्यज्यते वर्णैरिति स्फोटः ।" "वर्णातिरिक्तो वर्णाभिव्यङ्ग्योऽर्थप्रत्यायको नित्यः शब्दः स्फोटः ।" "स्फोटाख्यो निरवयवो नित्यः शब्दो ब्रह्मैव ।" इत्यादिभिर्दर्शनकृद्वचनैर्भावो हि स्फोटः, तस्य च श्रुतिगोचरध्वनितोऽतएव भेदः प्रतीयते । कथं भाव इति ? अव्यक्तं किमपि यद्ध्वन्यात्मकैर्वर्णैर्व्यज्यते स स्फोटः । तत्तु निर्विशेषसत्तामात्रमिति ब्रह्मशब्दयोरभेदोपादानम् । सत्ता हि अभावप्रतिद्वन्द्वी भावः । भावस्तु तत्परिभाषितद्रव्यादिष्वन्तर्भूतः । अतएव स एव हि स्फोट इति वक्तुं सुकरम् । तत्तथैवास्तु । स्फोटवादेषु अष्टौ पक्षाः । १ वर्णस्फोटः २ पदस्फोटः ३ वाक्यस्फोटः ४ अखण्डपदस्फोटः ५ अखण्डवाक्यस्फोटः । एते पञ्च व्यक्तिस्फोटाः । वर्णपदवाक्यभेदेन त्रिविधो जातिस्फोट इत्यष्टौ । निर्देष्टुमशक्यत्वात् न ह्येकस्य वर्णस्य अपि तु सर्वेषां वर्णानामानुपूर्व्विकावस्थितानां वाचकतेति वर्णस्फोटपक्षः । वर्णसमष्ट्यैव पदमुपलभ्यते । तत्र तु वृक्षं वृक्षेणेत्यादौ परिनिष्ठितरूपे क्रियांशो द्रव्यमभिव्यनक्ति क्रियांशो वा कर्मत्वादिकमिति विनिर्देष्टुमशक्यत्वात् परिनिष्ठितपदमेव वाचकं कर्मत्वादिविशिष्टस्येति पदस्फोटपक्षः । सर्वेषु पदेषु चास्ति वाक्यशक्तिः । यथा वृक्ष इत्युक्ते वृक्षोऽस्तीति गम्यते । पचतीत्युक्ते कर्तृकर्मकरणादि-सर्वकारकाणामुपस्थितिः । वाक्यप्रतिपादनार्थैव पदानां प्रयोगः । तेषु च केनैकेन वा वाक्यमभिव्यक्तमिति निर्देष्टुमशक्यत्वात् वाक्यमेव विशिष्टार्थशक्तमिति वाक्यस्फोटपक्षः । एतत् पक्षत्रयं जातिव्यक्तिघटितं सत् षट् । अखण्डपदस्फोटोऽखण्डवाक्यस्फोटश्चैवमेवावगन्तव्यः । कतिभिर्वर्णैरेकीभूयान्यवर्णप्रतीतं पदमेकं भवति न तत्र भिन्नेषु वर्णेषु पदत्वमस्ति, पदे वा परस्परासंसृष्टो भिन्नो भिन्नो वर्णो नास्ति, अतएव पदस्याखण्डता सिद्धा । पदैर्वाक्यस्यार्थप्रतीतिः, सापि सर्वेषां पदानां सम्मेलनेन सम्भवति, अनेनैकेन पदेनेति प्रविवेकाभावात् वाक्यस्याखण्डत्वमुपपन्नम् । वर्णपदवाक्यभेदेन पक्षत्रयमुपलक्ष्य कैयटस्त्वाह "वैयाकरणा वर्णव्यतिरिक्तस्य पदस्य वाक्यस्य च वाचकत्वमिच्छन्ति ।" अत्रापि सर्वे पक्षा भाष्ये प्रयोजनानुसारेण परिगृहीता इति सुधीभिस्तत्र द्रष्टव्यम् ।

कानीति । प्रश्ने कानि प्रयोजनमिति बहुवचनान्तेन विशेषणेनैकवचनान्तस्य

# २। रक्षोहागमलघ्वसन्देहाः प्रयोजनम् ।

(१) रक्षा वेदस्य, (२) ऊहा—मन्त्रशब्दानां यज्ञगतेन पुरुषेण भिन्नलिङ्गविभक्तिषु यथायथं विपरिणामनम्, (३) आगमः—श्रुती नित्याध्ययनम्, (४) लघुनोपायेन शब्द-विज्ञानम्, (५) असन्देहार्थम्—सन्दिग्धार्थपदेषु स्वरतोऽर्थाध्यवसायेनासन्देहः ।

---

विशेष्यस्यान्वयः "नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्" (१।२।६९) इति सूत्रेनैक-वद्भावस्य वैकल्पिकतया एकत्वैकवद्भावविरहेणान्यत्रैकवद्भावेन सिद्ध्यति । एवमस्योत्तरेऽपि बोध्यम् । प्रयुज्यते प्रवर्त्यतेऽनेनेति प्रयोजनः करणे ल्युट् । प्रवर्त्तयतीति प्रयोजनः बाहुलकात् कर्त्तरि ल्युट् । "उभयथापि प्रवर्त्तकविधिपरः पुंलिङ्गः । प्रयोजनशब्दः एकः फलपरः क्लीवपरः ।"

रक्षेति । वेदे लोपागमवर्णविकाराश्च दृश्यन्ते । लोपागमौ यथा—"देवा अदुह्र" अदुहतेत्यर्थः । अत्र दुहेर्लङि झस्यादेशे कृते "लोपस्त आत्मनेपदेषु" (७।१।४१) इत्यनेन तकारस्य लोपः "बहुलं छन्दसि" (७।१।८) इत्यनेन रुडागमः । वर्णविकारा यथा—"उदग्राभञ्च निग्राभञ्च ब्रह्म देवा अवीवृधन्" इत्यत्र "उदि ग्रहः"(३।३।३५) इति सूत्रे "उदग्राभनिग्राभौ च छन्दसि स्रुगुद्यमननिपातनयो"रिति वार्त्तिकेन स्रुगुत्तोलनाव-तारणयोरर्थयोर्घञ् "हृग्रहोर्भश्छन्दसि हस्येति वक्तव्य" मित्यनेन हस्य भकारः । ये तु लोपागमवर्णविकारानभिज्ञा न ते वेदान् परिपालयिष्यन्तीति तत्परिपालनाय व्याकरणाध्ययनं प्रयोजनम् ।

ऊहेति । यत्राङ्गजातं पूर्णमुपदिष्टं सा प्रकृतिः । यत्र न तथोपदिष्टं सा विकृतिः । "सौर्य्यं चरुं निर्व्वपेद्ब्रह्मवर्चसकाम" इत्यनेन विकृतौ योगो विहितः ; निर्व्वपणमन्त्रस्तु प्रकृतावभिहितः । तद्यथा तत्राग्नेर्मन्त्रोऽस्ति "अग्नये त्वा जुष्टं निर्व्वपामी"ति । इह तु ब्रह्मवर्चसकामेनाग्नेयविकारभूतसूर्य्योपयोगी निर्व्वपणमन्त्रस्तत ऊहनीयः । व्याकरणज्ञो हि विभक्तिविपरिणामेन तन्निर्वहति "सूर्य्याय त्वा जुष्टं निर्व्वपामी"ति । एवं "देवी-रापः शुद्धाः स्थ" इत्यत्र लिङ्गवचनविपरिणामेन "देवाज्य शुद्धमसी"ति । न ह्यव्या-करणज्ञेन तन्निर्वाहः । अतोऽध्येयं व्याकरणम् ।

३ । इमानि च भूयः शब्दानुशासनस्य प्रयोजनानि । तेऽसुराः । दुष्टः शब्दः । यदधीतम् । यस्तु प्रयुङ्क्ते । अविद्वांसः । विभक्तिं कुर्व्वन्ति । यो वा इमाम् । चत्वारि । उत त्वः । सक्तुमिव । सारस्वतीम् । दशम्यां पुत्रस्य । सुदेवोऽसि वरुण इति ।

(६) अपशब्दनिवारणम्, (७) दुष्टशब्दाप्रयोगः, (८) स्वरादिसंस्कारैणार्थपरिग्रहेण

---

आगम इति । वेदो हि षडङ्गः । षडङ्गेषु व्याकरणञ्च प्रधानम् । तत्र कृतप्रयत्नोऽन्यत्राप्रधानेषु फलवान् भवति । शास्त्रविध्यनुसारेण तदनध्ययने प्रत्यवायोऽध्ययने दुष्कृतिनिवृत्तिः । अतो हेत्वनुसन्धानं विनापि तन्नित्यमध्येयम्, नित्यकर्म्मवत् ।

लघुनेति । साध्वसाधुविवेकेन वैदुष्यलाभाय शब्दा अवश्यं विज्ञेयाः । शब्दानामानन्त्यान्न प्रतिपदपाठेन तदायत्तीकरणं सम्भवति । अतएव लघुनोपायेन तद्यथा निष्पद्येत तत् करणीयम् । न तद्विना व्याकरणेन सम्भवति । अतस्तदध्येयम् ।

असन्देहेति । "स्थूलपृषतीमनड्वाहीमालभेत"इत्यत्र स्थूला चासौ पृषती चेति कर्म्मधारयः । अत्र पक्षे गौः स्थूला पृषती विन्दुमती च । स्थूलानि पृषन्ति यस्या इति बहुव्रीहिः । अत्र स्थूलत्वं विन्दूनां गौः स्थूला वा कृशा वेति न कापि क्षतिः । इह वैयाकरणा लकाराकारे उदात्तत्वं दृष्ट्वा पूर्व्वपदप्रकृतिस्वरेण बहुव्रीहिं निश्चिन्वन्ति । न त्वव्याकरणज्ञास्तत् कर्त्तुं समर्थाः । अतः स्वरतोऽर्थनिरूपणेन सन्देहनिरसनायाध्येयं व्याकरणम् ।

अपशब्दनिवारणमिति । "म्लेच्छा मा भूमेत्यध्येयं व्याकरण"मिति भाष्यग्रन्थस्य स्वरसतो निबद्धम् । "तेऽसुरा"इति ब्राह्मणप्रतीकः । तद्यथा—"तेऽसुरा हेलयो हेलय इति कुर्व्वन्तः पराबभूवुस्तस्माद्ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यद-

अधीतस्यानिष्फलत्वात्, (९) अभ्युदयहेतुभूतकशब्दप्रयोगः, (१०) प्रत्यभिवादे प्लुतकरणम्,

---

पशब्दः ।" अत्रासुराणां पराभवे कारणं "हे ऽलयो हे ऽलयः" इत्यपशब्दकरणम् । "हैहेप्रयोगे हैहयो"रिति (८।२।८५) प्लुते 'हे अलयः, हे अलयः' इति प्रकृतिभावे कर्तव्ये (६।१।१२४) तदकरणं म्लेच्छनम् । "सर्वः प्लुतः साहसमनिच्छता विभाषा कर्तव्ये"ति प्लुतकरणस्य विवक्षाधीनत्वान्न प्रकृतिभावाभावे दोष इति मत्वा "हे ऽलयो हे ऽलयः" इति वाक्यद्विर्वचनमत्र म्लेच्छत्वं कथयन्त्यपरे" "सर्वस्य द्वे" (८।१।१) इत्यत्र पदग्रहणस्य चोदितत्वात् । नात्र शास्त्रीयद्विर्वचनमैच्छिकमाम्रेडितस्वरविहीनत्वादिति चेत् 'अलयः' इत्यत्रारिशब्दगतरेफस्य लत्वमपशब्दः ।

दुष्टशब्दाप्रयोग इति । "मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ।" इति शिक्षासु पठ्यते । 'यथेन्द्रशत्रु'रिति प्रतीकघटितस्ये'न्द्रशत्रुर्वर्द्धस्वे'त्यूह्यमानस्यामन्त्रत्वात् भाष्यकारेण मन्त्रशब्दमत्र. शब्दमात्रपरत्वेन गृहीत्वा "दुष्टः शब्दः स्वरतो वर्णतोवे"ति पाठः कृतः । पुरा किल पुत्रहन्तारमिन्द्रं प्रति प्रकुपितेन त्वष्ट्रा तद्विनाशाय वृत्राख्यं पुत्रान्तरमुत्पादयितुमिच्छताभिचार आरब्धः । 'तत्रेन्द्रशत्रुर्वर्द्धस्वे'ति मन्त्र ऊहितः । इन्द्रस्य शातयिता इन्द्रशत्रुः इन्द्रस्य हिंसकः सन् वर्द्धस्वेति तत्पुरुषघटितान्तोदात्ते कर्तव्ये प्रमादाद्दत्विजाद्युदात्तः प्रयुक्तः । ततः पूर्वपदप्रकृतिस्वरत्वेन बहुव्रीह्यर्थो लब्धः, इन्द्रश्च तेन वृत्रस्य शातयिताऽभवत् । "इन्द्रशत्रुर्वर्द्धस्वे"त्यत्र विधेयत्वान्न सम्बोधनविभक्तिस्तस्या अनुवादविषयत्वात् । यो हि पूर्वमिन्द्रशत्रुरभवत् तस्यैव सम्बोधनविभक्तियुक्तत्वं युक्तम् । यथा "राजन् युज्यस्व"इत्यत्र राजत्वसिद्धस्यैव न तु "राजा भव"इत्यत्र राजत्वाभिद्धस्य सम्बोधनम् । "यज्ञकर्मणि (१।२।३४)" इत्यत्र जपादिपर्युदासेन मन्त्राणामेकश्रुतिर्विहिता । "इन्द्रशत्रुर्वर्द्धस्व"त्यूह्यमानस्यामन्त्रत्वान्नैकश्रुतिः । कैश्चिज्जपादिषु प्रसज्यप्रतिषेधमाश्रित्यैकश्रुतिर्विहिता । तेषां मते एकश्रुत्यकरणं बहुव्रीहिस्वरकरणञ्चापराधः ।

स्वरादिसंस्कारेणेत्यादि । "यदधीतमविज्ञातं निगदेनैव शब्द्यते । अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ।" इत्यस्यार्थतः संग्रहः । अतएव "अनर्थकं माधिगीष्महीत्यध्येयं व्याकरण"मिति भाष्यकारनिर्वचनम् । निगदेन पाठमात्रेण न ज्वलति न प्रकाशते निष्फलं भवतीत्यर्थः ।

अभ्युदयेति । अत्र "यस्तु प्रयुङ्क्ते" इत्ययं प्रतीको भाष्ये कात्यायनप्रणीतभ्राजाख्यश्लोकेभ्यः परिगृहीतः । तद्यथा—"यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान् यथावद्व्यवहारकाले । सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद्दुष्यति चापशब्दैः ।" इति । अत्र "दुष्यति चापशब्दै"रित्यस्य कर्त्ता कः? अवाग्योगविन्न तु वाग्योगवित् । कथम्? यो हि वाग्योगवित् स यद्यप्यपशब्दान् जानाति तथापि साधुशब्दानेव प्रयुङ्क्तेऽतएवाभ्युदयभाग् भवति । विज्ञानाश्रितत्वात् भूयांसोऽप्यपशब्दा न तस्याभ्युदयरोधिनो भवन्ति । अवाग्योगविदोऽज्ञानं न तमपशब्दप्रयोगजनिताधर्म्माद्रक्षति । अजानन्नपि महापातकी यतः पतितो भवति । "यस्तु प्रयुङ्क्ते" इत्यादि श्लोकः "एकः शब्दः सम्यग्ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुग् भवती"ति श्रुत्यनुगृहीतत्वात् प्रमाणम् ।

प्रत्यभिवादे प्लुतकरणमित्यत्र "अविद्वांस" इति भाष्ये प्रतीकः । श्लोकस्तु—"अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुः । कामं तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेत् ।" "प्रत्यभिवादेऽशूद्रे" (८.२.८३) इति नियमेन गुरुणा प्रत्यभिवादे प्लुतः कार्य्यः । यो हि न प्लुतं कर्त्तुं जानाति स स्त्रीवदयमहमिति वक्तव्यो न त्वभिवादये देवदत्तोऽहमित्यादिना संस्कृतवाक्येन । अतः "स्त्रीवन्मा भूमे"त्यध्येयं व्याकरणम् ।

प्रयाजादिमन्त्रेष्विति । याज्ञिकाः पठन्ति । "प्रयाजाः सविभक्तिकाः कार्य्या" इति । प्रयाजमन्त्राः सविभक्तिका एव पठ्यन्ते । यदा हि विपत्पातेन व्यवच्छेदस्तदा पुनर्नैमित्तिकामिष्टिं विधाय तत्रेदमाम्नातम्—"प्रयाजाः सविभक्तिका" इति । अत्राग्निशब्दप्रकृतिकविभक्तियुक्ता एव मन्त्रा ऊह्याः ।

पदश इति । "यो वा इमां पदशः स्वरशोऽक्षरशो वाचं विदधाति, स आर्त्विजीनो भवति" इत्यतो "यो वा इमा"मिति भाष्ये प्रतीकः । पदं पदमिति पदशः—"संख्यैकवचनाच्च वीप्साया"(५।४।४३)मिति शस् । "स्वरशः"—स्वर उदात्तादिः । "अक्षरशः"—अक्षरं व्यञ्जनसहितोऽच् । "आर्त्विजीनः"—"यज्ञर्त्विग्भ्यां घखञौ" (५।१।७१)वित्यनेन ऋत्विजम् अर्हतीति आर्त्विजीनो यजमानः, "यज्ञर्त्विग्भ्यां तत्-

कर्म्मार्हतीत्युपसंख्यान''मिति वार्त्तिकेन ऋत्विक्कर्म्मार्हतीति आर्त्विजीनो याजकः। तस्मात् यजने याजने च विदुष एवाधिकार इति फलितार्थः ।

शब्दब्रह्मणेति । "चत्वारीति" भाष्ये प्रतीकः । चत्वारि शृङ्गेति वेदा वा एत उक्ता (नि १३।७) इति यास्कोक्त्या यज्ञात्मकाग्निं स्वीकृत्य सायनेनाप्यैषयमृक् व्याख्याता । सूक्तेऽस्मिन् अग्निसूर्य्यावग्गोघृतानामन्यतमो देवता । ततो यद्यपि भाष्यकारव्याख्या केवलं स्वमतपक्षपातेन प्रतीयते, तथापि वेदशब्दयोरभेदग्रहणेनेयं सिद्धा भवतीति तद्व्याख्यानं वयमनुसरामः । महान् देवः शब्दो वृषभत्वेनात्र वर्णितः, स च मानवे प्रविष्टः । तद्यथा ''चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्त्याँ आविवेश ।'' इति । (४म. ५८सू. ३ऋक्) । नामाख्यातोपसर्गनिपाताश्च चत्वारि शृङ्गाणि । भूतभविष्यद्वर्त्तमानाः कालास्त्रयः पादाः । व्यङ्ग्यव्यञ्जकभेदेन नित्यः कार्य्यश्चेति द्वौ शब्दात्मानौ द्वे शीर्षे । सप्त विभक्तयः सप्त हस्ताः । उरसि कण्ठे शिरसीति त्रिषु स्थानेषु बद्धः त्रिधा बद्धः । ज्ञानपूर्व्वकानुष्ठानेन कामदत्वात् वर्षणात् वृषभः । रोरवीति शब्दं करोति । महः महान् । देवः शब्दः । मर्त्त्यान् मरणधर्म्मणो मनुष्यान् । आविवेश प्रविष्टवान् । अनया च ''चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ।'' (१म. १६४सू. ४५ऋक्) नामाख्यातोपसर्गनिपाताश्च चत्वारि पदजातानि । प्रत्येकं तानि चतुर्भिर्भागैर्विभक्तानि । समग्राणि तानि के विदुः ? ब्राह्मणा ये मनीषिणः । मनस ईषिणो मनीषिणः—पृषोदरादित्वात् साधु । कथं मनीषिण एव विदन्ति ? गुहा गुहायाम् ''सुपां सुलुक्'' (७।१।३९) इत्यनेन सप्तम्या लुक् । गुहायामज्ञाने त्रीणि निहितानि नेङ्गयन्ति न चेष्टन्ते न निमिषन्ति न प्रकाशन्त इत्यर्थः । केवलं व्याकरणप्रदीपेन तानि प्रकाशन्त इति भावः । तुरीयं चतुर्णां पदजातानामेकैकस्य चतुर्थभागं मनुष्या अवैयाकरणा वदन्ति । पूर्व्वोक्तामृचमालम्ब्य भाष्यकारेणोक्तम् —''महता देवेन नः साम्यं यथा स्यादित्यध्येयं व्याकरण''मिति । तदनुसरणेनैवात्र—''शब्दब्रह्मणा साम्यसम्पादनार्थ''मिति संक्षेपः ।

वाचामिति । ''उत त्व'' इत्यत्र भाष्ये प्रतीकः । ऋक् तु तत्रैव—''उत त्वः पश्यन्

(१५) वाचां संस्करणम्, (१६) अपशब्दप्रयोगजनितप्रायश्चित्तपरिहारः, (१७) अतद्धित-

---

ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम्। उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः।" (१०म. ७१सू. ४ऋक्)। उत अपि खलु त्वः एकः अविद्वानिति शेषः एनां वाचं पश्यन् प्रत्यक्षेण शब्दस्वरूपाण्यवलोकयन्नपि न ददर्श न पश्यति। उत अपि खलु त्व एकः शृण्वन्नपि न शृणोति। अविद्वांसमुक्त्वा विद्वांसमाह—उत उ अपि खलु त्वस्मै विदुषे, पत्ये उशती कामयमाना सुवासा जायेव तन्वं विसस्रे तनुं विवृणुते। "वाङ्नो विवृणुयादात्मानमित्यध्येयं व्याकरण"मिति भाष्यस्वरसात् "वाचामप्रकटत्वा-पवारण"मिति मूले।

वाचां संस्करणमिति। "सक्तुमिवे"ति भाष्ये प्रतीकः। ऋक् तु तत्रैव—"सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत। अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताऽधि वाचि।" (१ म. ७१सू. २ऋक्)। सच सेचन इत्यतः सक्तुः दुर्धावः दुःशोध इति तदर्थः। कसतेर्वा पृषोदरादित्वाद्वर्णव्यत्ययेन सक्तुः विकसित इति तदर्थः। ततवद्विस्तारयुक्तं वा तुन्नवद्बहुच्छिद्रं वा परिपवनं शोधनसाधनं तितउ तनोतेर्डुः सन्वच्च (उ ५।५२)। "चालनी तितउः पुमानि"ति अमरः। पुंनपुंसकवर्गे—"स्याद्वा तु हिङ्गु तितउ" इति त्रिकाण्डशेषः। अमरस्य केवलं पुंस्त्वनिर्देशो भाष्यानुरोधाद्व्यवच्छेद्यः। तितउना सक्तुं पुनन्तः तुषाद्यपनयनेन पवित्रं कुर्वन्त इव धीराः ध्यानवन्तः वैयाकरणाः मनसा प्रज्ञानेन वाचम् अक्रत—"मन्त्र घस-ह्वर-णश-वृ-दहाद्-वृच्-कृ-गमि-जनिभ्यो लेः" (२।४।८०)रित्यनेन लेः (च्लेः) लुकि कृधातोरक्रतेति रूपम्—अकृषत शोधितवन्त इत्यर्थः। अत्रा—"ऋचि तु-नु-घ-मक्षु-तङ्-कु-त्रो-रुष्याणाम्" (६।३।१३३) इत्यनेन दीर्घः—अत्र दुरधिगम्ये मार्गे ते वैयाकरणाः सखायः सन्तः सख्यानि सायुज्यानि समानख्यातिनिब-न्धनैकत्वानि जानते। कुत एतदधिगम्यते ? एषां वाचि भद्रा शोभना लक्षणाद्भासनात् परिवृढा प्रभुत्व-सम्पन्ना संविल्लक्षणा लक्ष्मीर्भवति। अधिः सप्तम्यर्थद्योतकः।

अपशब्देति। "सारस्वती"मिति प्रतीकः। "याज्ञिकाः पठन्ति—'आहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेदि'ति। प्रायश्चित्तीया माभूमेत्यध्येयं व्याकरणम्।" "अपशब्दप्रयोगजनितप्रायश्चित्तपरिहारः" इत्यस्यैव भाष्यग्रन्थस्यानुसृतिः।

नामकरणम्. (१८) अध्ययनेन वस्रवत् सत्यदेवललाभः ।

---

प्रायश्चित्तीयामित्यत्र भवार्थे "वृद्धाच्छः" (४।२।११४)। प्रायश्चित्तीया इत्यत्र प्रायश्चित्ताय हिताखन्निमित्तोत्पादना इत्यर्थः ।

चतद्धितेति । "दशम्यां पुत्रस्ये"ति प्रतीकः गृह्यकारवचनाङ्गापित्र स्थितः। तत्र दशम्यामिति सामीपिकमधिकरणम् । तेन दश दिनानि व्यतीत्य तत्समीपवर्त्तिदिनमेव गृह्यते । "याज्ञिकाः पठन्ति—'दशम्युत्तरकालं पुत्रस्य जातस्य नाम विदध्यात्। घोषवदाद्यन्तरन्तस्थमवृद्धं त्रिपुरुषानूकमनरिप्रतिष्ठितं तद्धि प्रतिष्ठिततमं भवति । द्व्यक्षरं चतुरक्षरं वा नामकृतं कुर्य्यान्न तद्धित'मिति ।" दशम्या उत्तरः दशम्युत्तरः "पञ्चमीति" (२।१।३७) योगविभागात् समासः । दशम्युत्तरः कालो यस्मिन् कर्म्मणीति दशम्युत्तरकालम् अशौचविधायकदशदिनानन्तरं जातस्य पुत्रस्य नाम विदध्यात् । किंविधं तत् ? घोषवदादि ·घोषवान् वर्ण आदिर्यस्य । अन्तरन्तस्थम् अन्तर्मध्ये अन्तःस्था य र ल वा यस्य, अवृद्धम् आदैदौइज्जितम्, त्रिपुरुषानूकम् नामकरणे योऽधिकारी पिता तस्य ये त्रयः पुरुषाःताननुकायति अभिधत्त इति त्रिपुरुषानूकम् "अन्येषामपि दृश्यते" (६।३।१३७) इत्यनेन दीर्घः। त्रिपुरुषमित्यत्र "अकारान्तोत्तरपदद्विगुः स्त्रियां भाष्यते" इत्यनेन स्त्रीत्वे प्राप्ते "पात्रादिभ्यः प्रतिषेधो वक्तव्य" इत्यनेन पात्रादित्वात् स्त्रीत्वप्रतिषेधः। त्रिपुरुषमनुकायतीति मूलविभुजादित्वात् कः । "आतश्चोपसर्गे कः" (३।१।१३६) इत्यनेन कं विधाय पश्चात् षष्ठीतत्पुरुष इत्यत्र नानुमन्यते "यू स्त्र्याख्यौ नदी"(१।४।३)ति सूत्रे "ननु चोक्तं स्त्र्याख्यायाविति प्राप्नोति अनुपसर्गे हि को विधीयत इति। मूलविभुजादिपाठात् को भविष्यती"ति भाष्योक्तिसाम्यात्, "कर्म्मण्यण्" (३।२।१) इति सूत्रे पठितेन "अकारादनुपपदात् कर्म्मोपपदो विप्रतिषेधेने"ति वार्त्तिकेन कर्म्मोपपदस्यानुगृहीतत्वाच्च । अनरिप्रतिष्ठितम् शत्रुनामवर्ज्जितम् । पुनः किंविधम् ? द्व्यक्षरं चतुरक्षरम् । किञ्च भो न कर्त्तव्यम् ? न तद्धितम् कर्त्तव्यम् । "न चान्तरेण व्याकरणं कृतस्तद्धिता वा शक्या विज्ञातुम्" इत्युक्तिमनुसृत्योक्तम्—"अतद्धितनामकरण"मिति ।

अध्ययनेनेति । "सुदेवो असो"ति भाष्ये प्रतीकः। ऋक् तु तत्रैव—"सुदेवो असि

"वेदान्नो वैदिकाः शब्दाः सिद्धा लोकाच्च लौकिकाः" अतोऽनर्थकं व्याकरणमिति विप्रतिपन्नबुद्धीनां व्याकरणाध्ययनविमुखानां प्रवृत्त्यर्थं प्रयोजनान्याख्यातान्याचार्य्येण ।

---

वरुण यस्य ते सप्त सिन्धवः । अनुचरन्ति काकुदं सूर्म्यं सुषिरामिव ।" (८म. ६८सू. १२ऋक्) इति । हे वरुण सुदेवोऽसि सत्यदेवोऽसि । यस्य ते काकुदं तालु—काकुर्जिह्वा साऽस्मिन्नुद्यते इति काकुदम्, धातूनामनेकार्थत्वात् वदेरुत्क्षेपणार्थः, "घञर्थे कविधान"मिति अधिकरणे कः, सम्प्रसारणम् ; अनुपपदाश्रयकविधानात् पाक्षिकषष्ठीसमासः ; तत्र शकन्ध्वादित्वात् पररूपम् । तुदधातोरधिकरणे कः पृषोदरादित्वान्नोलोप इत्यपरे—सप्त सिन्धवः नद्य इव सप्त विभक्तयः अनुचरन्ति तालुनुप्राप्य प्रकाशन्ते ; सुषिरां सच्छिद्राम्—"ऊषिसुषिमुष्कमधो रः" (५।२।१०७) इति सुषेर्मत्वर्थीयो रः "रन्ध्र-श्वभ्रं तथा सुषि" रित्यमरः । "सरन्ध्रे सुषिरं त्रिषु" इति च 'सुष्ठु श्वसीति सुषि"रिति चीरस्वामी—सूर्म्यं सूर्म्मीं—"अमि पूर्व्वः" (६।१।१०७) इत्यत्र "वा छन्दसि" (६।१।१०६)त्यनुवृत्तेर्यणादेशः—लौहमयीं प्रतिमामिव । यथा सच्छिद्रां लौहमयीं प्रतिमां प्रविश्याग्निस्तां मलशून्यां करोति, तथा सप्त विभक्तयः शरीरगतं पापमपाकुर्व्वन्तीति फलितार्थः । यतो व्याकरणज्ञानात् वरुणः सत्यदेवत्वमापन्नः, अन्येऽपि तज्ज्ञानात्तथा भविष्यन्तीत्याह "सत्यदेवः स्यामित्यध्येयं व्याकरणम्" । इममेवार्थं वाक्यान्तरेण व्यबध्नात्—"अध्ययनेन वरुणदेववत् सत्यदेवत्वलाभ" इति ।

वेदान्न इति । पुरा व्याकरणाध्ययनव्युत्पन्नेभ्यो वैदिकाः शब्दा उपदिष्टाः । अधुना तु न तथा । विवाहादौ त्वरमाणा वेदमधीत्य त्वरितवक्तारो भवन्ति । ते पुनराचार्य्येण व्याकरणशिक्षार्थमभ्यर्थिता अपि "वेदान्नो वैदिकाः शब्दाः सिद्धा लोकाच्च लौकिका" इति वादमवलम्ब्य तदध्ययने निवृत्ता भवन्ति । तान् प्रति सुहृद्भूत्वाचार्य्यः प्रयोजनान्यन्वाचष्ट । मन्वादिषु वेदवेदाङ्गानां युगपदध्ययनं दृश्यते । तत्कथं भाष्यकारेणोक्तं "पुरा कल्प एतदासीत् । संस्कारोत्तरकालं ब्राह्मणा व्याकरणं स्माधीयते । तेभ्यस्तत्तत्स्थानकरणनादानुप्रदानज्ञेभ्यो वैदिकाः शब्दा उपदिश्यन्ते ।" अत्रार्थाद्यनुसन्धानेन विशेषतोऽध्ययनमभिप्रेतम्, न तु कण्ठस्थकरणमात्रम् । मन्वादीनां युगपदध्ययननिबन्धनन्तु आदौ कण्ठस्थकरणे व्याकरणज्ञानानन्तरं विशेषाध्ययने पर्य्याप्तमिति सर्व्वं समञ्जसम् ।

कथं शब्दानुशासनं कर्त्तव्यम्? इदमेव विचार्य्यते। किं शब्दोपदेशः कर्त्तव्यः, आहोस्वित् अपशब्दोपदेशः, आहोस्विदुभयोपदेशः? अन्यतरोपदेशेन कृतं स्यात्। तद्यथा भक्ष्यनियमेनाभक्ष्यप्रतिषेधः, अभक्ष्यप्रतिषेधेन भक्ष्यनियमो भवति। किन्तर्हि अपशब्दोपदेशो विधातव्यः? एकैकस्य शब्दस्य बहवोऽपभ्रंशाः, अतः

## ४। लघुत्वाच्छब्दोपदेशः।

अनेन च

## ५। इष्टान्वाख्यानं खल्वपि भवति।

साधुशब्दप्रयोगात् धर्म्मावाप्तिः। साप्यनेन सिद्ध्यति।

तत्र शब्दानामानन्त्यात् प्रतिपदपाठो न सम्भवति। कथं तर्हि शब्दानां प्रतिपत्तिः? तत्राह

---

कथमिति। को वा शब्दः, किं वा तत्स्वरूपम्, कानि वा शब्दानुशासने प्रयोजनानि, सर्व्वमिदमुक्तम्। अधुना कथं शब्दानुशासनं कर्त्तव्यं तदुक्तमाह कथमिति। प्रथमं तावत् शब्दानामपशब्दानामुभयेषां वानुशासनमिति प्रश्नः। तत्र शब्दानामपशब्दानामन्यतरोपदेशेन मनोरथसिद्धिरित्याह। कथम्? भक्ष्याभक्ष्यनियमप्रतिषेधवत्। तद्यथा पञ्च पञ्चनखा भक्ष्या इत्युक्त्वा भक्ष्यनियमे कृते ततोऽन्येऽभक्ष्या इत्युपलभ्यते। अभक्ष्यो ग्राम्यकुक्कुटः, अभक्ष्यो ग्राम्यशूकर इत्युक्त्वा अभक्ष्यप्रतिषेधे वन्यकुक्कुटो वन्यशूकरो भक्ष्य इत्युपलभ्यते। एवं गौरिति शब्दोपदेशे गाव्यादयोऽपशब्दा इति प्रतीयते। यद्यन्यतरोपदेशेन साफल्यं स्यात्, तत् किम् अपशब्दोपदेशेन तदन्याः शब्दाः प्रत्येतव्याः? न, गौरवापत्तेः। तद्यथा गौरित्येकः शब्दः, तस्यापभ्रंशाः गावी गोणी गोपोतलिकेत्येवमादयो बहवः। अतएवापशब्दोपदेशस्य गरीयस्त्वाल्लघीयान् शब्दोपदेश एव ज्यायान्। तेन च इष्टलाभोऽपि भवेत्।

तत्रेति। गौरश्वः पुरुष इत्येवमादयः प्रतिपदपाठो न सम्भवति शब्दानामपरिगणनीयत्वात्। तत्रेयमाख्यायिका—इन्द्रो बृहस्पतिमुपगम्य प्रतिपदोक्तानां शब्दानां

**६। किञ्चित्सामान्यविशेषवल्लक्षणं प्रवर्त्त्यं येनाल्पेन यत्नेन महतो महतः शब्दौघान् प्रतिपद्येरन्।**

किं पुनस्तत्? उत्सर्गापवादौ। सामान्येनोत्सर्गः। विशेषतोऽपवादः। तद्यथा —"कर्म्मण्यण्" (३।२।१)—उत्सर्गः; तस्य विशेषेणापवादः—"आतोऽनुपसर्गे कः" (३।२।३) इति। इममेवार्थं संक्षिप्य वृत्तिकार आह "प्रकृत्यादि-विभागकल्पनया सामान्यविशेषवता लक्षणेने"ति।

केचिद्वदन्ति आकृतिरेव शब्देन प्रतिपाद्यते, केचिच्च द्रव्यमिति। पाणिनराचा-

---

शब्दपारायणं नाम शास्त्रविशेषं दिव्यं वर्षसहस्रमधिजगे, नान्तं जगाम। तामिमामाश्रित्य भाष्यकार आह "वृहस्पतिश्च प्रवक्ता इन्द्रश्चाध्येता, दिव्यं वर्षसहस्रमध्ययनकालः न चान्तं जगाम। किं पुनरद्यत्वे यः सर्व्वथा चिरं जीवति स वर्षशतं जीवति।" ग्रहणाभ्यासाध्यापनव्यवहारभेदेन चतुर्भिः प्रकारैर्विद्योपयोगः। तत्र प्रतिपदपाठानुसरणे ग्रहणकालेनैव कृत्स्नायुःपर्य्यवसानं स्यात्, अभ्यासादिकन्तु न भवेदेव। अतएवोक्तं महर्षिवर्य्येण "तस्मादनभ्युपायः शब्दानां प्रतिपत्तौ प्रतिपदपाठः।"

केचिदिति। लक्ष्यसिद्ध्यर्थं सूत्रकृता पक्षद्वयमप्याश्रीयते अन्यथा प्रक्रियासिद्धौ व्याघातापत्तिः। तद्यथा केवले जातिपक्षसमाश्रये "सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवे"ति न सिद्ध्येत् केवले व्यक्तिपक्षसमाश्रये "पुनःप्रसङ्गविज्ञानादि"ति न घटेत। जातौ पदार्थे द्वयोर्विध्योः क्वचिदेकत्र प्रसङ्गे परस्परप्रतिबन्धान्न कार्य्यं स्यात्। यतस्तयोस्तुल्यत्वात् परस्परपरिहारेण स्वजातिगतव्यक्तिविशेष एव चरितार्थता। "विप्रतिषेधे परं कार्य्य"(१।४।२)मिति विप्रतिषेधसूत्रेण परं तावद्भवतीति अप्राप्तिप्रापको विधिर्भवति। सुतरां यदि पूर्व्वस्य निमित्तमस्ति तत्प्रसङ्गे न बाधापत्तिः। यथा भिन्धकीत्यत्र भिन्द्-हि इति स्थिते "हुझल्भ्यो हेर्धिः" (६।४।१०१) इत्यनेन हेर्धिभावः, "अव्ययसर्व्वनाम्नामकच् प्राक् टे"(५।३।७१)रित्यत्र "तिङश्चे" (५।

र्थेणोभयथा हि सूत्राणि पठितानि। तद्यथा आकृतिं पदार्थमभ्युपगम्य "जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्" (१।२।५८) इत्युच्यते, द्रव्यं पदार्थमभ्युपगम्य "सरूपाणामेकशेष एकविभक्तौ" (१।२।६४) इत्येकशेष आरभ्यते।

---

३।५६)त्यस्यानुवृत्तेः अकच्, इत्युभयोर्विध्योः परत्वात् हेर्धिर्भवति अथच बाधाभावात् पुनः प्रसङ्गविज्ञानादकजपि प्राप्नोति। किन्तु जुहुतात्त्वमित्यत्र धिभावं बाधित्वा परत्वात् "तुह्योस्तातङाशिष्यन्यतरस्याम्"(७।१।३५)मित्यनेन तातङि कृते स्थानिवद्भावात् धिप्राप्तिर्यन्निमित्तमस्ति न तद्बाध्यते। व्यक्तिपक्षे तु सकलव्यक्तिविषयकस्य विधेः एकस्यां व्यक्तौ चरितार्थस्य अन्यस्यां प्राप्तौ न बाधास्तीति विकल्पप्रसङ्गात् विप्रतिषेधसूत्रं तत्र परमेव भवति न तु पूर्व्वमिति नियमार्थं भवति। अत एकत्र विधिद्वयप्रसङ्गे परमेव भवति न तु पूर्व्वमिति नियमात् विकल्पत्वं व्याहतं भवति। अत्र भिन्धकीतिवत् जुहुतात्त्वमिति न सिद्ध्यति पुनः प्रसङ्गविज्ञानात्, किन्तु "सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव"त्यस्य विषयत्वात् जुहुतात्त्वमित्येतस्य पुनर्धिभावत्वं बाधते। अतः पक्षद्वयाश्रयेणैव लक्ष्यसिद्धिर्भवतीति "आकृतिं पदार्थं मत्वा जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्यामित्युच्यते द्रव्यं पदार्थं मत्वा सरूपाणामित्येकशेष आरभ्यते।"

जातिव्यक्तिघटितोऽयं विचारोऽवगन्तव्यः। जातिवादिन आहुः—जातिरेव शब्देन प्रतिपाद्यते, व्यक्तीनामानन्त्यात् तासु शब्दसम्बन्धग्रहणस्यासम्भवात्। सर्व्वव्यक्तिषु जातिरेकाकारताप्रतीतिमुत्पादयति, अतोऽस्या अस्तित्वमवसीयते। अनयैव भिन्नेषु द्रव्येषु भिन्नेषु गुणेषु भिन्नासु क्रियासु भिन्नाकारतया भासमानया भिन्नद्रव्याद्भिन्नद्रव्यं भिन्नगुणाद्भिन्नगुणः भिन्नक्रियाया भिन्नक्रियावच्छिद्यते। गवादयो द्रव्यवाचकाः, शुक्लादयो गुणवाचकाः, गमहनपठादयः क्रियावाचकाः शब्दा भिन्नद्रव्यगुणक्रियासमवेतां जातिमभिदधति। तस्यां प्रतीतायां तदावेशात् तदवच्छिन्नानि द्रव्यादीनि प्रतीयन्ते। अतो लाघवाज्जातिरेव शब्दस्य वाच्या न तु व्यक्तिः। उक्तञ्च हरिणा—"सम्बन्धिभेदात् सत्तैव भिद्यमाना गवादिषु। जातिरित्युच्यते तस्यां सर्व्वे शब्दा व्यवस्थिताः॥ तां प्रातिपदिकार्थञ्च धात्वर्थञ्च प्रचक्षते। सा नित्या सा महानात्मा तामाहुस्त्वतलादयः।" स्फोटत्वमपि जातिरेव, उक्तञ्च तेनैव "अनेकव्यक्त्यभिव्यङ्ग्यजातिस्फोट इति

किं पुनः नित्यः शब्दः, आहोस्वित्कार्य्यः । उभयथापि लक्षणं प्रवर्त्त्यम् । कथं पुनरिदं पाणिनेराचार्य्यस्य शास्त्रं प्रवृत्तम् ?

## ७ । सिद्धे शब्दार्थसम्बन्धे । * ।

सिद्धे शब्दे अर्थे सम्बन्धे चेति । सिद्धशब्दो नित्यपर्य्यायवाची, अतएव शब्दो नित्यः

---

स्मृतम् । कैश्चिद्व्यक्तय एवास्या ध्वनित्वेन प्रकल्पिताः ॥" इति । गोत्वादिजातिसम्बन्धाद्द्रव्यस्य, द्रव्ये गुणादेः प्रतीतिरिति भेदः । व्यक्तिवादिनस्त्वाहुः, व्यक्तिरेव स्वभावतः प्रतीयते ; जातिस्तु समधर्म्मिणामेकत्वनिर्व्वाहाय साधारणधर्म्मग्रहणेन त्वप्रत्ययादियोगेन । तदुपलक्षणेन हि व्यक्तेरानन्त्यदोषापनयः । नन्वेवं जात्या व्यक्तिप्रतीतेस्तस्या एव वाच्यत्वमायाति । न, स्वयमसदपि प्रतीतिमुत्पादयति । तद्यथा गमनस्यागमनं भोजनस्याभोजनम् । अगमनेन हि गमनमभोजनेन हि भोजनमवच्छिद्यते । एवमिहापि व्यक्त्यतिरिक्तजातेरसत्त्वेऽपि तया व्यक्तिपरिग्रहः । जातिराकृतिः, व्यक्तिर्द्रव्यम् ।

किं पुनरिति । अत्र भाष्यकृता शब्दानां नित्यत्वकार्य्यत्वनिर्द्धारणाय विचारो नोत्थापितः । संग्रहग्रन्थे दोषान् प्रयोजनानि च सयुक्तिकं प्रदर्श्य नित्यत्वं कार्य्यत्वमुभयमेव निर्णीतमित्युक्त्वाह "उभयथापि लक्षणं प्रवर्त्त्य"मिति । संग्रहो व्याड़िकृतो लक्षश्लोकसंख्यो ग्रन्थ इति प्रसिद्धिः । अत्र नित्यत्वकार्य्यत्वयोः स्वरूपं कैयटेनैवमुक्तम् "केचिद्वनित्यव्यङ्ग्यं वर्णात्मकं नित्यं शब्दमाहुः । अन्ये वर्णव्यतिरिक्तं पदस्फोटमिच्छन्ति । वाक्यस्फोटमपरे संगिरन्ते । अन्ये तु ध्वनिरेव शब्दः स च कार्य्यस्तद्व्यतिरेकेणान्यस्यानुपलम्भादित्याचक्षते ।"

कथं पुनरिति । प्रश्नोऽयं शब्दार्थसम्बन्धानां स्रष्टृत्वमथवा स्मर्त्तृत्वमाचार्य्यस्येति प्रदर्शनाय ।

नित्यत्वमत्र शब्दस्य स्फोटत्वेन । ये तु शब्दानां कार्य्यत्वं मन्यन्ते तेषां मतेऽपि प्रवाहनित्यतया नित्यत्वम् । अर्थस्यापि जातित्वेन नित्यत्वम्, व्यक्तिपक्षे तु प्रवाहनित्यतया नित्यत्वम् । शब्दार्थयोः सम्बन्धस्यापि नित्यता व्यवहारपरम्परया अनादित्वात् ।

अर्थो नित्यः, तदुभयोः सम्बन्धो नित्यः। ननु सिद्ध आकाश इत्यादिष्वविनाशिदेशान्तर-प्राप्तिरहितभावेषु सिद्धशब्दो यथा प्रयुक्तस्तथा सिद्ध ओदन इत्यादिषु कार्य्येष्वपि, तत् कथं नित्यपर्य्यायवाची? संग्रहग्रन्थे कार्य्यप्रतिद्वन्द्विभावादस्य नित्यपर्य्यायवाचकत्वम्। अथवा सिद्धसाध्ययोः सिद्ध एव न साध्य इत्येकपदेनावधारणम्। तद्यथा अब्भक्षशब्देन अप एव भक्षयतीति गम्यते। अत्यन्तसिद्धः सिद्ध इति पूर्व्वपदलोपो वात्र द्रष्टव्यः। "व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षण"मिति न्यायमाश्रित्य व्याख्यानतो नित्यपर्य्यायवाचिनो वा ग्रहणम्। ननु नित्यशब्द आभीक्ष्ण्यार्थेऽपि वर्त्तते तद्यथा नित्यप्रहसितः। अत्रापि व्याख्यानतो विशेषप्रतिपत्तिरिति न्यायेनैवार्थः स्यात्। इहासन्दिग्धार्थं नित्यशब्दमनुपादाय सिद्धशब्दोपन्यासो मङ्गलार्थम्।

कं पुनः पदार्थं मत्वैष विग्रहः क्रियते, सिद्धे शब्दे अर्थे सम्बन्धे चेति। आकृति-

---

सिद्ध ओदन इति। सिद्धशब्दोऽत्र निष्पन्नार्थकः। संग्रहग्रन्थ इति। संग्रहग्रन्थे शब्दः कार्य्योऽथवा सिद्ध इति पक्षद्वयं विचारितम्। तत्र सिद्धशब्दः कार्य्य-प्रतिपक्षार्थाभिधायित्वेन प्रयुक्त इत्यत्र नित्यपर्य्यायवाचित्वेन तस्य ग्रहणम्।
एकपदेनावधारणमिति। एवशब्दप्रयोगे द्विपदमवधारणम्, तदप्रयोगे यत्र सामर्थ्या-दवधारणमवगम्यते तदेकपदमिति। पूर्व्वपदलोप इति। यथा देवदत्त इत्यत्र दत्तः, सत्यभामेत्यत्र भामा। मङ्गलार्थमिति। "सिद्धे शब्दार्थसम्बन्धे" इति वार्त्तिकेन वार्त्तिकपाठ आरभ्यते। तदुपलक्ष्य भाष्यकार आह "माङ्गलिक आचार्य्यो महतः शास्त्रौघस्य मङ्गलार्थं सिद्धशब्दमादितः प्रयुङ्क्ते। 'मङ्गलादीनि शास्त्राणि प्रथन्ते वीरपुरुषाणि च भवन्ति आयुष्मत्पुरुषाणि च, अध्येतारश्च सिद्धार्था यथा स्यु'रिति।" सिद्धशब्दस्य नित्यपर्य्यायवाचित्वेन वर्णने शक्तिमनुभूयाचार्य्यस्तमादितो मङ्गलार्थं प्रायुङ्क्तेति प्रथमव्याख्याने न दोषः।

विग्रह इति। सिद्धे शब्दे अर्थे सम्बन्धे चेति विग्रहो नित्यत्वपक्षे। अनित्यत्वपक्षे तु सिद्धे शब्दे अर्थसम्बन्धे चेति। अर्थेऽनित्येऽपि सम्बन्धस्य नित्यता शब्दाश्रयत्वात्। अर्थ-वतां शब्दानां नित्योऽभिसम्बन्धोऽर्थैरिति सम्बन्धविशेषणतयार्थग्रहणम्। युक्तितो-नित्यत्वानित्यत्व इति। प्रथमन्तावदाकृतिर्हि नित्या द्रव्यमनित्यम्। द्रव्यस्योत्पत्तिविना-शादिकं दृश्यते न तथाकृतेरतएव सा नित्या। द्वितीये द्रव्यं हि नित्यम् आकृतिरनित्या,

द्रव्ययोर्युक्तितोनित्यत्वानित्यत्वे सिद्धे, यन्नित्यं तं पदार्थं मत्वैष विग्रहः, सिद्धे शब्दे अर्थे सम्बन्धे च ।

## ८। लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्म्मनियमः । * ।

अथ कथं पुनर्ज्ञायते सिद्धः शब्दोऽर्थः सम्बन्धश्चेति । लोकतः । लोके हि बुद्धा वस्तु निरूप्यार्थावगमाय शब्दान् प्रयुञ्जते, न च घटादिवत् तेषां निर्वृत्तौ यत्नं कुरुते । यदि तर्हि लोक एव प्रमाणम् किं शास्त्रेण ? धर्म्मनियमः । धर्म्माय नियमः धर्म्मनियमः, धर्म्मार्थो वा नियमो धर्म्मनियमः, धर्म्मप्रयोजनो वा नियमो धर्म्मनियमः । यथा लौकिक वैदिकेषु "अभक्ष्यो ग्राम्यकुक्कुटः ।" "भगूणामङ्गिरसा"मित्यादि ।

---

तद्यथा मृत् कयाच्याकृत्या युक्ता पिण्डो भवति, पिण्डाकृतिमुपमृद्य घटिकाः, घटिकाकृतिमुपमृद्य कुण्डिकाः क्रियन्ते । एवं सुवर्णादिष्वपि बोध्यम् । मृदादि द्रव्यं यथावतिष्ठति तदाश्रयेण त्वाकृतिरन्यान्या भवति । अतएव द्रव्यं नित्यमाकृतिरनित्या । न खल्वनेनाकृतेरनित्यत्वं सिद्ध्यति । एकत्राकृतेरदर्शनेन न तस्याः सर्व्वत्रादर्शनं भवति, सा तु द्रव्यान्तरस्थोपलभ्यते । "ध्रुवं कूटस्थमविचाल्यनपायोपजनविकार्य्यनुत्पत्त्यवृद्ध्यव्ययोगि यत्तन्नित्य"मिति लक्षणं नैकमात्रनित्यलक्षणम् "तदपि नित्यं यस्मिंस्तत्त्वं न विहन्यते ।" तद्भावो हि तत्त्वम् । आकृतेस्तद्भावो न कदाचन विहन्यते । यन्नित्यमिति । शब्दार्थौ हि बुद्धौ प्रतिभासते । शब्द उच्चारिते तदर्थस्तत्क्षणादेव बुद्ध्युपस्थितो भवति । अतो द्रव्याकृतिसम्बन्धेन नित्यत्वानित्यत्वमिति विचारं विनापि प्रवाहनित्यत्वादर्थस्यापि नित्यत्वमायातम् ।

न च घटादिवदिति । यो हि घटेन कार्य्यं कर्त्तुमभिलषति स कुम्भकारगृहं गत्वा तं वदति, कुरु घटं कार्य्यमनेन करिष्यामि । न तथा वैयाकरणगृहं गत्वा कोऽपि वदति कुरु शब्दान् तान् प्रयोक्ष्य इति । धर्म्मनियम इति । धर्म्माय नियमः धर्म्मनियमः । "चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः" (२।१।३६) इत्यत्र तदर्थेन चतुर्थ्यन्ता विभक्तिः प्रकृत्या सह समस्यते । धर्म्माय नियम इत्यत्र नास्ति प्रकृतिविकार-

९। समानायामर्थावगतौ शब्देनापशब्देन च शब्देनैवार्थोऽभिधेय इति नियमः। *।

लोकतोऽर्थमुपादाय शब्दान् प्रयुङ्क्ते। शब्दप्रयोगे तु शास्त्रेण धर्म्मनियमः क्रियते, शब्देनैवार्थोऽभिधेयो नापशब्देनेति, एवं क्रियमाणं कर्म्माभ्युदयकारि भवति।

ननु प्रयोगाद्यदि शब्दानां साधुत्वमप्रयुक्तानां का गतिः?

---

भावः। अत्र तु समासः "विकृतिः प्रकृत्येति चेदश्वघासादीनामुपसंख्यान"मित्यनेन। इह तादर्थ्यमस्ति न तु प्रकृतिविकारभावः। अश्वघासादिषु सम्बन्धसामान्ये षष्ठीं विधाय समासः क्रियते "अश्वघासादयः षष्ठीसमासा भविष्यन्ती"ति चोदितत्वात्। तादर्थ्यं सम्बन्धविशेषः, विशेषे च सामान्यं सम्भवतीति सम्बन्धसामान्येन षष्ठी प्रवर्त्तते। धर्म्माय नियमइत्यत्र चतुर्थी तादर्थ्येन प्रतिपाद्यते, समासस्तु सम्बन्धसामान्ये षष्ठ्या।

यथेति। तत्र लोकानुसारिप्रयोगस्य दृष्टान्तः लौकिकवैदिकेषु। इह लोके वेदे चेति प्रयोक्तव्ये तद्धितप्रिया दाक्षिणात्या लौकिकेषु वैदिकेष्विति वदन्ति। लोके भवा लौकिकाः वेदे भवा वैदिका इति सिद्धपदत्वात् नायमपशब्दः। प्रियतद्धितत्वन्तु एकत्राधाराधेयत्व-कल्पनेनाविष्कृतम्। अथवा लौकिकेषु वैदिकेषु सिद्धान्तेष्विति लोकवेदव्यतिरिक्त-सिद्धान्तशब्दार्थमभिधातुं तद्धितप्रयोग इति युक्त एव तद्धितार्थः। लौकिकनियमदृष्टान्तो यथा भाष्ये "लोके तावदभक्ष्यो ग्राम्यकुक्कुटः। अभक्ष्यो ग्राम्यसूकर इत्युच्यते। भक्ष्यं नाम क्षुत्प्रतिघातार्थमुपादीयते। शक्यं चानेनाश्वमांसादिभिरपि क्षुत् प्रतिहन्तुम्। तत्र नियमः क्रियते। इदं भक्ष्यमिदमभक्ष्यमिति।" शक्यं चानेनेत्यत्र कैयटः "शकेः कर्म्म-सामान्येन लिङ्गसर्व्वनामनपुंसकयुक्तो कृत्यप्रत्ययः। ततः पदान्तरसम्बन्धादुपजायमानमपि स्त्रीत्वं वहिरङ्गत्वादन्तरङ्गसंस्कारं न वाधते इति शक्यं क्षुदित्युक्तम्।" अत्रेदं विवेच्यम्। इह क्षुत् प्रतिहन्तुमित्युभयं शकेः कर्म्मत्वे परिगृह्य कर्म्मसामान्ये लिङ्गसर्व्वनामनपुंसकं कृतम्। स्वरसर्व्वनामैकश्रुतिवत् "नपुंसकं लिङ्गसर्व्वनामे"ति "दाण्डिनायन" (६।४।१७४) सूत्रे भाष्ये स्पष्टम्। सर्व्वेषां नाम सर्व्वनाम, लिङ्गानां सर्व्वनाम लिङ्गसर्व्व-नाम। शक्यं क्षुदित्यत्र स्याद्यदीह पूर्व्वमेव विशेषविवक्षा तदा शक्या क्षुदिति भवेदेव।

## १० । अस्त्यप्रयुक्तः ।

तद्यथा ऊष, तेर, चक्र, पच । न सन्ति चेदप्रयुक्ताः, कथं पुनः सन्ति ? सन्ति शास्त्रदृष्ट्या ।

## ११ । अस्त्यप्रयुक्त इति चेन्नार्थे शब्दप्रयोगात् ।

सन्ति चैतेषां शब्दानामर्था येष्वर्थेषु प्रयुज्यन्ते ।

---

यदि केवलं प्रतिहन्तुं शक्तेः कर्म्म स्यात्, चुत् तु प्रतिघातस्य, तदा चुधं प्रतिहन्तुं शक्यमिति भवेत् । प्रकृतमनुसरामः । तथा च तत्र वैदिकस्यान्तिमदृष्टान्तः । "तथाग्नौ कपालान्यधिश्रित्याभिमन्त्रयते । 'भृगूणामङ्गिरसां धर्म्मस्य तपसा तपध्वमिति । अन्तरेणापि मन्त्रमग्निर्दहनकर्म्मा कपालं सन्तापयति । तत्र च नियमः क्रियते, एवं क्रियमाणमभ्युदयकारि भवतीति ।" एवमिहापि शब्देनापशब्देन च समानार्थावगतिर्भवति । तत्र धर्म्माय नियमः क्रियते शब्देनैवार्थोऽभिधेयः, नापशब्देन । तत्र वार्त्तिकं "समानायामर्थावगता"वित्यादि । अपभ्रंशानां साक्षाद्वाचकता नास्ति वाचकता तु साधुशब्दस्मरणद्वारेति पक्षोऽत्र नादृतः । साधुशब्दवत् पदार्थस्मरणद्वारैव तेषामर्थवाचकता ।

अस्त्यप्रयुक्त इति । यतः प्रयोगात् साधुत्वं ततो येषां नास्तीदानीं प्रयोगस्तेषामसाधुत्वमित्यभियोक्ताऽभिधत्ते । तत्र भाष्यकारः प्रत्यभिवदति "यदुच्यते सन्ति वै शब्दा अप्रयुक्ता इति ; यदि सन्ति, नाप्रयुक्ताः । अथाप्रयुक्ता न सन्ति, सन्ति चाप्रयुक्ताश्चेति विप्रतिषिद्धम् । प्रयुञ्जान एव खलु भवानाह सन्ति शब्दा अप्रयुक्ता इति ।" उपहसति च "कश्चेदानीमन्यो भवज्जातीयकः पुरुषः शब्दानां प्रयोगे साधुः स्यात् ।" तत्रोत्तरे— शास्त्रदृष्ट्या सन्ति, लोकेऽप्रयुक्तत्वादप्रयुक्ता इति न विप्रतिषिद्धम्, उपहासस्य च, नास्माभिरप्रयुक्ताः, किन्तर्हि, लोकेऽप्रयुक्ता इति । "ननु च भवानप्यभ्यन्तरो लोके ? अभ्यन्तरोऽहं लोके न त्वहं लोकः ।" लोको हि यथार्थावगमाय शब्दान् प्रयुङ्क्ते, न तथैव शब्दा मयाऽर्थे प्रयुक्ताः, किन्तर्हि शास्त्रेणानुविधीयमानास्तत्स्वरूपाः शब्दाः प्रयुक्ताः ।

## १२। अप्रयोगः प्रयोगान्यत्वात्।

एतेषां शब्दानामप्रयोगो नत्वाथो यत एषामर्थेऽन्यान् शब्दान् प्रयुञ्जते। तद्यथा ऊषेत्यस्यार्थे, क्व यूयमुषिताः, तेरेत्यस्यार्थे क्व यूयं तीर्णाः, पचेत्यस्यार्थे क्व यूयं पक्ववन्तः।

## १३। अप्रयुक्ते दीर्घसत्त्रवत्।

यद्यप्यधुनैतेषां नास्ति प्रयोगः, पूर्व्वं प्रयुक्तत्वात् दीर्घसत्त्रवदनुशासनं कर्त्तव्यम्। न चेदिदानीं दीर्घसत्त्राणि सन्ति तथापि ऋषिसम्प्रदायधर्म्मपरिज्ञानाय याज्ञिकाः शास्त्रेणानुविदधते।

## १४। सर्व्वे देशान्तरे।

येऽप्रयुक्तास्ते देशान्तरेषु प्रयुज्यन्ते। यदि नोपलभ्यन्ते, उपलब्धौ यत्नः कर्त्तव्यः। महान् हि शब्दस्य प्रयोगविषयः। तथा च भाष्यम् "सप्तद्वीपा वसुमती, त्रयो लोकाः, चत्वारो वेदाः साङ्गाः सरहस्याः बहुधा भिन्नाः, एकशतमध्वर्य्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाहृच्यं, नवधा आथर्व्वणो वेदः, वाकोवाक्यमितिहासः, पुराणं, वैद्यकमित्येतावान् शब्दस्य प्रयोगविषयः।" एतावति प्रयोगविषये सत्यप्रयुक्तवचनं साहसिकतैव। अपि च एकत्रानुपलभ्यमानानामन्यत्र प्रयोगो दृश्यते। तद्यथा शव गतावित्यस्य व्यवहारः काम्बोजे, आर्य्या विकार एनं भाषन्ते शव इति। हम्म गतावित्यस्य

---

महान् हि शब्दस्य प्रयोगविषय इति। न खलु निखिलशास्त्रज्ञानेन प्रयोगाप्रयोगनिर्णयः सम्भवति। अतएव लक्षणानुगतानां प्रयोगोऽस्तीति परिगणनाशक्तैरनुमेयम्। एवं वचन्त्यादीनामपि सिद्धिरिति चेन्न हि वचिरन्तिपरः प्रयुज्यत इति परिगीतव्यवहार एव तदसिद्धये भवेत्। वाकोवाक्यमिति। "वाकोवाक्यशब्देनोक्तिप्रत्युक्तिरूपोग्रन्थ उच्यते। यथा 'किं स्विदावपनं महत्? भूमिरावपनं महत्।' पूर्व्वचरितसंकीर्त्तनमितिहासः। वंशाद्यनुकीर्त्तनं पुराण"मिति कैयटः। उदाहृताप्रयुक्तेषु ऊष चक्र एतदुभयस्य प्रयोगो भाष्यकृता प्रदर्शितः न तु तेर पचेत्युभयस्य। पदद्वयमेतत् "महान् हि शब्दस्य प्रयोगविषयः। सप्तद्वीपा वसुमती"त्यादि भाष्यग्रन्थस्य विषयः।

सुराष्ट्रेषु, रंहि गतावित्यस्य प्राच्यमध्येषु, गम्लृ गतावित्यस्य त्वार्य्यावर्त्तेषु। ये त्वप्रयुक्त-त्वेन प्रदर्शितास्तेऽपि वेदे दृश्यन्ते, तद्यथा "सप्तास्मै रेवती रेवदूष" (४म. ५१सू. ४ऋक्) "यद्वो रेवती रेवत्यां तदूष" "यन्मे नरः श्रुत्यं ब्रह्म चक्र" "यत्रानश्चक्राजरसं तनूनाम्" "भूरि चक्र मरुतः पित्र्याण्युक्थानि" (७म. ५६सू. २३ऋक्)।

किं पुनः शब्दज्ञाने धर्म्मः, आहोस्वित् प्रयोगे ?

## १५। ज्ञाने धर्म्म इति चेत्तथाधर्म्मः।

यो हि शब्दान् जानाति, सोऽपशब्दानपि जानाति। अतो यथा तस्य शब्दज्ञाने धर्म्मः, तथापशब्दज्ञानेऽधर्म्मः। अथवा भूयानधर्म्मः, यत एकैकस्य शब्दस्य बहवोऽपभ्रंशाः।

## १६। आचारे नियमः।

प्रयोगेऽत्र वेदप्रवक्ता ऋषिर्नियमं वेदयते "तेऽसुरा हेऽलयो हेऽलय इति कुर्व्वन्तः पराबभूवु"रिति।

अस्तु तर्हि प्रयोगे।

## १७। प्रयोगे सर्व्वलोकस्य।

यदि प्रयोगे धर्म्मः सर्व्वेषां लोकानामभ्युदयो भवति, प्रयत्नवैयर्थ्यं स्यात्।

दृश्यते च लोके कृतप्रयत्नाश्चाप्रवीणा अकृतप्रयत्नाश्च प्रवीणाः। कुतस्ततो यत्नेनैव फलातिरेकः ? अतो नापि ज्ञाने, नापि प्रयोगे। किन्तर्हि,

## १८। शास्त्रपूर्व्वके प्रयोगेऽभ्युदयस्तत्तुल्यं वेदशब्देन।

यो हि शास्त्रपूर्व्वकं शब्दान् प्रयुङ्क्ते सोऽभ्युदयेन युज्यते। "योऽग्निष्टोमेन

---

किमिति। "एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गलोके कामधुग्भवती"ति श्रुतौ सम्यग्ज्ञानं सुप्रयोग इत्युभयं दृश्यते, तत् किं ज्ञानात् स्वर्गलोके कामधुग्भवत्यथवा प्रयोगादिति प्रश्नः ;—"किं पुनः शब्दज्ञाने धर्म्मः, आहोस्वित् प्रयोग" इति।

यजति । य उ चैनमेवं वेद ।" इत्यादिषु वेदशब्देषु यथा ज्ञानपूर्व्वकानुष्ठानस्याभ्युदयकारित्वमभिधीयते तथाचापि प्रकृत्यादिविभागपूर्व्वकप्रयोगस्य । अथवा वेदशब्दा यथा नियमपूर्व्वकमधीताः फलवन्तो भवन्ति तथा शास्त्रपूर्व्वके प्रयोगेऽभ्युदयः । तथा च वार्त्तिकम् ।

## १९ । तत्र ज्ञानपूर्व्वके प्रयोगे धर्म्मः ।*।

सिद्धान्तपक्षे ज्ञान एव धर्म्म इत्येव तथाधर्म्म इति दोषापत्तिः । तत्राह "शब्दप्रमाणका वयं, यच्छब्द आह तदस्माकं प्रमाणम् । शब्दश्च शब्दज्ञाने धर्म्ममाह नापशब्दज्ञाने अधर्म्ममाह ।" ये चाशिष्टाः शब्दा न प्रतिषिद्धाः, न तेषां प्रयोगे दोषो वाभ्युदयो वा । यथा हि किकतादीनि न दोषायाभ्युदयाय वा । उपायस्वरूपेणापशब्देन शब्दज्ञानञ्च भवति । अतः शब्दज्ञाने धर्म्म इत्यस्यार्थतोऽपशब्दज्ञानपूर्व्वकशब्दज्ञाने धर्म्म इत्यायाति । यदि वापशब्दज्ञानेऽधर्म्मसञ्चारस्तथापि शब्दज्ञाने यो धर्म्मो भवति तेन च तस्यापनयः, यथा कूपखानकस्य कर्द्दमलिप्तं शरीरं तथ्यवोत्थापितजलेन विगतमलं भवति। न केवलं तेन दोषापनयो भूयसा चाभ्युदयेन योगः । यदुक्तं "आचारे नियम" इति ; स तु नियमो यज्ञकर्म्मणि तदन्यत्रानियमः । यतो यर्व्वाणस्तर्व्वाणो नाम ऋषयो योगजनितप्रत्यक्षज्ञानसम्पन्ना अपि यद्वा नस्तद्वा न इति प्रयोक्तव्ये यर्व्वाणस्तर्व्वाण इति प्रायुञ्जत, यज्ञकर्म्मणि तु न पुनरपाभाषन्त ।

---

य उ चैनमिति । "य उ चैनमेवं वेद"इत्यत्र वेदशब्देन ज्ञानपूर्व्वकानुष्ठानं प्रदर्श्यते, समासस्तु वेदः शब्दो यस्यार्थस्य स वेदशब्दः । न तेषां प्रयोगे दोषो वाभ्युदयो वेत्यत्र टिघुभादयोव्याकरणोक्ता लाघवेनार्थबोधार्थं प्रयुक्ताः संज्ञा अपि ग्राह्याः । ते हि नापभ्रष्टाः शक्तिवैकल्य-प्रमादादिजन्यान्यथोच्चारणाभावात् ।

कूपखानकस्येति । कूपं खनतीति विग्रहे कर्म्मण्यण् प्राप्नोति । तत्र वाऽसरूप- (३।१।९४) इति न्यायेनासमानरूपो ण्वुल् कृतः । अतो नित्यसमासत्वाभावात् कूपस्य खानक इति स्वपदविग्रहः । "शिल्पिनि ष्वुन्" (३।१।१४५) इति समानरूपः प्रत्ययोऽत्र न ण्वुलोबाधकः खननकर्त्तृत्वव्यतिरिक्तशिल्पित्वस्याविवक्षितत्वात् ।

व्याकरणमित्यस्य शब्दस्य कः पदार्थः ? सूत्रम्।

## २०। सूत्रे व्याकरणे षष्ठ्यर्थोऽनुपपन्नः।

सूत्रे व्याकरणे व्याकरणस्य सूत्रमिति षष्ठ्यर्थो नोपपन्नो भवति। सूत्रादन्यद्व्याकरणमतो व्याकरणस्य सूत्रमिति प्रयोगः।

## २१। शब्दाप्रतिपत्तिः।

व्याकरणात् शब्दाः प्रतिपद्यन्ते। न हि व्याख्यानरहितात् सूत्रात् शब्दप्रतिपादनं सम्भवति। व्याख्यानन्तु न केवलं सूत्राणां पदविभागः, किन्तर्हि उदाहरण-प्रत्युदाहरण-वाक्याध्याहार-समवायः। एवं तर्हि, शब्दः।

## २२। शब्दे ल्युडर्थः।

शब्दे व्याकरणे ल्युडर्थो न प्रतिपन्नो भवति। व्याक्रियन्ते शब्दा अनेनेति व्याकरणम्। न हि शब्देन किञ्चिद्व्याक्रियते किन्तु सूत्रेण।

## २३। भवे।

भवार्थे च तद्धितप्रत्ययो न प्रतिपन्नो भवति। न हि शब्दे भवः, किन्तु व्याकरणे भवो योगो वैयाकरण इति। योगस्तु सूत्र एव दृश्यते।

## २४। प्रोक्तादयश्च तद्धिताः।

पाणिनिना प्रोक्तं पाणिनीयमित्यादिषु प्रोक्ताद्यर्थास्तद्धिताश्च नोपपन्ना भवन्ति। पाणिन्यादिभिराचार्य्यैर्न शब्दाः प्रोक्ताः, किन्तर्हि, सूत्रम्।

---

सूत्र इति। सूत्रं व्याकरणमित्युभयं यद्यष्टाध्याय्याः प्रतिपादकं भवति तदाप्रतिपत्तिः। व्याकरणसूत्रमित्यनेन यदि सामान्यविशेषप्रदर्शनविवक्षा तदा भवत्येव। व्याकरणशब्देन तदाष्टाध्यायी, सूत्रशब्देन तदेकदेशः।

ल्युडर्थ इति। करणे ल्युट्। व्याक्रियन्ते शब्दा अनेनेत्यत्र शब्दस्य व्याक्रियमाणत्वात् कर्म्मत्वं न तु करणत्वम्।

प्रोक्तादय इत्युक्तं भवेऽपि स्यात् । कथं भवे प्रोक्तादयश्चेत्युभयमुक्तम् । पुरस्तादाचार्येण दृष्टं भवे च तद्धित इति तत्पठितम् । तत उत्तरकालं दृष्टं प्रोक्तादयश्च तद्धिता इति तदपि पठितम् ।

## २५ । न चेदानीमाचार्य्याः सूत्राणि कृत्वा निवर्त्तयन्ति ।*।

अथ दोषपरिहारः । यदुक्तं "शब्दे ल्युडर्थे" इति न हि केवलं करणाधिकरणयोर्ल्युड् भवति, "कृत्यल्युटो बहुलं"(३।३।११३) मित्यनेन अन्येष्वपि कारकेषु, तद्यथा प्रपतनं, प्रस्कन्दनम् । अथवा शब्दैरपि शब्दाः व्याक्रियन्ते, तद्यथा गौरित्युक्ते सर्व्वे सन्देहा निवर्त्तन्ते नाश्वो न गर्द्दभ इति । भवे प्रोक्तादयश्च तद्धिता इति तावद्दोषः । एवं तर्हि,

---

प्रोक्तादय इति । आदिपदेन भवग्रहणसम्भावनामुत्पश्यन्नाह कथमुभयं विन्यस्तम् ।

न चेदानीमिति । सूत्रकृता "तत्र भव" (४।३।५३) इति प्रथमं "तेन प्रोक्तम्" (४।३।१०१) इत्यादयस्तत्पश्चादुपन्यस्ताः । तदेवोपलक्ष्य भवे प्रोक्तादयश्चेत्युक्तम्, न तु नूतनं सूत्रं विरच्य तानि सूत्राणि निवर्त्तितानि । 'न चेदानीमाचार्य्या' इत्यादि वार्त्तिककृता श्रीमता कात्यायनेनोक्तम् । तत्रेदमभिप्रेतम्, यद्यप्यत्र बहुलानि वार्त्तिकानि निबद्धानि, तथापि न तैः सूत्राणि निवर्त्त्य लक्षणान्तरविधानम्, सूत्रतात्पर्य्यग्रहणेनैव लक्षणप्रपञ्चनम् । सूत्रे बहुलग्रहणादिभिस्तदनुमोदितञ्च । अतएवोक्तम् "सूत्रेष्वपि हि तत्सर्व्वं यद्वृत्तौ यच्च वार्त्तिके ।"

प्रपतनमिति । प्रपतत्यस्मादिति प्रपतनं प्रस्कन्दत्यस्मादिति प्रस्कन्दनम् । "भीमादयोऽपादाने" (३।४।७४) इत्ययं "कृत्यल्युटो बहुल"(३।३।११३)मित्यस्य प्रपञ्चः ।

शब्दैरपीति । सास्नालाङ्गूलादिमन्तं कञ्चिदभिलक्ष्य अयं गौरित्युक्ते तच्छब्दस्यान्यत्र वाचकता निवर्त्तते, तेनैव च शब्दान्तराणां प्रतीतिः संजायते यथा गोरन्योऽश्वो गर्द्दभ इति ।

## २६। लक्ष्यलक्षणे व्याकरणम्।

लक्ष्यः शब्दः, लक्षणं सूत्रं, लक्ष्यलक्षणसमुदितं व्याकरणम्।

एवं सति, समुदाये व्याकरणशब्दः प्रवृत्तोऽवयवे नोपपन्नो भवति। दृश्यते चाव-यवभूतानि सूत्राण्यधीत्य वैयाकरणो भवति। नैष दोषः, समुदायेषु हि शब्दाः प्रवृत्ता अवयवेष्वपि वर्त्तन्ते, तद्यथा पूर्व्वे पाञ्चालाः, घृतं भुक्तम्, शुक्लः। एवं समुदाये व्याक-रणशब्दः प्रवृत्तोऽवयवभूते सूत्रेऽपि वर्त्तते।

अथवा पुनः पक्षान्तरेऽस्तु सूत्रम्। अत्र षष्ठ्यर्थानुपपत्तिपरिहारस्तु व्यपदेशिवद्भावेन भवति। शब्दाप्रतिपत्तिपरिहारस्तु व्याख्यानार्थमुदाहरणादिसमवायोऽज्ञानां बोधनाय न तु ज्ञानवताम्, एषान्तु सूत्रपदच्छेदमात्रेणैव। न हि कदाचिदुत्सूत्रेण तत्परिग्रहो भवति।

---

पूर्व्वे पाञ्चाला इति। जनपदान्तरनिवृत्तिविवक्षायां पूर्व्वे पाञ्चाला इति न तु समु-दायपूर्व्वपाञ्चालविवक्षायाम्। अत एकदेशस्यात्र समुदायरूपेण प्रयोगः। घृतमिति। न हि कृत्स्नमौषधसंस्कृतं घृतमुपयुक्तं किन्तु कियत्परिमाणमिति। शुक्ल इति। न हि शुक्ल इत्युक्ते नयनतारकादिसर्व्वावयवस्य शुक्लत्वं गम्यते।

व्यपदेशिवदिति। एकस्मिन्नपि वस्तुनि शब्दार्थभेदाद्भेदव्यवहारो व्यपदेशिवद्भावः। तद्यथा राहोः शिरः। राहौ शिरसाऽभिन्नेऽपि राहुः शिर इति शब्दार्थभेदाद्‌ भेद-ग्रहणेनोक्तं राहोः शिर इति।

न हि कदाचिदिति। अत्र भाष्ये "आतश्च सूत्रत एव। यो ह्युत्सूत्रं कथ-येन्नादो गृह्येत।" आत इति निपातः, अतश्च हेतोः। सूत्रत एव शब्दप्रतिपत्तिः सूत्र-मुल्लङ्घ्य किञ्चित् कथनं न तत्प्रतिपत्तये भवति। न अदः नादः नैतत्, अथवा नादः अर्थविरहितत्वात् घोषमात्रमित्यर्थः। इममेवाश्रित्य दीक्षित आह "अतएव ह्युत्सूत्र-मुच्यमानमप्युपेक्षते। यत्रैव सूत्रस्य तात्पर्य्यलेशोऽप्यस्ति तदेव गृह्यते।"

अथ किमर्थो वर्णानामुपदेशः ?

## २७ । वृत्तिसमवायार्थ [ उपदेशः ] ।*।

वृत्तिः शास्त्रप्रवृत्तिः । समवायः वर्णानामानुपूर्व्येण सन्निवेशः । उपदेश उच्चारणम् । शास्त्रप्रवृत्त्यर्थो वर्णानां क्रमेण निवेशः । तादृशनिवेशार्थं पुनस्तेषामुच्चारणम् । न विनोच्चारणमुपदेशः सम्भवति ।

## २८ । अनुबन्धकरणार्थश्च ।*।

अनुबन्धानासङ्क्तुं वर्णानामुपदेशः कर्त्तव्यः । वर्णानामानुपूर्व्यसन्निवेशोऽनुबन्धकरणञ्च प्रत्याहारार्थम् । प्रत्याहारः शास्त्रप्रवृत्त्यर्थः । अतएव,

## २९ । वर्णानामुपदेशः शास्त्रप्रवृत्तिफलको वर्णानां क्रमेण निवेशो वृत्तिसमवायः ।*।

इममेवार्थं वृत्तिकारः संक्षेपेणाह 'अथ किमर्थो वर्णानामुपदेशः ? प्रत्याहारार्थः । प्रत्याहारो लाघवेन शास्त्रप्रवृत्त्यर्थः ।"

---

वृत्तिसमवायार्थ इति । लाघवेन शास्त्रप्रवृत्त्यर्थः । धर्मनियमवत्समासः । तद्यथा वृत्तये समवायो वृत्तिसमवायः, वृत्त्यर्थो वा समवायः वृत्तिसमवायः, वृत्तिप्रयोजनो वा समवायः वृत्तिसमवायः । अत्र समासे वृत्त्यर्थ इति समवायस्य शास्त्रप्रवृत्तेः प्रत्यासन्नत्वं ; वृत्तिप्रयोजन इति पारम्पर्य्येणास्य शास्त्रप्रवृत्तावङ्गत्वं दर्शयति । तद्यथा वर्णानां सन्निवेशवशात् "इग्यणः सम्प्रसारणम्"(१।१।४५)मित्यादौ "यथासंख्यमनुदेशः समाना"-(१।३।१०)मिति यथासंख्यशास्त्रस्य साक्षात्प्रवृत्तिर्भवति । तथाच पारम्पर्य्येण "हलन्त्य"-(१।३।३)मिति इत्संज्ञा, ततः 'आदिरन्त्येन सहेता" (१।१।७१) इति, ततः "ढ्रलोपे पूर्व्वस्य दीर्घोऽणः" (६।३।१११) इत्यादि शास्त्रप्रवृत्तिः ।

प्रत्याहार इति । अणादिसंज्ञाः प्रत्याहारशब्देनोच्यन्ते । प्रत्याह्रियन्ते वर्णा एभिरिति प्रत्याहारः ।

३०। इष्टबुद्ध्यर्थश्च।

इष्टान् वर्णान् बोद्धुं तेषामुपदेशः।

३१। इष्टबुद्ध्यर्थश्चेति चेदुदात्तानुदात्तस्वरितानुनासिकदीर्घप्लुतानामप्युपदेशः।

इष्टान् वर्णान् बोद्धुं चेदुपदेश उदात्तादीनामप्युपदेशः कर्त्तव्यः। यत एवंगुणा अपि वर्णा इष्टाः।

३२। आकृत्युपदेशात् सिद्धम्।

अवर्णाद्याकृत्युपदेशेन तत्तद्गुणयुक्तानां निखिलानां ग्रहणं भविष्यतीति सिद्धत्वात्तेषां न स्वतन्त्रोपदेशः।

३३। आकृत्युपदेशात् सिद्धमिति चेत् संवृतादीनां प्रतिषेधः।

अवर्णाद्याकृत्युपदेशेन यदि सिद्धं भवति तदा तेनोपस्थितानां संवृतादीनां दोषाणां प्रतिषेधः कर्त्तव्यः। संवृतादयो यथा—संवृतः, कलः, ध्मातः, एणीकृतः, अम्बूकृतः,

---

इष्टानिति। इष्टान् कलादिदोषविरहितान्। दोषा वक्ष्यन्ते।

उदात्तादिस्वराणामभेदोच्चारणरूपयैकश्रुत्या सूत्राणां पाठात् तेषामुपदेशः कर्त्तव्य इत्याह "इष्टबुद्ध्यर्थश्चेति चे"दित्यादि।

अवर्णादीति। उपदिष्टा अकारादिवर्णविशेषा अपि न तन्निष्ठानां गुणानां तिरोधायकाः, अतो जातिप्राधान्येन विवक्षा न प्रतिहता। तेन जातित्वेन ग्रहणात् अवर्णाकृतिः सर्व्वमवर्णकुलम्, इवर्णाकृतिः सर्व्वमिवर्णकुलम्, उवर्णाकृतिः सर्व्वमुवर्णकुलं ग्रहीष्यतीति न पृथगुपदेशः।

संवृत इति। अकारस्य संवृतत्वान्न तदुच्चारणे संवृतत्वं दोषाय। एकारादिषु सन्ध्यक्षरेषु संवृतोच्चारणं दोषाय तेषां विवृततमत्वात्। कलः स्थानभ्रष्टत्वेनोच्चारणम्, अयं

अर्द्धकः, ग्रस्तः, निरस्तः, प्रगीतः, उपगीतः, क्ष्विण्णः, रोमश इति । अपर आह

ग्रस्तं निरस्तमविलम्बितं निर्हत-
मम्बूकृतं ध्मातमथो विकम्पितम् ।
सन्दष्टमेणीकृतमर्द्धकं द्रुतं
विकीर्णमेताः स्वरदोषभावनाः ॥

अतोऽन्ये व्यञ्जनदोषाः ।

नैष दोषः । गर्गादि-विदादिपाठात् संवृतादीनां निवृत्तिर्भविष्यति । तेषां पाठेऽन्यत् प्रयोजनमस्ति । किम् ? गर्गादीनां गार्ग्यादीनाञ्च समुदायानां साधुत्वं यथा स्यात् ।

एवं तर्हि शास्त्रान्ते कलादिदोषशून्यामष्टादशधा भिन्नामकारस्य प्रत्यापत्तिं वक्ष्यामि । सा तर्हि वक्तव्या ।

---

काकलीत्वेन प्रसिद्धः । ध्मातः श्वासभूयिष्ठतया ह्रस्वानामपि दीर्घत्वेन प्रतीतिः । एणीकृतः अविशिष्टत्वेनोच्चारणं यथोच्चारितवर्णोऽवर्ण ओवर्णो वेति सन्देहः । अम्बूकृतः व्यक्तोच्चारितोऽपि मुखाभ्यन्तरावस्थित इव श्रूयमाणः । अर्द्धकः दीर्घोऽपि ह्रस्ववत् कालसङ्कोचेनोच्चार्य्यमाणः । ग्रस्तः जिह्वामूले निगृहीतः, अतोऽस्याव्यक्त इत्यपरा संज्ञा । प्रगीतः सामवदुच्चारितः । उपगीतः समीपवर्त्तिवर्णान्तरगीत्यानुसक्तः । क्ष्विण्णः कम्पमान इव । रोमशः गम्भीरः । अविलम्बितः वर्णान्तरैरसंभिन्नः । निर्हतो रूक्षः । सन्दष्टः वर्द्धित इव । विकीर्णः वर्णान्तरे प्रसृतः, एकोऽप्यनेकनिर्भासी वा । स्वरदोषभावनाः स्वरदोषाणां गोचोल्लेखः, अशक्तिप्रमादकृता बहवोऽन्ये सन्तीति भावः ।

गर्गादीति । शास्त्रे यद्यपि गर्गादि-विदादिपाठः प्रत्ययविध्यर्थस्तथापि प्रसङ्गतः समुदायानां साधुत्वमपि भवति ।

शास्त्रान्त इति । शास्त्रान्ते "अ अ" (८।४।६८) इति सूत्रेण कार्य्यार्थं विवृतत्वेन गृहीतस्याकारस्य संवृतत्वं प्रत्यापत्तिः । तत्र कलादिकानामपि भविष्यति ।

सा तर्हि वक्तव्येति । शास्त्रान्ते "अ अ" इत्यनेनाकारस्यैव प्रत्यापत्तिर्भविष्यति नान्येषाम्, अतोऽन्येषामपि प्रत्यापत्तिर्वक्तव्येत्यर्थः ।

## ३४ । लिङ्गार्था तु प्रत्यापत्तिः ।

सा प्रत्यापत्तिर्लिङ्गार्था भविष्यति ।

तत्तर्हि वक्तव्यं, यद्यप्येतदुच्यते ।

अथवा कलादिका अनुबन्धलेन ग्राह्याः । तेनानुबन्धशतानामुच्चारणगौरवं न भवति, इत्संज्ञा च न वक्तव्या, लोपश्च न वक्तव्यः । सिद्धात्येवम्, अपाणिनीयन्तु भवति ।

भवतु तावत् "आकृत्युपदेशात् सिद्ध"मिति । कथं दोषपरिहारः ? संवृतादीनां निवृत्तिस्तु गर्गादिपाठादेव भविष्यति । तत्र समुदायानां साधुत्वमिति प्रयोजनेऽपि कलादिनिवृत्तिरपि भविष्यति । कथं पुनरुभयमेकेन यत्नेन सेत्स्यति? एकोऽपि हेतुः प्रयोजनद्वयं साधयति, एकमपि वाक्यं वाक्यद्वयनिष्ठं भवति । यथाहि "आम्राश्च

---

लिङ्गार्थेति । अकारस्य प्रत्यापत्तिनिंदर्शनार्थम् । अतोऽन्येषामपि तन्निदर्शनेनैव सा सिद्ध्यति ।

तत्तर्हीति । अवर्णस्य प्रत्यापत्तिर्लिङ्गार्थेत्युक्तेऽपि तत् सुस्पष्टं तत्र वक्तव्यमन्यथा विवृतग्रहणस्यैव प्रयोजनं दृष्ट्वा तस्यैव निवृत्त्यर्थमियं प्रत्यापत्तिरिति परिग्रहो भविष्यति, न पुनः कलादीनाम् ।

अथवेति । आकृत्युपदेशे निखिलकलादिग्रहणं भवति सत्यम्, किन्तु न तद्दोषाय, प्रत्युत लाघवाय । धात्वादिषु सर्वत्र कलादिग्रहणमेव भविष्यति । शीङ्धातो-र्ङकारं परिहाय इकारं कलं पठिष्यति । "ङित आत्मनेपद"मित्यस्य स्थाने कला-दात्मनेपदमिति करिष्यते । एवं सर्वत्र । कलादयस्तु प्रक्रियादशायां स्युर्न तु प्रयोगे । शास्त्रान्ते प्रत्यापत्तिर्निखिलशास्त्रीयकार्यं प्रति तेषामसिद्धत्वप्रदर्शनाय, सुतरां परि-निष्ठितेषु न तेषां स्थितिः ।

सिद्धात्येवमिति । अनुबन्धशतकरणादिगौरवपरिहारफलत्वेऽपि पाणिनिना न तत् कृतमिति न तदत्र ग्राह्यम् ।

सिक्ता:, पितरश्च प्रीणिता: ।" द्वितीये "श्वेतो धावति" "अलम्बुसानां याता ।"

अथवा आगमादय: सर्व्वे शुद्धा: पठ्यन्ते । ये च प्रातिपदिका न पठितास्तेऽपि –शश: षष:, पलाश: पलाशी मा भूदिति स्वरवर्णानुपूर्व्वीज्ञानार्थमुपदेष्टव्या: । सुतरां न कुत्रचित् कलादीनामनवकाश इत्यदोष: ।

आगमाश्च विकाराश्च प्रत्यया: सह धातुभि: ।
उच्चार्य्यन्ते ततस्तेषु नेमे प्राप्ता: कलादय: ॥

इति श्रीभाष्यसङ्क्रमन्यां प्रथमस्याध्यायस्य
प्रथमे पादे प्रथमाह्निकम् ।

---

श्वेत इति । श्वेतो धावति । को धावति ? श्वा इतो धावति । अलम्बुसानां याता । क: समर्थ: । वुस: पलालवर्णो जन: * ।

ये चेति । अपठितानामुणादिसूत्रात् पृषोदरादिसूत्राद्वा साधुत्वमतोऽत्र सर्व्वेषां संग्रह:, विशेषावधारणन्तु निघण्ट्वादिना भवति । एवं कलादिनिवृत्ति: प्रतिपदपाठेन सम्भवति, विशेषज्ञानन्तु शिक्षादिग्रन्थाल्लभ्यम् । इह कलादिनिवृत्तिविषयको विचार-स्त्वानुषङ्गिक:, वर्णोपदेश: पुनर्मुख्यत्वेन प्रत्याहारनिष्पत्त्यर्थ: । "आदिरन्त्येन सहेते"ति ग्रहणकशास्त्रेण सिद्धा: संज्ञा: प्रत्याहारवाच्या: । न च तत्रस्थानामेकैकवर्णानां तत्तत्-संज्ञा: प्रत्येतव्या:, तासां संज्ञानां प्रत्याहृतवर्णसमष्टिबोधनाय-योगरूढ़ित्वात् ।

वाणीं परेशस्य हृदा बिभर्त्तुं
भ्रान्तिस्तु यासीन्न ममेति सन्त: ।
अर्हन्ति तां चन्तुमहो कृती वा
तस्या: प्रकाशोऽपगतापनिद्र: ॥

इति श्रीभाष्यसङ्क्रमन्यनुव्याख्यायां तत्त्वसङ्कलन्यां प्रथमाध्यायस्य
प्रथमे पादे प्रथमाह्निकम् ।

---

* कोऽलं गन्तुम् ? वुसानां पलालवर्णानामेक इति ।

## द्वितीयोऽध्यायः ।

—:—

### अ इ उ ण् । १ ।

म. वृ. । अ इ उ इत्यनेन क्रमेण वर्णानुपदिश्यान्ते णकारमितं करोति प्रत्याहारार्थम् । तस्य ग्रहणं भवत्येकेन "उरण्

---

अ इ उ ण इति । स्वरूपाणामनुकार्य्याणां वाकारादीनामर्थवत्त्वेऽपि तदविवक्षितत्वान्नेह विभक्त्युत्पत्तिः । "छन्दोवत्सूत्राणी"ति भाष्योक्त्या "सुपां सुलुग्" (७।१।३९) इति विभक्तिर्लुप्ता । अः इ इत्यत्र रुत्व-यत्व-यलोप-सन्ध्यभावेन इ उ ऋ इत्यत्र प्रकृतिभावेन स्वरूपावस्थितिसम्भवेऽपि एदैतोरयायौ दुर्निवारौ । "सन्धिस्तु न प्रवर्त्तते वर्णोपदेशकालेऽजादिसंज्ञानामनिष्पादादि"ति कैयटोक्तिर्दीक्षितेन नातिमन्यते । तथा सति यत्र यत्र सूत्रे यद् यद् विधीयमानं तत्तत् तत्र तत्र सूत्रे न प्राप्नोति । यथा "तुल्यास्यप्रयत्नं सवर्णं"(१।१।९)मित्यत्र 'तुल्यास्ये'ति सवर्णदीर्घो न भवति सवर्णत्वमनेनैव विधानात् । एवमन्यत्र । सूत्रान्तरैरणादिसंज्ञानां प्रकारान्तरताप्राप्तौ तदपि ग्रहणकशास्त्रे (१।१।६९) प्रवर्त्तेतेति चेत्, न, अणादिसंज्ञया बोध्यमानानां प्रकारान्तरता तत्रत्या, न त्वणादिसंज्ञायाः । तद्यथा "अणोऽप्रगृह्यस्य"(८।४।५७)त्यादौ अण्संज्ञयोपस्थितेषु वर्णेषु प्रगृह्यसंज्ञकावीदूता(१।१।११)वेव वर्ज्जनीयौ भवतः, न तु दीर्घाणामनण्त्वम् । अण्शब्दो हि "आदिरन्त्येने"(१।१।७१)त्यनेनाचरसमाम्नायपठितेषु सङ्केतितः । सङ्केतितानां बोधानन्तरमेव तेषामन्यत्र प्रतिपत्तिः प्रकारान्तरता वा । न हि पदबोधं विना वाक्यबोधः सम्भवति । अणेति पदबोधं विना "अणोऽप्रगृह्यस्ये"त्यादेर्वाक्यस्य बोधो दुर्लभ एव । इह सूत्रे स्वरसन्धेरप्रवर्त्तनं "संहितैकपदे नित्या नित्या धातूपसर्गयोः । नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥" इति प्राचीनपरिभाषया । एकपद इत्यनेन समासग्रहणे सिद्धे पुनस्तत्कथनं गोबलीवर्दन्यायेन । काव्ये विसन्धिर्दोषायापि न च्युतसंस्कृतिः । चादिषु निपातेष्वकारादीनां पाठात् "निपात एकाजि"(१।१।१४)त्यनेन प्रगृह्यत्वम्, ततः प्रकृतिभाव इति केषाञ्चिन्मतम् । एत-

रपर" (१।१।५१) इत्यकारेण। ह्रस्वमवर्णं प्रयोगे संवृतं, दीर्घप्लुतयोस्तु विवृतत्वम्। तेषां सावर्ण्यप्रसिद्ध्यर्थमकार इह शास्त्रे विवृतः प्रतिज्ञायते। तस्य प्रयोगार्थं "अ अ" (८।४।६८) इति शास्त्रान्ते प्रत्यापत्तिः करिष्यते।

## १। अकारस्य विवृतोपदेश आकारग्रहणार्थः।

भा. स. सवर्णग्रहणेऽकारेणाऽऽकारग्रहणार्थमकारस्य संवृतस्य विवृतोपदेशः

---

न्यते निपातानिपाताकारादिषु निपातग्रहणं सम्भवाभावेन स्वरूपावस्थानसिद्धये, व्यक्तिसामान्यान्निपातैरनिपातानान्तु ग्रहणम्। अकारादिषु न कारप्रत्ययः, "वर्णात् कारः। *।" इत्यत्र "रोगाख्यायां ण्वुल् बहुलम्" (३।३।१०८) इत्यतो बहुलग्रहणादथवा "इक् श्तिपौ धातुनिर्देशे इति वक्तव्यम्। *।" इत्यतो निर्देशशब्दानुवर्त्तनेन। निर्देशो हि क्वचिदवस्थितानां भवति। इह त्वकारादीनामानुपूर्व्वीनिवेशमात्रम्। अथवाऽर्थवत्त्वाविवक्षया वर्णवाचकत्वाभावान्न कारप्रत्ययः।

विवृतोपदेश इति। "स्वराणामूष्मणाञ्चैव विवृतं करणं स्मृतम्। तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च॥" इति पाणिनीयशिक्षामतेन स्वराणां विवृतत्वम्; मतान्तरे तु, अकारः संवृतः, विवृतकरणाः स्वराः, तेभ्य ए ओ विवृततरौ, ताभ्यामै औ, ताभ्यामप्याकार इति। इदं मतान्तरमाश्रित्य कैश्चिद्विवृतोपदेश इत्यत्र शुक्लतरोऽपि शुक्ल इति युक्त्या विवृतशब्दस्य विवृततरत्वं साधितम्। न खलु वक्तव्यम् विवृतसामान्यात् विवृतविवृततरयोः साम्यम्। तथा सति "विवृतमूष्मणा"मित्यत्रेषत्स्पृष्टमन्तःस्थाना"मित्यत ईषदनुवर्त्त्योष्मणामीषद्विवृतत्वेन विवृतेभ्योऽजभ्यस्तेषामसावर्ण्यं सिद्धमिति भाष्यसिद्धान्तो व्याकुप्येत। अनेन नयेन भाष्यकृता नाज्झलौ(१।१।१०) विति सूत्रं प्रतिषिद्धम्। वस्तुतस्तु ईषद्विवृत-विवृत-विवृततराणां सामान्येन ग्रहणं कृत्वा सूत्रकृता नाज्झलाविति सूत्रं प्रवर्त्तितम्। अस्मिन् पक्षे एङैचोस्तु वर्णसमाम्नाये पृथङ्निर्देशसामर्थ्यान्न सावर्ण्यम्।

कर्त्तव्यः। "तुल्यास्यप्रयत्नं सवर्णं"(१।१।९)मित्यत्रास्यग्रहणेन विवारभेदस्य ग्रहणं न त्वास्याद्बाह्यस्य कालभेदस्य। सूत्रकृतोपदिश्यमानस्य विवृतस्यानेन वार्त्तिकेन प्रयोजनं प्रदर्श्यते।

"अ अ" (८।४।६८) इत्यनेन विवृतस्य या संवृततापत्त्यापत्तिस्तस्याः प्रयोजनान्तरमस्ति। किम्? 'अतिखट्वः', 'अतिमालः' इत्यत्रान्तर्यतो विवृतस्याऽऽकारस्य स्थाने जायमानस्याऽकारस्य विवृतत्वं प्राप्नोति तदनया प्रत्यापत्त्यायं संवृतः स्यादिति प्रतिपादयति। न लोके न वा वेदेऽकारो विवृतोऽस्तीत्यतः प्रत्यापत्तिवचनं ज्ञापकमेव विवृतस्योपदिश्यमानस्य।

## २। तस्य विवृतोपदेशादन्यत्रापि विवृतोपदेशः सवर्णग्रहणार्थः।

तस्यैतस्याक्षरसमाम्नायिकस्य विवृतोपदेशादन्यत्र धातुप्रातिपदिकप्रत्ययनिपातस्थस्यापि विवृतोपदेशः कर्त्तव्यः। किं प्रयोजनं? सवर्णग्रहणार्थः।

"अकः सवर्णे दीर्घः" (६।१।१००) इति सूत्रकरणेन आचार्यप्रवृत्त्या भवति हि आद्य-

---

विवारेति। विवारयति विकासयति आस्यमिति विवारः प्रयत्नः।

आस्याद्बाह्यस्येति। वर्णानां प्रयत्ननिष्पन्नमात्रादिकृतो भेदो निमेषादिक्रियाभेदजनितः, सोऽपि वक्तुरुच्चारणवैचित्र्यादिचित्र इति प्रयत्नबाह्यम्।

अतिखट्व इति। विवृतोपदेशं विनाऽकाराकारयोः सावर्ण्याभावाद्ध्रस्वत्वासिद्धौ न स्यादकार इति चेत्, न, "उदीचामातः स्थाने" (७।३।४६) इति ज्ञापकेन स्यादेवाकारस्य ह्रस्वत्वम्।

यदि केवलमक्षरसमाम्नायस्थ एवाऽकारो विवृत उपदिश्यते तदा धात्वादिस्थस्याकारस्याविवृतत्वान्न प्रक्रिया सिद्ध्येदत आह तस्य संवृतोपदेशस्यान्यत्रापीति।

अक इति। अक इति कथनेनात्र ककारेण चिह्नेन प्रत्याहारस्थो विवृतो निर्दिष्टः। यदि धात्वादिस्थस्याकारस्य संवृतस्य विवृतत्वेन ग्रहणं न स्यात्तदा "अकः सवर्णे दीर्घः"

रसमाम्नायिकेन धात्वादिस्थस्य ग्रहणम्, अन्यथा 'दण्डाग्रम्' 'चमाव'ित्यत्र सवर्णदीर्घो न स्यात्। न ह्यत्र द्वयोराचरसमाम्नायिकयोर्युगपद्ग्रहणमस्ति। नैतज्ज्ञापकम्। आचरसमाम्नायिकेन यस्य ग्रहणमस्ति तदर्थमेतत्सूत्रकरणम्। यथा 'खट्वाढकम्,' 'मालाढकम्'। अत एतेनाभ्युपायेन यथा सर्व्वेषामुपदेशः स्यात् तत् कर्त्तव्यम्। तस्मा-द्वक्तव्यं धात्वादिस्थस्य विवृत इति।

## ३। दीर्घप्लुतवचने च संवृतनिवृत्त्यर्थः।

दीर्घप्लुतौ संवृतौ मा भूतामिति तन्निवृत्तये विवृतोपदेशः कर्त्तव्यः। नैव लोके न च वेदे दीर्घप्लुतौ संवृतौ स्तः। किन्तर्हि, विवृतौ। अतो विवृतावेव तौ भविष्यतः।

स्थानी प्रकल्पयेदेतावनुस्वारो यथा यणम्।
संवृतः स्थानी संवृतौ दीर्घप्लुतौ प्रकल्पयेत्॥

स्थान्यनुस्वारो यथा यणमनुनासिकं कल्पयेत् तथा स्थानी संवृतः दीर्घप्लुतौ संवृतौ प्रकल्पयेत्। न स्यात्। कथम्? यणोऽनुनासिका निरनुनासिकाः सन्ति, ततोऽनु-नासिका भवन्ति। न पुनर्दीर्घप्लुतौ संवृतौ स्तः, अतो न तौ संवृतौ भवेताम्। एव-

---

इति नोक्त्वा "इकः सवर्णे दीर्घ" इत्येव ब्रूयात्। दण्डाग्रमित्यत्र यद्यप्येकोऽप्याचरसमा-म्नायिको विवृतो न विद्यते, तथापि द्वयोरिति कथनमेकादेशस्य द्व्यधिष्ठानत्वात्।

नैतदिति। अक इत्यकारेण विवृतेन दीर्घस्य विवृतस्य ग्रहणं भवति, अतो नैतज्-ज्ञापकमित्यर्थः।

अत एतेनेति। प्रतिपदपाठस्याशक्यत्वाद्यथा ह्रस्वग्रहणप्रातिपदिकार्थं विवृतोप-देशे यत्नः कर्त्तव्यः, तथा धात्वादिस्थस्यापि। अन्यथा धात्वादिस्थस्याकारस्य दीर्घरूप-विवृतोच्चारणेन प्रयत्नसाध्यकरणं गौरवं स्यात्।

नैव लोक इति। असति दीर्घप्लुतयोः संवृतत्वे सावर्ण्याभावात् संवृतस्याकारस्य

मपि ईकार ऊकारश्च क्वचित् संवृतत्वेन परिगृहीतः । अकारस्य विवृतत्वाप्रतिज्ञाने तस्यैकारौकारौ संवृतौ भवतः । न भवति, तुल्यप्रयत्नत्वेऽपि स्थानभिन्नत्वात् । "स्थाने-ऽन्तरतम" (१।१।५०) इत्यत्र स्थान इत्यनुवर्त्तमानेऽपि पुनः स्थानग्रहणस्य प्रयोजनं "यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयो भवतीति" । अतएव हि "तुल्य-स्थानौ प्रयत्नभिन्नौ भविष्यतः, न पुनस्तुल्यप्रयत्नौ स्थानभिन्नौ स्याताम् ।"

## ४ । तत्रानुवृत्तिनिर्देशे सवर्णाग्रहणमनण्-त्वात् ।

प्रत्याहारशास्त्रस्य लक्ष्ये प्रवृत्त्यर्थं तदनुगतनिर्देशे "अस्य च्वौ" (७।४।३२), "यस्ये-ति च"(६।४।१४८)त्यादौ न सवर्णानां ग्रहणं स्यात्, अनण्त्वात् ।

## ५ । एकत्वादकारस्य सिद्धम् ।

एकोऽकारो यथाक्षरसमाम्नाये यथानुवृत्तौ यथ धात्वादिस्थः ।

---

दीर्घप्लुतौ न स्तः । "अतो दीर्घो यञि" (७।३।१०१) "अतो रोरप्लुतादप्लुते" (६।१।११३) इति सूत्रलिङ्गात् भविष्यतः ।

प्रत्याहारशास्त्रस्येति । "वृत्तिः शास्त्रस्य लक्ष्ये प्रवृत्तिः, तदनुगतौ निर्देशोऽनुवृत्ति-निर्देशः ।"

अनण्त्वादिति । "अकः सवर्णे दीर्घ" इत्यत्र ककारेण चिह्नेनायमकारः प्रत्या-हारस्थस्याकारस्यानुकृतिरिति विज्ञायते । "अस्य च्वा"वित्यत्रस्थेऽकारे न तादृशं चिह्नं दृश्यते, नापि "यस्येति च"त्यत्रेकाराकारयोरकारस्तादृक्चिह्नेन चिह्नितः । ततः प्रत्याहारगताकारानुकृतिरियमिति विज्ञातुमशक्यत्वादकारस्यानण्त्वम्, अनण्त्वाच्च न सवर्णग्रहणं भवति ।

एक इति । एकैवाकारव्यक्तिः । व्यञ्जकध्वनिकृता उदात्तादयो गुणास्तस्या अ-भेदकाः । अकारोऽयं निदर्शनार्थः, तत इकारादीनामपि एवं बोध्यम् ।

## ६। अनुबन्धसङ्करस्तु।

अकारस्यैकत्वे 'कर्म्मण्यण्" (३।२।१) "आतोऽनुपसर्गे कः" (३।२।३) इत्यादौ केऽपि णित्कार्य्यं प्राप्नोति ।

## ७। एकाजनेकाज्ग्रहणेषु चानुपपत्तिः।

यत्र एकाज्ग्रहणमनेकाज्ग्रहणं वा कर्त्तव्यं भवति, तत्र तदुपपत्तिर्न स्यात् । तद्यथा 'किरिणा' 'गिरिणे'त्यत्रैकाज्लक्षणमन्तोदात्तत्वं प्राप्नोति, घटेन तरति "घटिक" इति द्व्यज्लक्षणष्ठन्न प्राप्नोति ।

## ८। द्रव्यवच्चोपचाराः।

द्रव्यवदकारस्य व्यवहाराः प्राप्नुवन्ति । यथानेको नैकेन घटेन युगपत् कार्य्यं करोति तथैनमकारं नानेको युगपदुच्चारयेत् ।

---

अनुबन्धसङ्कर इति । अनुबन्धानां सङ्करो विमिश्रभावः । क्-ण्-टादीनामनुबन्धानामेकेनैवाकारेण सम्बन्धवशात् तस्यैकत्वात्तेषामप्यनुगतानामेकत्वम् । सुतरां गोद इत्यादौ टिज्जन्यङीप् सामगीत्यादौ किज्जन्यटाप् प्राप्नोति । एवमन्यत्रापि साङ्कर्य्यम् ।

किरिणेति । "सावेकाचस्तृतीयादिर्विभक्तिः" (६।१।१६८) इत्यनेन सप्तमीबहुवचने सौ य एकाच् तस्मात् परा तृतीयादिर्विभक्तिरुदात्ता भवति । 'किरिणा' 'गिरिणे'त्यत्र इकारद्वयस्यैकत्वादेकाच्त्वं सिद्ध्यति, सुतरामनेन सूत्रेणान्तोदात्तत्वं घटते, न पुनस्तत्-प्रतीकारः । कथमत्राकारो नोदात्तः? "न गोश्वन् साववर्णे"ति (६।१।१८२) प्रतिषेधात् ।

घटेन तरतीति । अकारस्यैकत्वाद्घटशब्दगतयोरकारयोरेकत्वम्, सुतरां "नौ द्व्यचष्ठन्" (४।४।७) इत्यनेन घटेन तरति घटिक इति द्व्यज्लक्षणष्ठन् न प्राप्नोति । सूत्रस्य का गतिः? बाहुकादिषु तस्य चरितार्थता ।

## ९। विषयेण तु नानालिङ्गकरणात् सिद्धम्।

प्रथमामापत्तिं तावत्परिहरति। नानुबन्धसङ्करोऽस्ति। कथम्? यतो विषये विषये नानालिङ्गमकारं करोति, तद्यथा "कर्म्मण्यण्" 'आतोऽनुपसर्गे कः'। न पुनरनुबन्धसाङ्कर्य्ये नानालिङ्गं कुर्य्यात्। किन्तर्हि, एकमेव निखिलानुबन्धैरुच्चारयेत्। नानालिङ्गकरणस्यान्यत् प्रयोजनमस्ति। किम्? इत्संज्ञाप्रक्लृप्त्यर्थम्। यदुक्तम्, एकमेव निखिलानुबन्धैरुच्चारयेत्। तन्न सम्भवति। न ह्येकोऽकारः शल्यकवदनुबन्धैः शक्य उपचेतुम्। अपि च इत्संज्ञायां दोषः स्यात्, यतः आद्यन्तयोरेवेत्संज्ञा विधीयते। भवतु तदा—

## १०। विषयेण तु पुनर्लिङ्गकरणात् सिद्धम्।

विषये विषये एकमेव लिङ्गं पुनरन्यत्र करणात् ज्ञायते नानुबन्धसङ्करोऽस्ति, तद्यथा "प्राग्दीव्यतोऽण्" (४।१।८३) "शिवादिभ्योऽण्" (४।१।११२)। यदि साङ्कर्य्यं स्यात् तदा पुनस्तल्लिङ्गकरणमनर्थकं स्यात्।

---

विषयेणेति। वार्त्तिके सामान्यरूपतया ह्यभेदेन गृहीत्वा विषयः करणत्वेन निर्दिष्टः, विवृतौ तु व्यक्तिभेदेन वीप्सायामधिकरणत्वेन।

इत्संज्ञाप्रक्लृप्त्यर्थमिति। प्रथमन्तावत् वर्णानामुपदेशः, तदनन्तरं "हलन्त्यम्" (१।३।३) इति इत्संज्ञा, तदनन्तरम् "आदिरन्त्येन सहे"(१।१।७१)ति प्रत्याहारः। अतः अण् अक् अङ् अच् इत्यादि नानालिङ्गकरणमित्संज्ञासिद्ध्यर्थम्।

अपि चेति। यद्यप्येकोऽकारः कण् इत्यादिरूपेणानुबन्धयुक्तः स्यात्, इत्संज्ञाप्रक्लृप्तिर्दुरुपपादा। यतस्तत्रान्त्येनैता आद्येर्ग्रहणं भवति, तेन च मध्यपतितानां संज्ञा।

एकमेवेति। "प्राग्दीव्यतोऽण्" इत्यनेन अण् विधाय "शिवादिभ्योऽण्" इति पुनर्णिद्विधानेन दर्शयति, स एवायमण् योऽयं पूर्व्वविहितः। यदि साङ्कर्य्यं स्यात् शिवादिभ्यः केवलोऽकार एव विदध्यात्। ञित्कार्य्यं मा भूदिति नियमार्थं णिदिति चेत्, न, नियमाद्धि विधिर्बलीयान्।

अथवा पुनरस्तु "विषयेण तु नानालिङ्गकरणात्सिद्धम्"। ननु चोक्तम्, इत्संज्ञाप्रक्लृप्त्यर्थमेतत् स्यात्। नैष दोषः।

## ११। लोकत एतत्सिद्धम्।

लोके यथा इह मुण्डो भव, इह जटिलो भव, इह शिखी भवेत्यनुज्ञानेन एक एव देवदत्तस्तत्र तत्र लिङ्गान्तरेणोपस्थास्यते, तथैवोऽयमकारो यत्र येन लिङ्गेनोच्यते तत्र तेनैवोपस्थास्यते।

यदुक्तम् "एकाजनेकाज्ग्रहणेषु चानुपपत्ति"स्तत्रापि—

## १२। एकाजनेकाज्ग्रहणेष्वावृत्तिसंख्यानात्।

प्रथमोत्तमयोस्त्रिरावृत्त्या यथा सप्तदश सामिधेन्यो भवन्ति, एवमिहाप्यावृत्तेः संख्यानादनेकाच्त्वं भविष्यति। भवेदावृत्तितो गौणं कार्य्यं, तत्परिहृतम्। मुख्यैकाच्त्वन्तु न निवर्त्तते। अतः 'किरिणा' 'गिरिणे'त्यनेकाजलक्षणमत्तोदात्तत्वं प्राप्नोत्येव। एतदपि सिद्धं लोकतः। तद्यथा, एकां कपिलामृषिसहस्रमेकैकशः सहस्रकृत्वो दत्वा तथा ते सर्व्वे सहस्रदक्षिणाः सम्पन्नाः, एवमिहापि अनेकाच्त्वम्।

---

प्रथमोत्तमयोरिति। विकृतियागे त्रयोदश सामिधेन्यः प्रथमोत्तमयोस्त्रिरावृत्त्या सप्तदश भवन्ति। द्वयोः त्रिरावृत्त्या षट्, शिष्टैरेकादशभिः सप्तदश इति गणना भवति।

भवेदिति। त्रयोदश सामिधेन्य एव मुख्याः, तदावृत्त्या यत् सप्तदशत्वं तद्गौणम्। एवमेकाच्त्वमेव मुख्यम्, आवृत्तितो यदनेकाच्त्वं भवति तद्गौणम्। "नौ द्व्यचष्ठन्" इत्यस्य बाहुकादौ मुख्ये द्व्यचि कृतार्थतायां कथं स्याद्गौणे द्व्यच्त्वे कार्य्यम्? "गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत्" (५। १।३९) इत्यत्र द्व्यच्तयाश्वशब्दस्य प्रतिषेधात् ज्ञापयति आवृत्तिभेदेनापि भेदमाश्रित्य कार्य्यं भवति। तेनात्र गौणस्यापि मुख्यसमकक्षता।

लोकत इति। मुख्येन गौणेन च संख्यान्तरेण पूर्व्वा संख्या बाध्यते, तद्यथा एकां कपिलामित्यादिदृष्टान्ते।

यदप्युच्यते द्रव्यवदुपचाराः प्राप्नुवन्तीति तत्रापि यदसम्भवि कार्यं तत्रानेको युगपन्न कार्यं कुर्यात् यत्तु सम्भवि कार्य्यं तत्रानेको युगपत् कार्य्यं करोति, यथा घटस्य दर्शनं स्पर्शनं वा । अकारोच्चारणं सम्भवि कार्य्यं, तदनेकोऽपि युगपत् करिष्यति ।

## १३ । आन्यभाव्यन्तु कालशब्दव्यवायात् ।

कालव्यवधानात् शब्दव्यवधानात् भवत्यकारस्यान्यभाव्यम् । तद्यथा दण्ड अग्रम् इत्यत्र कालव्यवधानम् । दण्ड इति शब्दव्यवधानम् । न ह्येकस्यात्मनो व्यवधानेन भवितव्यम् ।

## १४ । युगपच्च देशपृथक्त्वदर्शनात् ।

यदयं युगपद्देशपृथक्त्वेषूपलभ्यते, ततो भवत्यस्यान्यभाव्यम् । द इत्यत्र दृश्यमानो-ऽकारः पुनर्ण्ड इत्यत्र वेगगामिशकुनिवद्दृश्यत इति चेत्, अनित्यत्वं स्यात् । आदित्य-वद्वर्णा अनेकाधिकरणस्था युगपत् देशपृथक्त्वेषूपलभ्यन्त इति चेत्, न सिद्ध्यति ।

---

आन्यभाव्यमिति । "गुणवचनब्राह्मणादिभ्यः कर्म्मणि च" (५।१।१२४) इत्यनेन अन्यो भावीऽन्यदस्तु, तस्य भाव इति भावे ष्यञ्, अन्यस्य भावस्ततः स्वार्थे ष्यञ्, तत्रैव स्वार्थे विधानार्थोऽपि पाठो दृश्यते । उभयथापि अन्यत्वमित्यर्थः ।

दण्ड अग्रमिति । दण्ड अग्रम् इत्यत्र असंहितायां कालव्यवधानम् । दण्ड इत्यत्र णकारडकाराभ्यामकार उभयत्र व्यवहितः । ततः शब्दव्यवधानम् ।

देशपृथक्त्वेष्विति । अश्वः अर्कः अर्थः इत्यादौ पृथक् पृथक् देशेषु अकारस्य स्थितिः । न ह्येको देवदत्तो युगपत् स्रुघ्ने च भवति मथुरायाञ्च ।

वेगगामिशकुनिवदिति । व्यञ्जकध्वनिसन्निधानात् द इत्यत्रोपलभ्यमानोऽकारस्तत्र तदसन्निधानेन शकुनिवदाशुसञ्चारित्वात् ण्ड इत्यत्रोपलभ्यते; यथा शकुनिः पङ्क्तेरादा-ववस्थितः द्रुतवेगत्वात् पश्चाद्दृश्यते । सुतरां व्यञ्जकध्वनीनामेव कालशब्दाभ्यां व्यवधानं न तु ध्वनिव्यङ्ग्यस्य ।

अनित्यत्वं स्यादिति । एकस्यैकत्र व्यञ्जकध्वनिसन्निधानेनोपलब्धिस्तदसन्निधानेना-नुपलब्धिरित्यनित्यत्वमायाति । कथम्? "नित्येषु शब्देषु कूटस्थैरविचालिभिर्वर्णै-

नैको द्रष्टानेकाधारगतमादित्यं युगपद्देशपृथक्त्वेनूपलभते, अकारन्तूपलभत एव। नोपलभते। कथम्? "श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलित आकाशदेशः शब्दः, एकञ्च पुनराकाशम्। यतः आकाशदेशा अपि बहवः, तत आन्यभाव्यमकारस्य।

## १५। आकृतिग्रहणात् सिद्धम्। *।

अवर्णाकृतिरुपदिष्टा सर्वमवर्णकुलं ग्रहीष्यति। तथेवर्णाकृतिस्तथोवर्णाकृतिः।

---

भवितव्यमनपायोपजनविकारिभिः।" स यदि दृश्यत दृष्टोऽकारोऽन्यत्र दृश्यते कूटस्थादिकं व्याहन्यते।

एकञ्च पुनराकाशमिति। जातिस्फोटवादिनाप्याकारस्य भेदः परिगृह्यते व्यक्तिस्फोटवादिना त्वभेदः। एकस्याकारस्योदात्तादिभेदात् भिन्नत्वादुदात्तत्वं परिहायानुदात्तत्वग्रहणे तस्यानित्यत्वप्रसङ्ग इत्यभियुक्तोपन्यस्तवादनिराकृतये व्यक्तिस्फोटवादी त्वाह, आकाशदेशः शब्दः, एकञ्च पुनराकाशमिति। कथमाकाशदेशः शब्दः? पुरुषोदीरितव्यञ्जकध्वनिः श्रोत्रेणोपलभ्यते, श्रोत्रन्तु पुनराकाशप्रदेशविशेषः। न ह्रीन्द्रियाणां सम्बन्धेन विना विषयग्रहणं सम्भवति। श्रोत्रन्तु पुनर्निश्चलं क्रियाहीनम्। प्रयोगेण पुरुषोदीरितेन अभिज्वलितः अभिव्यक्तोध्वनिरतएव आकाशप्रदेशएव। कथम्? श्रोत्रेन्द्रियस्य तद्व्यतिरिक्तान्यसम्बन्धविरहितत्वात्। स च ध्वनिरेव शब्दः। शब्दस्तु बुद्धिनिर्ग्राह्यः, यतः पूर्व्वपूर्व्वध्वन्यभिव्यक्तिजन्या या संस्कारपरम्परा उपजायते तस्या यत्रान्त्यबोधस्तेनैव तत्परिग्रहः।

आकाशदेशा अपि बहव इति। श्रोत्रवर्त्ति आकाशं घटवर्त्ति आकाशम् एवमेकस्यापि आकाशस्य भेदव्यवहारादाकाशदेशा अपि बह्वो यथा एकस्याः पृथिव्याः सुघ्नमथुरादिदेशाः।

व्यक्तिपक्षे निराकृते जातिपक्षएवाश्रीयते आकृतिग्रहणादिति। सर्व्वप्रदेशेष्वकारजातिर्निर्द्दिश्यते, व्यक्तिनिर्द्देशो न जातेरनुपस्थापको नान्तरीयकत्वात्। प्रत्याहारे निर्द्दिष्टाया एवाकारजातेर्विवृतत्वप्रतिज्ञानम्, तस्या एव शास्त्रान्ते प्रत्यापत्तिः "अ अ" (८।४।६८) इति। एवमनुवृत्तिनिर्द्देशस्थेनाकारेण जातिनिर्द्देशादाकारस्य ग्रहणम्।

अतिप्रसङ्गस्तु तपरकरणेन बाध्यते। सवर्णग्रहणजनितातिप्रसक्तिनिवारणाय तपरकरणमिति चेत्, न। प्रत्याख्यायते तत् "सवर्णेऽण्ग्रहणमपरिभाष्यमाकृति-ग्रहणादनन्यत्वाच्चेति।" हल्ग्रहणेषु चाकृतिग्रहणात्सिद्धम्। यथा 'झलो झलि' (८।२।२६) अवात्ताम्, अवात्तम्, अवात्त।

यत्राकृतिग्रहणं नास्ति तत्राण् सवर्णान् गृह्णाति।

---

"अष्टन आ विभक्तौ" (७।२।८४) इत्यत्र जातिनिर्देशे ह्रस्वस्यापि ग्रहणं भवतीति चेत्, न, दीर्घोच्चारणसामर्थ्यात्, अन्यथा ह्रस्वमेवोच्चारयेत्। कथम् न प्लुतस्य ग्रहणम्? "प्लुतश्च विषये स्मृत" इति न्यायात्। विषये दूराद्धूतादौ। "त्यदादीनाम" (७।२।१०२) इत्यत्र "अप्रत्यय" (१।१।६९) इति ज्ञापकात् परिगृहीतया "भाव्यमानेन सवर्णानां ग्रहणं ने"ति परिभाषया आदेशादौ यथाश्रुतोऽकार एव गृह्यते। "अस्य च्वौ" (७।४।३२) इत्यत्र व्यक्तिनिर्देशस्य नान्तरीयकत्वात् सकलव्यक्तिग्रहणम्। व्यक्तिपक्षं समाश्रित्य "अणुदित् सवर्णस्य चाप्रत्यय" (१।१।६९) इति सूत्रं सूत्रकृतोपन्यस्तम्, भाष्यकृता तु जातिपक्षमवलम्ब्य सूत्रं प्रत्याख्यातम्, प्रत्याख्यातमपि क्वचित्क्वचित्तेन पुनस्तत्परिगृहीतम् दोषनिवृत्त्यर्थम्, तद्यथा "अष्टन आ विभक्तौ" इत्यत्रैव भाष्ये। विस्पष्टार्थं दोषनिवृत्त्यर्थञ्च सूत्रकृता जातिपक्षं परिहाय व्यक्तिपक्षः समाश्रितः। यतोऽनेन लघ्वानुरोधात् व्याख्यानानुसरणगौरवं न भवति, अप्रत्ययोऽविधीयमानोऽण् सवर्णस्य ग्राहक इति झटिति स्फुटतरप्रतीतिः। व्यक्तिपक्षे सादृश्यसम्बन्धान्निखिलव्यक्तिग्रहण-मस्तीत्यदोषः।

अवात्तामिति। वसेर्लुङि अवात्+स्+ताम् इति स्थिते व्यक्तिपक्षे पूर्वपरयोस्त-कारयोरन्यतरोऽप्यचरसमाम्नाये सुतरां द्वयोर्झलत्वं न स्यात्। सूत्रस्य तु चरितार्थता भिदेर्लुङि अभित्ता इत्यादौ स्यात्।

यत्राकृतिग्रहणमिति। यत्राकृतिपक्षो नाश्रीयते, तत्र अणा सवर्णग्रहणं भवतीत्यर्थः।

## १६। रूपसामान्याद्वा।*।

रूपसामान्याद्वा सिद्धमेतत्। तद्यथा तानेव शाटकानाच्छादयामः ये मथुरायामित्यत्र रूपसामान्यादेव मथुरायां परिगृहीतानां शाटकानामन्यत्र तत्त्वेन परिग्रहः।

---

## ऋ ऌ क्।२।

म. द्व.। ऋ ऌ इत्येतौ वर्णावुद्दिश्य पूर्व्वांश्चान्ते ककारमितं करोति प्रत्याहारार्थम्। तस्य ग्रहणं भवति त्रिभिः। "अकः सवर्णे दीर्घः" (६।१।१००) इत्यकारेण, "इकोगुणवृद्धी" (१।१।३) इतीकारेण, "उगितश्च" (४।१।६) (६।३।४५) इत्युकारेण। अकारादयो वर्णाः प्रचुरप्रयोगविषयास्तेषां सुज्ञानमुपदेशे प्रयोजनम्। ऌकारस्तु क्लृपिस्थएव प्रयुज्यते, क्लृपेश्च "पूर्व्वत्रासिद्ध"मिति लत्वमसिद्धम्। तस्यासिद्धत्वात् ऋकार एव अच्कार्य्याणि भविष्यन्तीति किमर्थम् ऌकार उपदिश्यते? लत्वविधानाद्यानि पराण्यच्कार्य्याणि तानि ऌकारे यथा स्युरिति। कानि पुनस्तानि? प्लुतः, स्वरितो-द्विर्व्वचनम्। 'क्लृ३प्तशिखः' 'प्रक्लृप्तवान्' इति। यच्चाशक्तिजमसाधुशब्दरूपं तदनुकरणस्यापि साधुत्वमिष्यते। तत्स्थस्यापि ऌकारस्याच्कार्य्यप्रतिपत्त्यर्थम् ऌकारोपदेशः क्रियते। ऋतक

---

रूपसामान्याद्वेति। भेदप्रतिरोधिनि व्यक्तिनिर्द्देशे रूपसामान्यतोऽभेदव्यवहारोऽस्ति यथा लोके।

इति प्रयोक्तव्ये शक्तिवैकल्यात् कुमारी ऌतक इति प्रयुङ्क्ते । तदन्योऽनुकरोति "कुमारी ऌतक इत्याह" इति ।

भा. स. । अथ किमर्थं ऌकारोपदेशः ? किं विशेषेण ऌकारस्य न पुनरन्येषामपि वर्णानामुपदेशश्चोद्यते ? यद्यस्ति किञ्चिदन्येषां वर्णानामुपदेशे प्रयोजनम् ऌकारस्यापि तद्भवितुमर्हति । को वा विशेषः ? विशेषोऽत्र, ऌकारस्य लघीयान् प्रयोगविषयः । यश्चास्ति प्रयोगः स क्ऌपिस्थएव । क्ऌपेश्च लत्वस्यासिद्धत्वात् ऋकारस्यैवाच्कार्याणि भविष्यन्ति, किम् ऌकारोपदेशेन । तत्राह

## १ । ऌकारोपदेशो यदृच्छाशक्तिजानुकरणप्लुताद्यर्थः ।

(१) यदृच्छाशब्दार्थोयथा 'दध्यॢतकाय देहि' । यदृच्छया कश्चिद्-ऌतको नाम,

---

अथ किमर्थं इति । "ऋकारऌकारयोः सवर्णविधि"रिति वार्त्तिकवाक्यमनपेक्ष्य सूत्रकृता ऌकारोपदेशः कृतः । यदि पुनस्तदपेक्ष्यैवैतत्पुनः कृतं, सवर्णविधेरनित्यत्व-प्रदर्शनार्थैवेति सिद्धान्तः, अन्यथा 'क्ऌप्तशिख' इत्यत्र "गुरोरनृत" (८।२।८६) इति निषेधः प्राप्नुयात् । बह्वृचप्रातिशाख्ये ऋ ऌ वर्णयोरुभजिह्वामूलीयत्वेन स्थानसाम्य-मस्ति ततः सवर्णतायामपि तथा । एवञ्च प्लुताद्यर्थम् ऌकारोपदेशे कर्त्तव्ये प्रश्नमुखेन तदाक्षिपति, अथ किमर्थं ऌकारोपदेश इति ।

किं विशेषेणेति । उपदेशं विनापि ऌकारप्राप्तिसम्भावनां पश्यन्नाह किं विशे-षेणेति । तत्प्रत्युक्त्या बाध्यते यद्यस्ति किञ्चिदित्यादिना ।

यश्चास्तीति । अल्पप्रयोगविषयादृकारादपि अल्पीयान् ऌकारस्य प्रयोगविषयः, तथापि प्रयोगविषयत्वादुपदेशः कर्त्तव्य इति पश्यन् परिहरति, ऋकारस्यैवाच्कार्याणि भविष्यन्तीति । ऋकारावस्थायामेवोदात्तादिषु कृतेषु "स्थानेऽन्तरतम" इति स्थानि-सदृशलकारो भविष्यतीत्यभिप्रायः ।

तस्मिन्नच्कार्य्याणि यथा स्युः। चतुष्टयी शब्दानां प्रवृत्तिः—जातिशब्दाः, गुणशब्दाः, क्रियाशब्दाः, यदृच्छाशब्दाश्चतुर्थाः।

(२) अशक्तिजानुकरणार्थो यथा "कुमारी लृतक इत्याह"। अशक्त्या कुमारी लृतक इत्याह तस्येदमनुकरणम्।

(३) प्लुतिद्विर्वचनस्वरिताः प्लुताद्यास्तदर्थाः, तद्यथा 'कॢ३प्तशिख' 'क्लृप्तः' 'प्रक्लृप्तः'। परेषु प्लुतादिषु लत्वं पूर्व्वत्रासिद्धम्। सुतरामच्कार्य्याणि न प्राप्नुवन्ति। तत्सिद्धये लृकारोपदेशोऽनैव कर्त्तव्यः।

नैतानि सन्ति प्रयोजनानि। कथम्?

## २। न्याय्यभावात्कल्पनं संज्ञादिषु।

न्याय्यस्य ऋतकशब्दस्य संज्ञादिषु कल्पनं साधु, ऋतक एवासौ न लृतकः। अथवा न्याय्यः ऋतकशब्दः शास्त्रसिद्धोऽस्ति, संज्ञादिषु स एव कल्पयितव्यः, ऋतक एवासौ

---

परेष्विति। "कृपोरोलः" (८।२।१८) इति सूत्रेण लकारादेशोविहितः। स च "गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्" (८।२।८६) "अनचि च" (८।४।४७) "उदात्तादनुदात्तस्य स्वरितः" (८।४।६६) इत्येतैः परविहितान् प्लुतद्विर्व्वचनस्वरितान् प्रति नासिद्धः। "पूर्व्वत्रासिद्धम्" (८।२।१) इत्यनेन परं हि पूर्व्वं प्रत्यसिद्धम्, न तु परं प्रति पूर्व्वम्, सुतरां लत्वसामान्यस्य लृकारस्याच्त्वं व्याहन्यते।

प्रक्लृप्त इति। अन्तर्भावितण्यर्थात् कर्म्मणि क्तः, तेन "गतिरनन्तरः" (६।२।४९) इत्यनेन पूर्व्वपदप्रकृतिस्वरः। ततः शेषनिघाते "उदात्तादनुदात्तस्य स्वरितः"।

न्याय्यभावादिति। प्रथमप्रयोजननिराकरणार्थं वार्त्तिकमिदम्। सूत्यनुसारेण छादन्तं नाम कर्त्तव्यम्। ऋतिः सौत्रोधातुः। ततः "क्वुन् शिल्पिसंज्ञयोरपूर्व्वस्यापी"त्यनेन ऋतकः सिद्धः। अतः शास्त्रसिद्धत्वान्न्याय्य एवायम्। लृतकस्त्वशक्तिजत्वादस्यैवापभ्रंशः।

संज्ञादिष्विति। आदिपदेन जातिशब्दाः गुणशब्दाः क्रियाशब्दाः सर्व्वएव शास्त्रान्विताः प्रयोक्तव्या इति दर्शयति।

न लृतक इति। लृफिड: लृफिड्डपावत् यदृच्छाशब्द:। ऋधातोरौणादिक फिड-फिड्डप्रत्ययाभ्यां निष्पन्नौ ऋफिडर्फिड्डौ शब्दावेतौ। अतस्त्रयी शब्दानां प्रवृत्ति:, जातिशब्दा: गुणशब्दा: क्रियाशब्दा:, न सन्ति यदृच्छाशब्दा:।

सन्ति यदृच्छाशब्दा इति कृत्वा प्रयोजनमुक्तम्, न सन्तीति कृत्वा परिहार:।

## ३। समाने चार्थे शास्त्रान्वितोऽशास्त्रान्वितस्य निवर्त्तकोभवति।*।

तद्यथा शास्त्रान्वितोदेवदत्तशब्द: समानार्थं देवदिन्नशब्दं निवर्त्तयति, न गाव्यादीन्। नैष दोष:।

## ४। पक्षान्तरैरपि परिहारा भवन्ति।

व्युत्पन्नपक्षमाश्रित्य यदृच्छाशब्दा निवर्त्तिता:, अव्युत्पन्नपक्षमाश्रित्य सन्तीति परिहारा भवन्ति।

---

सन्तीति। अव्युत्पत्तिपक्षमाश्रित्य सन्तीति, व्युत्पत्तिपक्षमाश्रित्य न सन्तीति फलितार्थ:।

समाने चेति। यत्र समानार्थत्वं, तत्रैव साधुरसाधुशब्दस्य निवर्त्तकोभवति। लृतक: ऋतकश्चेत्येतौ भिन्नस्वरूपौ, यत: लृतकशब्द: कस्मिंश्चिज्जने संज्ञात्वेन नियुज्यते सुतराम् लृतकस्वरूप एवासौ।

पक्षान्तरैरिति। कुत्रचिद्व्यक्तिपक्ष आश्रित:, स एव जातिपक्षे समाश्रिते प्रत्याख्यात:। एवं पक्षान्तरैरिति। व्युत्पन्नसंज्ञाशब्दपक्ष:, अव्युत्पन्नसंज्ञाशब्दपक्ष:। यदा व्युत्पन्नसंज्ञाशब्दपक्षाश्रय:, तदा ह्यव्युत्पन्नसंज्ञाशब्दपक्ष: प्रत्याख्यात:। अव्युत्पन्नसंज्ञाशब्द-पक्षाश्रये तु शिष्टप्रयुक्ता: पारम्पर्य्यागता: संज्ञा: सिद्ध्यन्ति। टिघुभादिवत् लृतकशब्द: साध्वसाधुबहिर्भूत: साधुरेव वेति पक्षान्तरे भाष्यकृता स्थापित:।

## ५ । अनुकरणं शिष्टाशिष्टाप्रतिषिद्धेषु यथा लौकिकवैदिकेषु ।

अनुकरणं शिष्टस्य साधु भवति । अशिष्टाप्रतिषिद्धस्य तु नैव दोषायाभ्युदयाय वा । यथा लौकिकेषु वैदिकेषु च कृतान्तेषु । लोके तावत्—एवमसौ ददातीत्यनुकुर्व्वन् यो दद्यात् सोऽभ्युदयेन युज्यते । वेदेऽपि—एवं विश्वसृजः सत्राण्यध्यासत इति तेषामनुकुर्व्वन् यः सत्राण्यध्यासीत सोऽभ्युदयेन युज्यते । अशिष्टाप्रतिषिद्धम्—एवमसौ हिक्कतीति तस्यानुकुर्व्वन् यो हिक्केत् नैव तस्य तद्दोषायाभ्युदयाय वा ।

एवमसौ सुरां पिबतीति तस्यानुकुर्व्वन् यः सुरां पिबेत् सोऽपि मन्ये पतितः स्यात् । विषमउपन्यासः । यथापि पिबति यश्चानुपिबति उभौ तौ पिबतः । यस्तु खलु एवमसौ पिबतीति तस्यानुकुर्व्वन् पयः पिबेन् न स मन्ये पतितोभवेत् । एवमिहापि एवमसौ अपशब्दं प्रयुङ्क्ते इति तस्यानुकुर्व्वन्नपशब्दं प्रयुञ्जीत सोऽपशब्दभाक् भवेत् । न खल्वपशब्दपदार्थकः शब्दोऽपशब्दोभवति । अतस्तदर्थ उपदेशः कर्त्तव्यः ।

---

अनुकरणमिति । द्वितीयप्रयोजननिराकरणार्थं वार्त्तिकमिदम् ।

कृतान्तेष्विति । कृतान्तेषु सिद्धान्तेषु ।

विषम इति । सुरापानानुकरणे सुरापानं न त्वनुकरणं तत्कार्य्यानुष्ठानमेव । अतएवानुकार्य्यस्य दुष्टत्वादनुकरणस्यापि दुष्टत्वम् । न खलु तत्रानुकार्य्यस्य दुष्टत्वाद्दुष्टत्वं यत्र सुरापानानुकरणे पयःपानम् ।

एवमिहापीति । सुरापानेन सुरापानानुकरणं यथा दोषाय तथापशब्दानुकरणेऽपशब्दप्रयोगो दोषावहः ।

न खल्विति । हेलयो हेलय इत्यादिषु अपशब्दपदार्थकः शब्द उदाहृतः । न तेन कश्चिदपशब्दव्यवहारजनितदोषागमः । कथम् ? साधुशब्दस्यार्थे यदा ह्यसाधुशब्दः प्रयुज्यते तदैवापशब्दत्वम्, यथा ऋतकार्थे लृतकशब्दस्य प्रयोगः । अनुकार्य्यस्यापशब्दस्यानुकरणे यदापशब्दपदार्थकस्य शब्दस्य प्रयोगो न तदा तस्य तथात्वम् यथा लृतको यदानुकार्य्यं प्रत्याययति तदा साधुरेव ।

अपशब्द इत्येव तस्यापशब्दत्वम् न चैषोऽपशब्दः।

अयं खल्वनुकरणशब्दोऽपरिहार्य्यः, साध्वॢकारमधीते मध्वॢकारमधीते इति। एतदर्थ उपदेशः कर्त्तव्यः। कृपिस्थस्येदमनुकरणमतः कृपेर्लत्वस्यासिद्धत्वादृकार एवाच्-कार्य्याणि भविष्यन्ति।

भवेत् किन्तु न ततः प्रयोजनसिद्धिः। अयन्त्वन्यः कृपिस्थपदार्थकः शब्दः यदर्थं उपदेशः कर्त्तव्यः। न कर्त्तव्यम्। इदमवश्यकर्त्तव्यम्, प्रकृतिवदनुकरणं भवतीति। किं प्रयोजनम्? 'द्विः पचन्त्वित्याह' "तिङ्ङतिङः" (८।१।२८) इति निघातो यथा स्यात्, 'अग्नी इत्याह' "ईदूदेद्द्विवचनं प्रगृह्यम्" (१।१।११) मिति प्रगृह्यसंज्ञा यथा स्यात्। यदि प्रकृतिवदनुकरणं भवति, अपशब्दप्रकृतित्वात्, अपशब्द एवासौ भवति

---

अपशब्द इति। गाव्यादयोऽपभ्रंशा अपशब्दवाच्याः। अपशब्दायापशब्दप्रयोगे हि अपशब्दत्वम्। नैषोऽपशब्दः, किन्तर्हि, अनुकार्य्यस्यानुकरणमात्रम्।

अयं खल्विति। न ह्यसाधोरनुकरणमप्यन्वास्तीत्युपदेशस्यावश्यकर्त्तव्यता।

कृपिस्थस्येति। ऋकारेऽच्कार्य्याणि भविष्यन्तीत्यनेन कर्त्तव्यतां परिहरति।

भवेदिति। कृपिस्थलकाराय ऌकारोपदेशाय प्रयोजनाभावेऽपि तदनुकरणार्थ-स्तदुपदेशः कर्त्तव्यः। 'साध्वॢकारमधीते' इत्यत्र प्रयोगस्यानुकरणम्। "पूर्व्वत्रासिद्ध" (८।२।१) मित्यस्य कार्य्ये नियोगो न तु प्रयोगे। सुतरां प्रयोगानुकरणे नास्ति तत्सूत्रस्य परिगणना।

इदमवश्यमिति। कृपेर्लत्वस्यासिद्धत्वादृकारद्वारेण यथाच्कार्य्यं भवति तथानुकरण-स्यापि।

द्विः पचन्त्विति। प्रकृतिवदनुकरणं भवतीत्यस्योदाहरणम्। पचन्तु पचन्त्विति केनचिदुक्ते द्विः पचन्त्विति तस्यानुकरणम्। एतच्च क्रियासाधनादि नाभिधत्ते, अतो न तिङन्तम्, तथापि प्रकृतिवत् "तिङ्ङतिङः" (८।१।२८) इत्यनेन निघातः स्यात्। 'अग्नी इत्याहे'त्यत्र प्रगृह्यत्वमतिदेशेन। न खलु अग्नीशब्दोऽत्र द्व्यर्थमभिधत्ते, यद्द्वि-वचनान्तं भविष्यति, तथापि प्रकृतिवदस्य प्रगृह्यत्वम्। "प्लुताप्लुदितः" (६।१।५५)

'कुमार्य्य् लृतक इत्याह'। न ह्यपशब्दा उपदिश्यन्ते, न चानुपदिष्टा प्रकृतिरस्ति, तत् कुतोऽपशब्दः प्रकृतिः।

## ६। एकदेशविकृतस्यानन्यत्वात् प्लुत्यादयः।

एकदेशविकृतमनन्यवद्भवतीति प्लुत्यादयोऽपि भविष्यन्ति।

यद्येकदेशविकृतमनन्यवद्भवति, तदा "राज्ञः क च" (४।२।१४०) राजकीयमित्यत्र "अल्लोपोऽनः" (६।४।१३४) इत्यकारलोपः प्राप्नोति।

## ७। एकदेशविकृतमनन्यवत् षष्ठीनिर्दिष्टस्य।

षष्ठीनिर्द्दिष्टस्यैकदेशविकृतमनन्यवद्भवतीति चेत् 'क्लृप्तशिख' इत्यत्र प्लुतो न प्राप्नोति, यतः "कृपो रो लः" (८।२।१८) इत्यत्र ऋकारो न षष्ठीनिर्द्दिष्टः। कृप उः रः ल इत्यविभक्तिकनिर्द्देशे ऋकारोऽप्यत्र षष्ठीनिर्द्दिष्टः। अथवा ह्यविशेषेण "एकदेशविकृतमनन्यवद्भवती"त्येवास्तु। राजकीयमित्यत्रालोपः प्राप्नोतीत्युक्तम्। नैष दोषः। "श्वयुवमघोनामतद्धिते" (६।४।१३३) इत्यत्र श्वादीनां सम्प्रसारणे नकारान्तग्रहणमनकारान्तप्रति-

---

इत्यत्र लृकारे परे यणादेशकरणात् धात्वनुबन्धस्य लृकारस्य सन्त्यच्कार्य्याणीत्यायाति, अतो गमॢ सृपॢ इत्यादिस्थस्यानुकरणे सिद्ध्यति प्रकृतिवद्भावः।

न ह्यपशब्दा इति। प्रकृतिवदनुकरणं भवतीत्यत्र शास्त्रीया प्रकृतिराश्रीयते, कार्य्यञ्च यदतिदिश्यते तदपि सुतरां शास्त्रीयमेव।

एकदेशविकृतस्येति। तृतीयप्रयोजननिराकरणार्थं वार्त्तिकमिदम्। "गुडिुधिलादेशविनामेषु ऋकारग्रहणं"मिति वक्ष्यमाणत्वात् ऋकारैकदेशस्य रेफस्य लत्वे कृते स एव ऋकार इति प्रत्यभिज्ञानात् भविष्यतीति एकदेशविकृतस्यानन्यत्वमित्यस्य भावः।

षेधार्थम्। तत् प्रक्रान्तमुत्तरत्रानुवर्त्तिष्यते "अल्लोपोऽनः नकारान्तस्ये"ति।

इह तर्हि "क्लृप्तश्शिखः" "अनृतः" (८।२।८९) इति प्रतिषेधः प्राप्नोति।

## ८। रवत्प्रतिषेधाच्च।

रवत्प्रतिषेधाच्चैतत्सिद्ध्यति। "गुरोररवत" इति वक्ष्यामि। एवं सति होतृश्कारः" इत्यत्र दीर्घस्य प्लुतप्रतिषेधापत्तिः। "गुरोररवतो ह्रस्वस्ये"ति वक्ष्यामि। एवमेकस्य लृकारोपदेशस्य प्रत्याख्यानाय लट्वाकर्षणाय महावंशस्तम्बावलम्बनमिव सूत्रभङ्गाश्रयणरूपं महदेव गौरवम्।



नकारान्तस्येति। राजकीयमित्यत्र कादेशे कृते राजन्शब्दो न नकारान्तस्तिष्ठति, न हि छिन्नपुच्छे शुनि पुच्छवत्त्वव्यवहारः।

रवदिति। विनामोनतिः नकारस्य णत्वादेशः। विनामे ऋकारग्रहणे कृते विनामैकदेशविकृतन्यायेन रेफवत्ताप्यायाति। तेन अनृत इत्यत्र अरवत इति सिद्ध्यति। तस्य च ऋकारप्रयुक्तं कार्य्यं न भवति छिन्नपुच्छस्य शुनः पुच्छवत्त्वाव्यवहार इव।

ह्रस्वस्येति। ह्रस्वस्य रवतो न तु दीर्घस्य प्लुतनिषेधः।

लट्वाकर्षणायेति। लट्वा करञ्जभेदः। न हि कोऽपि लट्वाकर्षणाय महान्तं वंशस्तम्बमालम्बते, तत्करणन्तु उपहासास्पदम्; एवं लृकारोपदेशप्रत्याख्यानार्थं सूत्रभङ्गाश्रयणन्तु। तदाह भाष्यकारः "स एष सूत्रभेदेन लृकारोपदेशः प्लुताद्यर्थः सन् प्रत्याख्यायते सैषा महती वंशस्तम्बाल्लट्वानुकृष्यते।" लट् लौल्ये इति धातोरौणादिकः क्वन्। लृकारप्रत्याख्यानं निष्प्रयोजनमिति स्थितम्।



# तृतीयोऽध्यायः ।



## ए ओङ् । ३ ।

म· वृ· ए ओ इत्येतौ वर्णावुपदिश्य अन्ते ङकारमितं करोति प्रत्याहारार्थम् । तस्य ग्रहणं भवत्येकेन । "एङि पररूप" (६।१।९४) मित्येकारेण ।

## ऐ औच् । ४ ।

म· वृ. ऐ औ इत्येतौ वर्णावुपदिश्य पूर्व्वांश्चान्ते चकारमितं करोति प्रत्याहारार्थम् । तस्य ग्रहणं भवति चतुर्भिः "अचः परस्मिन् पूर्व्वविधौ" (१।१।५७) इत्यकारेण, "इच एकारोऽम्प्रत्ययवच्च" (६।३।६८) इति इकारेण, "एचोऽयवायावः" (६।१।७८) इत्येकारेण ; "वृद्धिरादैच्" (१।१।१) इत्यैकारेण ।

प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न ।
आचारादप्रधानत्वाल्लोपश्च बलवत्तरः ॥

वर्णेषु ये वर्णैकदेशा वर्णान्तरसमानाकृतयस्तेषु तत्कार्य्यं न भवति, तच्छायानुकारिणो हि ते न पुनस्त एव । पृथक्-प्रयत्ननिर्वृत्त्यर्थं हि वर्णमिच्छन्त्याचार्य्याः । नुड्विधिलादेश-विनामेषु ऋकारे प्रतिविधातव्यम् । नुड्विधौ ऌकारग्रहणम्—आनृधतुः आनृधुः । लादेशे ऌकारग्रहणम्—क्लृप्तः क्लृप्त-वान् । विनामे ऋकारग्रहणम्—कर्त्तॄणाम् ।

भा स. इमानि सन्ध्यक्षराणि एत् ओत् ङ्, ऐत् औत् च् इति तपराणि वीपदिश्ये-रन्नथवा यथान्यासमतपराणि ? कश्चात्र विशेषः ?

## १ । सन्ध्यक्षरेषु तपरोपदेशश्चेत् तपरोच्चारणम् ।

सन्ध्यक्षरेषु तपरोपदेशश्चेत् तपरोच्चारणं कर्त्तव्यम् ।

## २ । प्लुतादिष्वज्विधिः ।

तपरनिर्द्देशे त्रिमात्रत्वाभावादच्त्वाभावः । सुतरां प्लुतादिष्वजाश्रयविधिर्न सिद्ध्यति । 'गौ३त्रात' 'नौ३त्रात' इत्यत्र "अनचि च" (८।४।४७) त्यनेन अच उत्तरस्य यरो द्वे भवतीऽनचीति द्विर्वचनं न प्राप्नोति । 'प्रत्यङ्ङै३तिकायन.' 'उदङ्ङौ३पगव' "ङमो ह्रस्वादचि ङमुन् नित्यम्" (८।३।३२) इत्यनेन अचि ङमततादेशो न भवति ।

## ३ । प्लुतसंज्ञा च ।

प्लुतसंज्ञा च न सिद्ध्यति । 'ऐ३तिकायन.' 'औ३पगव:'। "ऊकालोज्ह्रस्वदीर्घप्लुत" (१।२।२७) इति त्रिमात्रस्य प्लुतसंज्ञकत्वात् प्लुतसंज्ञा च न प्राप्नोति ।

सन्तु तर्ह्यतपराणि ।

## ४ । अतपर एच इग्घ्रस्वादेशे ।

यदि अतपराणि एच इग्घ्रस्वादेश इति वक्तव्यः स्यात्, किं प्रयोजनम् ? एङो

---

सन्ध्यक्षराणीति । सन्धीयमानावयवत्वात् सन्ध्यक्षराणीत्यन्वर्था पूर्व्वाचार्य्यसंज्ञा ।

प्लुतादिष्विति । "ऊकालोज्ह्रस्वदीर्घप्लुत" (१।२।२७) इत्यत्राच्शब्दोऽस्ति । अच्-शब्देनात्र तपराणामिचामुपस्थितिस्तपरैस्तत्कालग्रहणात् गौ३त्रात इत्यादौ त्रिमात्रत्वग्रहणं व्याहन्यते । त्रिमात्रत्वाभावे नाच्त्वं, अच्त्वाभावे न द्विर्व्वचनम् नापि ङमुट्त्वम् ।

प्लुतसंज्ञेति । पूर्व्वोक्तयुक्त्या तत्कालग्रहणात् त्रिमात्रत्वाभावात् ।

एच इगिति । "एच इग्घ्रस्वादेशे" (१।१।४८) इति सूत्रं वार्त्तिककृता प्रत्याख्यातं,

ह्रस्वादेशशासनेष्वर्द्ध एकारोऽर्द्ध ओकारो वा मा भूदिति । तपराणि चेत् तत्राप्येतद्वक्तव्यम् । यतः इमौ ऐचौ समाहारवर्णौ ; मात्रावर्णस्य मात्रेवर्णोवर्णयोः ; तयोः ह्रस्वादेशे कदाचिदकारः स्यात् कदाचिदिकारोकारौ स्यातां, मा कदाचिदकारः स्यादिति सूत्रारम्भः।

प्रत्याख्यायते चैतत्सूत्रं वार्त्तिककारेण "ऐचोश्चोत्तरभूयस्त्वादि"ति । प्रत्याख्यानपक्षे इदमपि प्रत्याख्यातम् "सिद्धमेङः सस्थानत्वादि"ति ।

---

तदुपलक्ष्योक्तं वक्तव्यं स्यादिति । एङ इति । अर्द्ध इति समांशवाचिनोऽपि पुंस्त्वमेतद्भाष्यप्रामाण्यात् । एचां हि पूर्व्वभागोऽकारसदृशः उत्तरभाग इवर्णोवर्णसदृशः । तच्चोच्चारणतः परिलक्ष्यते एङि अकारः प्रश्लिष्टः, ऐचि विश्लिष्टः । एङः प्रश्लिष्टावर्णत्वादेकारौकारवर्णसवर्णावर्द्धैकारावौकारौ प्राप्नुतः ।

तपराणि चेदिति । ऐचोर्विश्लिष्टावर्णत्वात् अर्द्ध एकारोऽर्द्ध ओकारो न भवतः अथ च समाहारवर्णत्वात् तपरत्वेऽपि कदाचिदकारः स्यात् कदाचिदिकारोकारौ । एवं सूत्रारम्भस्य प्रयोजनमुभयत्र समानमेव । अतपरत्वे एचः, तपरत्वे ऐचः ह्रस्वादेशे इद्वतीति वक्तव्यं भवति । मात्रावर्णस्येति । अ इ उ एषां प्रत्येकमष्टादश भेदाः । अष्टादशभेदभिन्नानामेषां मात्रा ह्यवयवभेदः । अतो भेदसद्भावात् षष्ठ्या निर्द्देशः ।

प्रत्याख्यायत इति । अकारनिवृत्त्यर्थं "एच इग्घ्रस्वादेशे" इति सूत्रं न कर्त्तव्यम् । कथम् ? उच्चारणतोऽकारस्यार्द्धमात्रा, इकारोकारयोरध्यर्द्धमात्रा, अत उत्तरभूयस्त्वादिकार उकार एव । इदमपीति । एकारस्तालव्यः, ओकार ओष्ठ्य इति तयोः स्थाने इकारोकारावेव भविष्यतः । एदैतोः कण्ठतालु ओदौतोः कण्ठौष्ठमिति मते तु "शब्दपरविप्रतिषेधेन एङ उत्तरभागान्तरतमौ इ उ वर्णावेवेति सिद्धम् ।" एकारस्तालव्य ओकारः ओष्ठ्यो यथा बह्वृचप्रातिशाख्ये "तालव्यावेकारचवर्गाविकारैकारौ यकारः शकारः" इति "शेष ओष्ठ्योपपाद्य" इति च । शेषः खलु उवर्णः पवर्गः ओ औ उपाध्मानीयश्चोष्ठ्या इति ।

यद्यप्यत्र वार्त्तिककृता सूत्रं प्रत्याख्यातम्, तथापि तत्कृत-ऋ-ऌवर्णविषयकं वार्त्तिकं यथा शिक्षान्तरानुसारेण युक्तम्, तथात्र सूत्रकारस्यापि ह्रस्वादेशानुशासने सात्यमुग्रिराणायनीयप्रातिशाख्यानुसार्थ्यर्द्धैकारौकारप्रतिनिवृत्तये सूत्रारम्भो युक्तिसिद्ध एव । यदि सूत्रं प्रत्याख्यायते वार्त्तिकमपि समानन्यायेन प्रत्याख्यानयोग्यम् ।

ननु छन्दोगानां सात्यमुग्रिराणायनीया अर्द्धमेकारमर्द्धमोकारञ्चाधीयते, सुजाते ए अश्वसूनृते" "अध्वर्यो ओ अद्रिभिः सुतम्।" अत एङः सस्थानतरावर्द्ध एकारः अर्द्ध ओकारः स्याताम्। शाखाविशेषे गीतिवशादेवमुच्चारितम्। नैव लोके नान्यस्मिन् वेदेऽर्द्ध एकार अर्द्ध ओकारौ वास्ति।

## ५। एकादेशे दीर्घग्रहणम्।

यदि अतपराणि "आद्‌गुणः" (६।१।८७) दीर्घः, "वृद्धिरेचि" (६।१।८८) दीर्घ इति एकादेशे दीर्घग्रहणं कर्त्तव्यम्; अन्यथा 'खट्वा-इन्द्रः—खट्वेन्द्रः' "खट्वा-ईषा—खट्वेषा" इत्यादौ आन्तर्य्यतः त्रिमात्रचतुर्म्मात्राणां स्थानिनां त्रिमात्रचतुर्म्मात्रा आदेशा भवेयुः।

न दीर्घग्रहणं कर्त्तव्यम्। "अकः सवर्णे दीर्घः" (६।१।१००) इत्यत्र दीर्घ इति योगविभागः करिष्यते। ततः एकः पूर्व्वपरयोरित्यधिकारे यो विहितः स दीर्घो भवतीति व्याख्यानं भवति।

एवं सति 'पयुम्' 'विद्धम्' 'पचन्ती'त्यत्र दीर्घप्रसङ्गः। पयुमित्यत्र "अमि पूर्व्वः" (६।१।१०६) इत्यस्मिन् "प्रथमयोः पूर्व्वसवर्णयोः" (६।१।१०२) इत्यतः पूर्व्वसवर्ण इत्यनुवर्त्तमानेऽपि यत् पूर्व्वग्रहणं करोति, तस्यैतत् प्रयोजनम्—यथाजातीयकः पूर्व्वस्तथाजातीयक उभयोः स्यात्। विद्धमित्यत्र "सम्प्रसारणाच्च"(६।१।१०७)त्यस्मिन् तस्यैव पूर्व्वशब्दस्यानुवर्त्तनात्। अथवा "हलः" (६।४।२) इति सूत्रे हल उत्तरस्य सम्प्रसारणस्य दीर्घत्वानुशासनात् तज्ज्ञापकबलान्न दीर्घो भवेत्। पचन्तीत्यत्रापि न दीर्घप्रसङ्गः। यतः "अतो गुणे" (६।१।९७) इत्यत्र "एङि पररूप" (६।१।९४) मित्यतः पररूपमनुवर्त्तते। पर इतीयता सिद्धे सति यत् रूपग्रहणं करोति तस्येदं प्रयोजनं यथाजातीयकं परस्य रूपं तथाजातीयकमुभयोर्भवेत्। भवतु, 'खट्वर्श्यः' 'मालर्श्यः' इत्यत्र दीर्घवचनात् 'अदेङ् गुणः" (१।१।२) इत्यनेन ह्रकारो न स्यात्, अनान्तर्य्यादिकारोकारौ न ततो विगृहीतश्रवणं प्रसज्येत।

यत्र क्रियमाणे न दोषस्तत्रैव भवतु, "वृद्धिरादैच्" (१।१।१) दीर्घः, "अदेङ् गुणो" (१।१।२) दीर्घः। तत्तर्हि दीर्घग्रहणं कर्त्तव्यम्? न कर्त्तव्यम्। गुणवृद्धि-

संज्ञाविधौ तपरनिर्देशात्त्रिमात्रचतुर्मात्रप्रसङ्गनिवृत्तिः स्यात्। ननु त परो यस्मात् स तपरः। तादपि परस्तपरः। यदि तादपि परस्तपरस्तदा "ऋदोरप्" (३।३।५७) इत्यत्र उकारस्य तात्परत्वात् 'यवः' 'स्तवः' इत्यत्र प्रसरः, न तु 'लवः' 'पवः' इत्यत्र। एष न तकारः, किन्तर्हि, तकारवद्दकारोऽसन्देहार्थो मुखसुखार्थो वा।

---

तपरनिर्देशादिति। "वृद्धिरादैच्" (१।१।१) इत्यत्र तपरकरणमैजर्थः, "तादपि परस्तपरः" इति वृत्तिः। अत्र भाष्यस्वरसानुसारिशेखरकारमते तपरकरणमसन्देहार्थम् गुणानामभेदकत्वान्न सवर्णग्राहकतेति। गुणानां भेदकत्वग्रहणे आ इति दीर्घस्यानणत्वे न सवर्णग्रहणप्रसक्तिः। अकारेण गृह्यमाण आकारोऽण् भवतीति चेत्, माला अत्र माला आनीता इत्यत्र एकादेशे दीर्घवचनान्न त्रिमात्रचतुर्मात्राः। सुतराम् आकारं परिहाय ऐजर्थं तपरकरणमिति युक्तम्। आदैजित्यत्रैकत्रासन्देहार्थोऽन्यत्र त्रिमात्रचतुर्मात्राग्रहणार्थ इति कैयटोक्तयुक्त्या उभयतस्तस्य ग्रहणं भवति। गुणसंज्ञायां "तपरकरणं सर्वार्थ"मिति वृत्तिः। अत् इत्यत्र तपरकरणस्य चरितार्थतायामेङि न तस्य प्रसरः। अत्र वदामो दीक्षितेन सह "ऊकालोऽज्" (१।२।२७) सूत्रस्थभाष्यमनुसृत्य "अनुदित्सवर्णस्याप्रत्ययः" (१।१।६९) इत्यत्र "स्वं रूपं शब्दस्याशब्दसंज्ञा"(१।१।६८)यतोऽशब्दसंज्ञेत्यनुवर्त्तते। ततः शब्दसंज्ञाव्यतिरिक्तस्थले सवर्णग्रहणमिति प्राप्ते गुणवृद्धिसंज्ञाविधौ तपरकरणमसन्देहार्थमिति सर्वं सुस्थम्। तादपीति। तादपि परस्तपर इति पञ्चमीसमासः "सह्यिवहोरोदवर्णस्य" (६।३।११२) इति सूत्रज्ञापितत्वात्। यद्यत्र पञ्चमीसमासो न स्यात्, अवर्णस्येति वर्णपदेनाकारस्यापि ग्रहणमापद्येत। तादपि परस्तपर इत्यनेन भवत्वेकवर्द्धेन दीर्घाणां ग्रहणम्। दीर्घाणां ग्रहणेऽपि दीर्घैः पुनः स्वसवर्णानां ग्रहणं भवति। तेन त्रिमात्रादिग्रहणं तदवस्थमेव। कुत एतज्ज्ञायते? "दीर्घाज्जसि च" (६।१।१०५) इति ज्ञापकेन। अनेनैव हि ज्ञापकात् प्रत्याहारैरुपस्थितानां प्रागनुच्चारितानामाकारादीनां सवर्णग्राहकत्वमायाति। कथं कृत्वा ज्ञापकम्? यतः सूत्रे चकारः क्रियते। यद्यत्र चकारो न स्यात्, पूर्व्वसूत्रात् (६।१।१०४) इक्स्थाकारादिचि दीर्घाकारात् जसीति व्यवस्था सम्भाव्यते। केवलमजादिषु प्रत्याहारस्य निरूढ़लक्षणत्वात्, दीर्घस्याच्त्वाभावेऽभीषामित्यादिषु "इण्कोः" (८।३।५७) "आदेश-

प्रत्यययोः" (८।३।५९) इत्यनेन षत्वं, गौरीरित्यादिषु "प्रथमयोः पूर्व्वसवर्णः" (६।१।१०२) इत्यनेन शसि परतः पूर्व्वसवर्णदीर्घो न स्यात् । एवं सवर्णग्रहणानिवृत्तिः गुणवृद्धि-संज्ञायां तपरग्रहणं व्यर्थमिति चेत्, न । यत्किञ्चन संज्ञायां व्यर्थं संज्ञिनि तत् स्वीकर्त्तुं शक्यम् । कुतो वैतज्ज्ञायते ? "ङमो ह्रस्वात्" (८।३।३२) इति सूत्रे "ङमुट्" इति प्रत्याहारे कृतं टित्वं संज्ञायां व्यर्थं सत् संज्ञिभिः सम्बध्यते, तथेहापि । द-कार इति । दकारस्यात्रासन्देहार्थत्वं सुखसुखार्थत्वञ्च निर्द्दिश्य तत्कालनिर्द्देशत्वं हि निवारितम् ; किन्तु "तित् स्वरितम्" (६।१।१८५) इति सूत्रे "तपरस्तत्कालस्येति दकारोऽपि चर्त्वभूतो निर्द्दिश्यते" इति यत् भाष्यकारेणोक्तं तेनास्य विरोधः । एतद्दोष-परिहारार्थं कैयटस्त्वाह "थकारस्थानिको धकारस्थानिको वा दकारः" इति । शेखर-कारोऽप्याह "तपरसूत्रे दकारप्रश्लेषपक्षे तु धकारस्थानिको दकारो बोध्यः ।" दीक्षितेन तु नायं पक्षो बहु मन्यते । तेन हि "प्रत्ययाप्रत्यययोः प्रत्यये संप्रत्यय" इति परि-भाषामाश्रित्य "तित् स्वरित"मित्यत्र प्रत्ययाप्रत्यययोः सन्देहस्थले प्रत्ययग्रहणं सम्भव-तीति कृत्वा "तिति प्रत्ययग्रहण"मिति वार्त्तिकम्, ज्ञापकबलेन भाष्यकारस्य तत्प्रत्या-ख्यानञ्च अभ्युपेत्यवादत्वेन* परिहृतम् । "प्रत्ययाप्रत्यययोः प्रत्यये संप्रत्यय इति परिभाषा भाष्यवार्त्तिककाराभ्यां न क्वचिदाश्रिता" इति कैयटोक्तिः ; "तस्यास्तु परिभाषाया भाष्यवार्त्तिकयोरिह । अदर्शनादयं यत्नो महानस्माभिरादृतः ॥" इति हरदत्तोक्तिश्च ; "अङ्गस्येति (६।४।१) सूत्रप्रत्याख्यानाय भाष्ये कण्ठरवेणैव एतत्परिभाषोपन्यासादि" त्यक्त्वा प्रत्युक्तिः । "अङ्गस्ये"ति सूत्रस्य प्रत्याख्यानं न भाष्यकाराशयः, तत्परिभाषायाः व्यर्थत्वप्रदर्शनमेव, यतस्तदिदं सूत्रं विना "हलः" (६।४।२) इत्यनेन "निरुत" मित्यत्र वेञः सम्प्रसारणस्याङ्गावयवगतहल्निर्द्धारणाभावात् दीर्घत्वं प्रसज्येतेति अभियुक्तस्याशयं स्वयमुन्नीयाह "तथापि थकारधकारस्थानिको दकार इत्यर्थ इति व्याख्यानक्लेशो निष्फलतया मूलस्वरसविरुद्धतया चादरानर्ह एव । 'दिव उदि'त्यादौ 'तित् स्वरित' मित्यस्य प्राप्तेरेव विरहेण दकारप्रश्लेषादेर्निर्बीजत्वा"दिति । उदिति संज्ञया संज्ञिन-उकारस्य संज्ञाव्यतिरिक्तं न किञ्चिदन्यत् फलमस्तीति निर्व्वीजत्वादित्युक्तम् । यदि

* अभ्युपेत्यवादः क्लेशेनाङ्गीकारः ।

# ६। वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते।*।

अत्र विचार्य्यते। यत्र तेषु वर्णेषु वर्णान्तरसमानाकृतयो वर्णैकदेशाः, किमेतेषां ग्रहणेन तेषां ग्रहणं भवति न वा। यतोऽत्र समुदाया अप्युपदिश्यन्तेऽवयवा अपि। यदि समुदाया गृह्यन्ते तदवयवानां तदन्तर्वर्त्तित्वान्न कार्य्यस्वातन्त्र्यम्। यतो वृक्षः प्रचलन् तदवयवैः प्रचलति। समुदायस्यस्यावयवस्यावयवरूपेण स्वतन्त्रग्रहणं स्यान्न वेति विचारणा। यदि स्यात्।

---

स्यात् "अतो भिसैस्" (७।१।९) इत्यत्र अदिति दृष्टा तान्त एव गृह्येत न लकारान्तः। एवं "तपरस्तत्कालस्ये"ति सूत्रमपि व्यर्थं भवेत्। दीक्षितप्रदत्ताभिरित्याद्याभिर्युक्तिभिर्यद्यपि दकारस्य धकारनिर्द्देशो न प्रयोजनत्वेन परिलक्ष्यते तथापि भाष्यद्वयस्य विरोधपरिहाराय प्राचो यत्नं कृतवन्त इति तेषां भाष्याधीनत्वं दीक्षितस्य तु स्वातन्त्र्यमिति महदेव कुतूहलमुद्भावयति। वस्तुतस्तु "दकारप्रश्लेषपक्षे तु धकारस्थानिको दकार" इति शेखरकारोक्तिरेवादरणीया, यतः प्रयोजनमनुसृत्य पक्षान्तरग्रहणं सर्व्वत्रैव मुनिलिखितेषु परिलक्ष्यते। "अङ्गस्ये"ति सूत्रे "अर्थवद्ग्रहणे नानर्थकस्य" "प्रत्ययाप्रत्यययोः प्रत्ययस्य ग्रहण"मिति परिभाषाद्वयमुपलक्ष्य वर्णग्रहणेषु परिभाषाद्वयस्यानुपस्थानत्वं कैयटेनोक्तम्। यत्र वर्णग्रहणं नास्ति तत्रेयमुपस्थीयत इति तदुक्तेरर्थमुन्नीय परिभाषेन्दुशेखरकारेण प्रत्ययग्रहणपरिभाषा एवं समर्थिता, "अतएव 'सनाशंसभिक्ष उः' (३।२।१६८) 'वले' (६।३।११८) इत्यत्र सन्वलयोः प्रत्यययोर्ग्रहणम्"। "सनाशंसभिक्षउ"रित्यत्र सना न सनिधातोः किन्तु सन्प्रत्ययस्य "वले" इति सूत्रे वलप्रत्ययस्य च ग्रहणं भवति। अनभिधानं पक्षान्तरे व्याप्तिन्यायं समाश्रित्य वृत्तिकारेण सना धातोरग्रहणं साधितम्। "वले" इत्यत्र "पृषोदरादीनि यथोपदिष्टम्" (६।३।१०९) इत्यतो "यथोपदिष्ट"मनुवर्त्त्य प्रत्ययग्रहणं शब्देन्दुशेखरकारेण समर्थितम्। एवं दीक्षितेनादृता परिभाषा वार्त्तिककैयटाद्यनुरोधिनोपेक्षितापि नास्माभिरुपेक्ष्यतेऽनया प्रतीतिसौलभ्यात्।

वर्णान्तरसमानाकृतय इति। अयं विभागो सूत्रकारेण वार्त्तिककारेण च स्वीकृतः। यतः "तस्यादित उदात्तमर्द्धह्रस्वम्" (१।२।३२) इति सूत्रे उदात्तानुदात्तस्वरसमाहारस्य स्वरितस्य कस्मिन्नंशे उदात्तः कस्मिन्नंशेऽनुदात्त इति प्रदर्शनाय वदति तस्य आदौ अर्द्धह्रस्व-

## ७। वर्णैकदेशा वर्णग्रहणेन चेत् सन्ध्यक्षरे समानाक्षरविधिप्रतिषेधः।

यदि वर्णग्रहणेन वर्णैकदेशा गृह्यन्ते तदा सन्ध्यक्षरे समानाक्षराश्रयो यो विधिः प्राप्नोति स प्रतिषेध्यः। यथा अग्ने + इन्द्र, वायो + उदकमित्यत्र "अकः सवर्णे दीर्घः" (६।१।१००) इति यद्दीर्घत्वं प्राप्नोति तन्निषेध्यम्।

---

मुदात्तं शिष्टार्द्धमनुदात्तम्। "एचोश्चोत्तरभूयस्त्वा"दिति वार्त्तिकेन तादृगंशकरणं लक्ष्यते। एवमंशग्रहणं सिद्धम्। दृश्यन्ते च आकारेऽकारस्य ईकार इकारस्य ऊकार उकारस्य सदृशो भागौ। ऋकारलृकारयोः सदृशौ रेफलकारभागौ तद्यथा ऋकारे उभयतोऽज्भक्तिरर्द्धमात्रा मध्ये रेफसदृशोऽर्द्धमात्रा, एवम् लृकार उभयतोऽज्भक्तिः मध्ये लृकारसदृशो भागः। एचु पूर्व्वभागोऽकारस्योत्तरभाग इवर्णोवर्णयोः। एवं स्थिते अग्ने + इन्द्र इत्यादौ अवयवकार्य्यं प्राप्नोति समुदायकार्य्यञ्च। तत्रावयवकार्य्यं ह्यन्तरङ्गम्, अवयवागमपूर्व्वकः समुदायावगमोऽतः समुदायकार्य्यं वहिरङ्गम्। अन्तरङ्गत्वात् साक्षाच्चोदितत्वात् प्रत्यक्षत्वात् परत्वाच्चात्रावयवकार्य्यप्रसङ्गः। सुतरां दधीन्द्रवत् अग्ने + इन्द्र इत्यत्र सवर्णदीर्घत्वम्। अयादीनामवकाशस्तु अग्न आयाहीत्यत्र। न खल्वत्रावयवस्य यणादेशः प्राप्नोति। "येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवती"ति अथवा "मध्येऽपवादाः पूर्व्वान् विधीन् बाधन्ते नोत्तरानि"ति न्यायेन यणो बाधका ह्ययादयः। समुदायस्यावयवे सिद्धे विचारणा किमवयवानां समुदायेन स्वातन्त्र्यग्रहणेन कार्य्यं स्यादथवा पुनरस्वातन्त्र्यस्वीकारेण। स्वातन्त्र्यग्रहणे तु अवयवानामसदृशत्वात् वर्णग्रहणेन विधीयमानं कार्य्यं न तत्तदवयवेषु प्रवर्त्तते। एतदेव प्रपञ्चयन्नस्वातन्त्र्यग्रहणमेव सिद्धान्तपक्षे स्थापयिष्यति।

समानाक्षराश्रयविधिरिति। "दश समाना" इति पूर्व्वाचार्य्यनिर्द्दिष्टाका संज्ञा समानेति। समानाक्षराश्रयविधिरगाश्रयविधिर्दीर्घत्वमिति।

# ८। दीर्घे ह्रस्वविधिप्रतिषेधः।

दीर्घे ह्रस्वाश्रयो विधिः प्राप्नोति स प्रतिषेध्यः। यथा आलूय प्रलूयेत्यत्र "ह्रस्वस्य पिति कृति तुक्" (६।१।७१) इति तुक् प्राप्नोति स निषेध्यः। नैष दोषः। "दीर्घात्" (६।१।७५) छे तुक् भवतीत्यनुशासनात् ज्ञापितं दीर्घे न ह्रस्वाश्रयो विधिर्भवति। यदि स्याद्दीर्घादिति सूत्रकरणं विफलं भवेत्। न विफलम्, अस्त्यन्यत् प्रयोजनम्। किम्? "पदान्ताद्वा" (६।१।७६) इति विभाषानुशासनम्। यदि केवलं विभाषानुशासनं प्रयोजनं स्यात्, दीर्घात् पदान्ताद्वेति ब्रूयात् न पुनर्योगविभागं कुर्यात्। इह तर्हि, मालाभिः खट्वाभिरित्यत्र "अतो भिस ऐस्" (७।१।९) इत्यैस्भावः प्राप्नोति। तपरकरणसामर्थ्यान्न भविष्यति। तर्हि याता वात्येत्यत्र "अतो लोपः" (६।४।४८) आर्द्धधातुके इत्याकारलोपः स्यात्। इहापि तपरकरणसामर्थ्यान्न भविष्यति। तपरकरणेऽन्यत् प्रयोजनमस्ति। किम्? आकारस्य अकाररूपिभागद्वयस्य लोपो मा भूदिति। तपरे कृते परस्य लोपे कथं पूर्व्वस्य लोपो न भविष्यति? परलोपस्य स्थानिवद्भावात् "असिद्धवदत्राभात्" ((६।४।२२) इत्यनेनासिद्धत्वाच्च। एवं तर्हि "आतोऽनुपसर्गे कः" (३।२।३) इति ककारानुबन्धकरणं ज्ञापकमाकारस्थस्याकारस्य लोपो न भवतीत्यस्य। कथं कृत्वा ज्ञापकम्? आकारस्थस्याऽकारस्य लोपे कृते शिष्टाऽकार-प्रत्ययाकारयोः पररूपे कृते गोदः कम्बलद इति रूपं सिद्धं भवति सुतरां कित्करणमनर्थकं स्यात्। स्थानिवद्भावादसिद्धत्वाच्च न भवत्याकारस्य लोप इति पश्यन्नाचार्यः ककारमनुबन्धं करोति। नैतदस्ति ज्ञापकम् "तुन्दशोकपरिमृजापनुदोः" (३।२।५) इत्युत्तरार्थमेतत् स्यात्। यत्तर्हि "गापोष्टक्" (३।२।८) इति ककारानुबन्धकरणं तदनन्यार्थम्।

---

आकारस्येति। "सर्व्वस्य लोपो मा भूदि"ति भाष्यग्रन्थस्यार्थत आह आकारस्याकाररूपिभागद्वयस्येत्यादि। यत्तर्हीति। कित्करणस्य त्वाकारलोपज्ञापकत्वाभावे छन्दोगाय इत्यत्राकारस्थस्याकारस्य लोपे शिष्टाकारप्रत्ययाकारयोः सिद्धस्य पररूपस्य धातुं प्रति अन्तवद्भावात्, तस्य च स्थानिवद्भावादसिद्धत्वाच्च पुनराकारत्वेनावस्थितेः

## ९। एकवर्णवच्च।

एकवर्णवच्च दीर्घो भवतीति वक्तव्यम्। किं प्रयोजनम्? वाचा तरतीत्यत्र "नौद्व्यचष्ठन्" (४।४।७) इत्यनेन द्व्यच्लक्षणष्ठन् मा भूत्. वाचा निमित्तमित्यत्र "गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत् (५।१।३९) तस्य निमित्तं संयोगोत्पाताविव्यनेन द्व्यच्लक्षणो यन्मा भूत्। अत्रापि गोनौग्रहणं ज्ञापकं दीर्घाद्द्व्यच्लक्षणो विधिर्न भवतीति।

अयन्तु सर्व्वेषामेव परिहारः।

---

"आतो धातोः" (६।४।१४०) इत्यनेन आकारान्तस्य* धातोर्भस्य लोपे छन्दोगे इति रूपं भवति न तु छन्दोगायेति। अत्रोच्यते। छन्दोगायेत्यत्र तु अकारमाश्रित्य "ङेर्यः" (७।१।१३) इत्यनेन यशब्दः कृतः "सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्ये"त्यनया परिभाषया"आतो लोप"इत्यनेन नाकारस्य लोपो भविष्यति। सन्निपातः द्वयोः सम्बन्धः, तन्निमित्तो विधिः सन्निपातलक्षणो विधिः, तद्विघातस्य सन्निपातविघातस्य अनिमित्तम् हेतुर्न भवति। अकारान्तत्वादेव यकारोत्पत्तिः, सुतराम् अकारयकारयोरत्र सम्बन्धः। तस्यैवाकारस्य त्वाकारत्वेन लोपे सन्निपातव्याघातो भविष्यत्यतस्तन्न भवति। "ङेर्य" इत्यत्र "कष्टाय क्रमणे" (३।४।१४) इति निर्द्देशात् सन्निपातपरिभाषाया अनित्यत्वमङ्गीकृत्य "सुपि च" (७।३।१०२) इत्यनेन ङेस्थानिकेन यकारेण यादित्वाद्दीर्घत्वम्। अत्र तु कष्टायेत्यस्य निपातनत्वमाश्रित्य।

वाचेति। अत्र वाक्शब्दस्याऽऽकारस्यावयवग्रहणे सति द्व्यच्त्वप्रसङ्गः। द्व्यच्त्वप्रसङ्गे तु ठन्यतौ प्राप्नुतः। तन्मा भूदिति प्रयोजनं दीर्घस्यैकवर्णत्वातिदेशनम्। गोनौग्रहणं ज्ञापकमिति। यद्यत्र भागग्रहणप्रयुक्तं कार्य्यं स्यात्, न तदा गोनौग्रहणं कुर्य्यात्, यतः सूत्रस्थद्व्यच्शब्देनैव तयोर्ग्रहणं सिद्धम्। अतएव अग्रे एहीत्यत्र "एङः

---

* "आदेच उपदेशेऽशिति" (६।१।४५) इत्यनेनात्वं प्रागेव प्रत्ययोत्पत्तेर्भवतीति सुग्लः सुम्ल इति "आतश्चोपसर्ग" इति कप्रत्ययः। सुतरां गैधातोरप्याकारान्तत्वेन ग्रहणम्।

## १०। नाव्यपवृक्तस्यावयवस्य तद्विधिर्यथा द्रव्येषु।

अव्यपवृक्तस्याभिन्नबुद्धिविषयस्य न ह्यवयवाश्रयी विधिर्भवति यथा द्रव्येषु। तद्यथा द्रव्येषु "सप्तदश सामिधेन्यो भवन्ती"त्यत्र न सप्तदशारत्निप्रमाणं काष्ठमग्नावभ्याधीयते। विषम उपन्यासः। प्रत्यृचं काष्ठखण्डान्यग्नावाधीयन्ते। अर्द्धचतुर्हस्ता हि वेदी। न तत्र सप्तदशारत्निप्रमाणस्य काष्ठस्याग्नावाधानं सम्भवति। यथा तर्हि, "सप्तदश प्रादेशमात्री-राश्वत्थीः समिधोऽभ्यादधीते"ति न खलु सप्तदशप्रादेशप्रमाणं काष्ठमग्नावभ्याधीयते। अत्रापि प्रतिप्रणवं काष्ठान्यग्नावाधीयन्ते, पूर्व्ववद्वेद्यामग्नौ चासम्भवः। यथा तर्हि तैलं न विक्रेतव्यं मांसं न विक्रेतव्यमिति निषेधात् गोः सर्षपाद्वाऽपवृक्तं न विक्रीयते, अव्यपवृक्तं

---

पदान्तादति" (६।१।१०९) एकारभागस्याकारस्य ग्रहणेन पूर्व्वरूपमेकादेशः, अग्ने + इन्द्र वायो + उदकमित्यत्र सवर्णदीर्घो न भवति।

अव्यपवृक्तस्येति। व्यपवृक्तं व्यपवर्गो भेदः। अव्यपवृक्तमभिन्नबुद्धिविषयम्। अव्य-पवृक्तस्यावयवस्येत्यत्र व्यधिकरणे षष्ठी। अव्यपवृक्तस्य अभिन्नाकारेण गृहीतस्य समु-दायस्य योऽवयवस्तस्य अवयवाश्रयी विधिः पृथग्वर्णाश्रयं कार्य्यं न भवति यथा द्रव्येषु। भिन्नेषु द्रव्येषु भिन्ना तथा ह्यभिन्नेष्वभिन्ना बुद्धिरुपस्थिता तया कार्य्यं भवति न तु सम्भव-मात्रेणेति दर्शयितुमाह तद्यथा द्रव्येष्वित्यादि। सामिधेनीशब्द ऋचां वाचक उपचारात् काष्ठेषु वर्त्तते। सप्तदश सामिधेन्य इत्यत्र भिन्नानि भिन्नानि काष्ठखण्डान्यगृहीत्वा न कोऽपि सप्तदशारत्निप्रमाणं काष्ठखण्डं गृह्णाति। अत्र प्रतिवादी ग्रहणासम्भवं प्रदर्श्य, परिहरति प्रत्यृचमिति। एवं द्वितीयदृष्टान्तेऽपि। तैलं न विक्रेतव्यम् मांसं न विक्रेतव्यमिति। अत्र निषेधो गोः सर्षपाद्भिन्ने तैले मांसे पर्य्यवस्यति न त्वभिन्ने सर्षपे गवि च। सुतरां सिद्ध्यति भिन्ने भिन्नोऽभिन्नेऽभिन्नो विधिः। एवं लोमनख-

गावः सर्पपाश्च विक्रीयन्ते । तथा लोमनखं स्पृष्ट्वा शौचं कर्त्तव्यमिति विधानात् देहादपवृत्तं लोमनखं स्पृष्ट्वा शौचं कर्त्तव्यम्, देहादव्यपवृत्ते तु कामचारः ।

यत्र तर्हि व्यपवर्गोऽस्ति । क्व चास्ति व्यपवर्गः ? सन्ध्यक्षरेषु ।

## ११ । सन्ध्यक्षरेषु विवृतत्वात् ।

सन्ध्यक्षरेषु यदवर्णमस्ति तदन्यस्मादवर्णाद्विवृततरम्, ये इवर्णोवर्णे ते अन्याभ्यामिवर्णोवर्णाभ्यां विवृततरे । सुतरामसावर्ण्यादेवावयवाग्रहणम् । अथवा पुनर्नरसिंहवज्जात्यन्तरत्वान्न पृथक् गृह्यन्ते ।

## १२ । अग्रहणं चेन्नुड्विधिलादेशविनामेषु ऋकारग्रहणं कर्त्तव्यम् ।

---

दृष्टान्तेऽपि बोध्यम् । अभिन्नतया परिगृहीता वर्णा न भिन्नत्वेन परिगृहीता भवन्तीति दृष्टान्ततो विनिगमः ।

यत्र तर्हीति । सन्धीयमानावयवत्वात् सन्ध्यक्षरेषु व्यपवर्गो भागोऽस्ति । तत्र का गतिः ? सन्ध्यक्षरेषु विवृतत्वादिति । नर+एतीत्यत्र एकारस्थाकारो विवृततरः, अतः विवृतेन पूर्व्वस्थेनाकारेणासावर्ण्यात्; नरे+इहीत्यत्र एकारस्थेकारो विवृततरः, अतः परस्थेन विवृतेनेकारेणासावर्ण्यादवयवग्रहणासम्भवे न दीर्घत्वम् । एवमाकारादिषु अवयवस्य भेदेनाग्रहणात् अग्रहणम् सन्ध्यक्षरस्थस्यावयवस्य त्वसावर्ण्यात् । अथवेति । नरसिंहयोः सम्मेलनेन नरसिंह इत्येका जातिः । न हि तत्र पृथक्त्वेन नरो वा सिंहो वा परिगृह्यते । तथा सन्धीयमाना अपि सन्ध्यक्षरा जात्यन्तराक्रान्तत्वादभिन्नत्वेनैव परिगृहीता भवन्ति ।

(१) नुड्विधौ तावत् । वर्णैकदेशेन वर्णग्रहणात् "तस्मान्नुड् द्विहलः" (७।४।७१) इत्यत्र हल्ग्रहणेन ऋकारैकदेशस्य रेफस्य ग्रहणाद्यदृकारग्रहणं स्यात्तदत्र न भवति, तस्मादिह सूत्रे आनृधतुरानृधुरिति सिद्धये ऋकारे चेति वक्तव्यं भवति । यदि ऋकारैकदेशरेफग्रहणं स्यात् द्विहल इत्यनेनैव ऋकारस्यापि ग्रहणं सिद्धं भवेत् । अग्रहणेऽपि न दोषः । कथम् ? "तस्मान्नुड् द्विहल" इत्यतो द्विहल्ग्रहणमपनीय "तस्मान्नुड्" इत्येव सूत्रं कर्त्तव्यम् । एवं सति "अत आदेः" (७।४।७०) इत्यनेन सिद्धम् आटतुः आटुरित्यत्रापि नुट् प्राप्नोति । न भविष्यति, "अश्नोतेश्च" (७।४।७२) इत्यस्य नियमार्थत्वात् । अकारोपधस्य यदि भवति, अश्नोतेरेव, न तु अटत्यादेरिति नियमेन सामान्याकारोपधानामन्येषां निवृत्तिर्भवति ।

(२) लादेशे तावत् । वर्णैकदेशेन वर्णग्रहणात् क्लृप्तः क्लृप्तवान् इत्यस्य सिद्धये "कृपो रो लः" (८।२।१८) इत्यत्र ऋकारस्य चेति वक्तव्यं भवति । वर्णैकदेशेन वर्णग्रहणे तु र इत्यनेनैव सिद्धं स्यात् । अग्रहणेऽपि न दोषः । कथम् ? "कृपोरोलः" इत्यत्र अविभक्तिको निर्देशः कृप उः रः लः कृपो रो ल इति । अथवा उभयतः स्फोटमात्रं निर्दिश्यते, रश्रुतेर्लश्रुतिर्भवतीति ।

(३) विनामे तावत् । मातॄणां पितॄणामित्यादिसिद्धये "रषाभ्यां नो णः समानपदे" (८।४।१) इत्यत्र ऋकाराच्चेति वक्तव्यम् भवति । ग्रहणपक्षे "रषाभ्या"मित्येव सिद्धम् ।"न सिद्ध्यति रेफात् परा याज्भक्तिः तया व्यवहितत्वात् । "अड्व्यवाय" (८।४।२)

---

अश्नोतेरिति । अत्र अश्नोतिग्रहणं न नियमार्थं किन्तर्हि श्नाग्रहणनिवृत्त्यर्थं चेत् तदा अश्नोतिरित्यपठित्वा नाश्न इत्येव ब्रूयात् ।

अथवेति । "कृपो रो ल" इत्यत्र रश्रुतिसामान्यात् यश्च केवलो रेफः यश्च ऋकारस्थो रेफः उभयोर्ग्रहणं भवति । एवं लश्रुतिसामान्यात् यश्च केवलो रेफस्थले लकारादेशो यश्च ऋकारैकदेशविकारद्वारेण लृकारः उभयोर्ग्रहणं भवति । ततो हि "लुटि च क्लृपः" (१।३।९३) । "तासि च क्लृपः" (७।२।६०) इत्यादयो निर्देशा उपपद्यन्ते ।

अड्व्यवाय इति । ह्रस्वेन ऋकारेण यथा दीर्घो गृह्यते तथा ऋकारभागोऽपि ।

इत्येव सिद्धम् । न सिद्ध्यति । कथम् ? ये व्यपवृक्ता अपि वर्णा भवन्ति, वर्णग्रहणेन त एव वर्णैकदेशा गृह्यन्ते । रेफात् परो योऽच्भागः, न स दृश्यते क्वचिदपवृक्तत्वेन । एवं तर्हि व्यवायेऽपीति (८।४।२) योगं विभज्य व्यवाये च रषाभ्यां नो णो भवतीति । ततः अट्कुप्वाङ्नुम्भि (८।४।२) रिति तु—एतैरेवाचरसमाम्नायिकैर्भवति नान्यैरिति —नियमार्थं । अग्रहणपक्षेऽपि न दोषः यतः क्षुभ्नादिषु (८।४।३९) नृनमनशब्दपाठो ज्ञापयति ऋकारान्नो णो भवतीति । नैतज्ज्ञापकम्, नार्नमनिरिति वृद्ध्यर्थमेतत् स्यात् । नृणोतीति शब्दपाठात् तदा सिद्ध्यति । अन्तरङ्गं हि णत्वं वृद्धेर्बहिरङ्गत्वात् नृनमनशब्द-पाठेऽपि सिद्ध्यति । अथवा छन्दस्यवग्रहात् (८।४।२६) इत्यतः ऋत इति योगविभागं कृत्वा ऋतो नो णो भवतीति भवति । ततः छन्दस्यवग्रहात् ऋत इत्येव ।

## १३ । प्लुतावैच इदुतौ ।

एच इदुतौ प्लुतौ भवत इति वक्तव्यं भवति । ग्रहणपक्षे गुरोष्टेरित्येव प्लुतिः सिद्धा । अग्रहणपक्षेऽपि "प्लुतावैच इदुतौ" (८।२।१०६) इति सूत्रकरणान्न दोषः ।

## १४ । तुल्यरूपसंयोगे द्विव्यञ्जनविधिः ।

तुल्यरूपे संयोगे द्विव्यञ्जनाश्रयो विधिर्न सिद्ध्यति । कुक्कुटः पिप्पली पित्तमिति ।

---

न सिद्ध्यति कथमिति । भागस्य स्फुटप्रतिभासाभावादव्यपवृक्तत्वम् ।

एतैरेवेति । अड़ादिषु ये अचरसमाम्नायिका दृश्यन्ते तैरेव व्यवधानेन णत्वं भव-तीति नियमात् क्लृप्तिमित्यत्र न णत्वप्राप्तिः । आकारादयोऽचरसमाम्नायिका यतोऽका-रादिभिस्ते प्रत्यायिताः, भक्तिस्तु न तथाचरसमाम्नायिका नापि सवर्णग्रहणेन प्रत्यायिता ।

गुरोष्टेरिति । ऐकारो गुरुस्तस्य टेरिति सिद्धम् ।

प्लुताविति । एचो व्यपवृक्तत्वेऽपि भागयोर्विवृततरत्वात् प्रयत्नभेदादचरसमाम्नायिके-कारौकाराभ्यां ग्रहणं न सिद्ध्यति, अग्रहणात्त्वच्त्वाभावः, सुतरां प्लुत्वं वक्तव्यं भवति ।

तुल्यरूप इति । अवयवस्य तुल्यरूपत्वात् संयोगोऽपि तुल्यरूपः ।

मात्राकालावगमात् ग्रहणपक्षेऽग्रहणपक्षेऽपि द्वौ ककारौ द्वौ पकारौ द्वौ तकारौ । मात्रिकं व्यञ्जनं नास्ति । अनुपदिष्टत्वान्न शक्यं विज्ञातुं प्रतिपत्तुम् । भवतु तावदण्-स्वनुपदिष्टत्वादत्र द्विव्यञ्जनविधेरसिद्धिः यत्राण्सूपदेशोऽप्यस्ति तत्रापि व्यञ्जनस्य मात्रिकत्वाभावात् संयोगसंज्ञा न भवति, यथा सँय्यन्ता सँव्वत्सरः यँल्लोकम् ।

---

## हयवरट् । ५ ।

म० भा० । हयवर इत्येतान् वर्णानुपदिश्य पूर्वांश्चान्ते टकारमितं करोति प्रत्याहारार्थम् । तस्य ग्रहणं भवत्येकेन "शश्छोऽटि" (८।४।६३) इत्यकारेण । अयं रेफो यकारात् पर उपदिश्यते । तस्य यग्रहणेन यय्ग्रहणेन च ग्रहणे सति 'स्वर्नयति' 'प्रातर्नयती'त्यत्र "यरोऽनुनासिकेऽनुनासिको वा" (८।४।४५) इति अनुनासिकः प्राप्नोति । 'मद्रह्रदो' 'भद्रह्रदः' इतयत्र द्विर्वचनं प्राप्नोति "अचो रहाभ्यां द्वे" (८।४।४६) इति । 'कुण्डं रथेन' 'वनं रथेन' इत्यत्र "अनुस्वारस्य ययि परसवर्णः" (८।४।५८) इति परसवर्णः प्राप्नोति । नैष दोषः । आकृतौ पदार्थे समुदाये सकृल्लक्ष्ये लक्षणं प्रवर्त्तत इतेऽतस्मिन् दर्शने "यरोऽनुनासिकेऽनुनासिको वा" (८।४।४५)ऽन्तरतमो भवतीत्येवमेतत् प्रवर्त्तते । तदनेन गकारादीनामुकारादयो ये यथा स्वस्थानतो गुणतश्चान्तरतमास्ते सर्व्वे विहिताः । ये तु न

---

अनुपदिष्टत्वादिति । अक्षरसमाम्नायिकेऽपठितत्वं ग्राहकशास्त्रेणागृहीतत्वमनुपदिष्टत्वम् । नात्रिकत्वाभावादिति । व्यञ्जनस्यार्द्धमात्रिकमिति पक्षे आशूच्चारणत्वादेकत्वभ्रान्तिरिति प्रक्रियादशायां स्वीकार्य्यं शिष्टाचारात् ।

स्थानतः नापि गुणतः स्थानमात्रेण गुणमात्रेण वा अन्तरतमास्ते सर्व्वे निवर्त्तिता इति स्थानमात्रान्तरतमो रेफस्य णकारो न भवति। द्विर्व्वचनेऽपि रेफस्य यरन्तर्भावे सति यत् कार्य्यत्वं प्राप्तं तत्सात्त्वाच्छिष्टेन निमित्तभावेन वाध्यत इति न द्विरुच्यते रेफः। "अनुस्वारस्य ययि परसवर्णः" (८।४।५८) इतिग्रतदप्यनुस्वारान्तरतमं सकृदेव परसवर्णं विदधाति। न च रेफस्यानुस्वारान्तरतमः सवर्णोऽस्तीति न भविष्यति 'कुण्डं रथेन' 'वनं रथेन' इत्यत्र।

अटां मध्ये विसर्जनीयजिह्वामूलीयोपाध्मानीयानामप्युपदेशः कर्त्तव्यः। किं प्रयोजनम्? उर≍केण, उरःकेण; उर≍पेण, उरःपेण। अड्व्यवाय (८।४।२) इति णत्वं यथा स्यादिति।

भा. स.। सर्व्वे वर्णाः सकृदुपदिष्टाः, हकारोऽयं पूर्व्वश्च परश्चेति द्विरुपदिश्यते। यदि परत्रोपदिशेत्;

## १। हकारस्य परोपदेशेऽड्ग्रहणेषु हग्रहणम्।

हकारस्य परत्रोपदेशे अड्ग्रहणेषु हग्रहणं कर्तव्यम्। 'महान् हि सः' इत्यत्र 'महाँ हि स' इति सिद्धये "दीर्घादटि समानपदे" (८।३।९) "आतो टि" (८।३।२) इकारे चेति वक्तव्यं भवति, अन्यथा पूर्व्वसूत्रेण रुः परसूत्रेणानुनासिको न प्राप्नोति।

## २। उत्वे च।

उत्वे च हग्रहणं कर्त्तव्यम् । 'ब्राह्मणः हसति' इत्यत्र 'ब्राह्मणो हसती'त्युत्वसिद्धये "अतो रोरप्लुतादप्लुते" (६।१।११३) "हशि च" (६।१।११४) हकारे चेति वक्तव्यं भवति, अन्यथा हशि उत्वं न स्यात् ।

अस्तु तर्हि पूर्वोपदेशः ।

## ३। पूर्वोपदेशे किञ्च-क्से-इड्विधयो झल्-ग्रहणानि च ।

यदि पूर्व्वोपदेशः (१) "रलो व्युपधाद्धलादेः" (१।२।२६) इत्यनेन 'स्निहित्वा' 'स्नेहित्वा' 'स्निहिषति' 'स्नेहिषती'ति वा कित्त्वं न प्राप्नोति, सुतरां कित्त्वं विधेयं भवति ; (२) "शल इगुपधादनिटः क्सः" (३।१।४५) इत्यनेन 'अघुक्षत्' 'अलिक्षत्' इत्यत्र क्सो न प्राप्नोति, सुतरां क्सोऽत्र विधेयो भवति ; (३) "रुदादिभ्यः सार्व्वधातुके" (७।२।७६) इत्यनेन 'रुदिहि' 'स्वपिहि' इति वलादेः सार्व्वधातुकस्य इड्न प्राप्नोति, सुतरां इड्विधेयो भवति ; (४) 'अदाग्धाम्' 'अदाग्धम्' इत्यत्र "दादेर्धातोर्घः" (८।२।३२) इत्यनेन प्राप्तस्य घत्वस्यासिद्धत्वेऽपि हकारस्य झल्त्वात् "झलो झलि"(८।२।२६) इत्यनेन सलोपः स्यात्, हकारस्य केवलं पूर्व्वोपदेशे तन्न प्राप्नोति । तस्मात् हकारः पूर्व्वश्चैवोपदेष्टव्यः परश्च । यतः प्रयोजनानुसार्य्येव वर्णानामुपदेशः ।

इदं तावत् विचार्य्यम् । रेफोऽत्र ह य व र ट् इत्येवमुपदिश्य परत्रोपदिष्टः । ह र य व ट् इत्येवं कृत्वा पूर्व्व एवोपदिश्येत पर एव वा यथान्यासम् । कश्चात्र विशेषः ।

---

उत्वे चेति । इह अशि हग्रहणं कर्त्तव्यमित्यपि वक्तव्यं भवति । भो हसति इत्यत्र "भोभगोअघोअपूर्व्वस्य योऽशि" (८।३।१७) इत्यनेन रोर्यत्वार्थम् "हलि सर्व्वेषाम्" (८।३।२२) इत्यनेन यत्वलोपार्थम् इहानुवर्त्तमानेऽशि पूर्व्वे एव हकारग्रहणं कर्त्तव्यम् । एवञ्च इणि च हग्रहणं वक्तव्यं भवति, तद्यथा लिलिहिढ्वे लिलिहिध्वे' इत्यत्र मूर्द्धन्य-विकल्पसिद्धये "इणः षीध्वंलुङ्लिटां धोऽङ्गात्" (८।३।७८) इत्यतो "विभाषेटः" (८।३।७९) इत्यत्र यत् इणनुवर्त्तते तत्र हकारग्रहणं कर्त्तव्यम् ।

विचार्य्यमिति । उभयत्रोपदेशे दोषा अपि सन्ति प्रयोजनान्यपि, अतो वदन्ति विचार्य्यमिति ।

## ४। रेफस्य [परोपदेशे]ऽनुनासिकद्विर्वचन-परसवर्णप्रतिषेधः । * ।

रेफस्य परोपदेशे अनुनासिकद्विर्वचनपरसवर्णानां प्रतिषेधो वक्तव्यः ।

(१) अनुनासिकस्य यथा 'स्वर्नयति' प्रातर्नयती'त्यत्र "यरोऽनुनासिकेऽनुनासिको वा" (८।४।४५) इत्यनेन रेफस्यानुनासिकत्वे णकारत्वं भवति तत् प्रतिषेध्यम् ।

(२) द्विर्वचनस्य यथा 'मद्रह्रदः' "भद्रह्रदः" इत्यत्र "अचो रहाभ्यां द्वे" (८।४।४६) यर इति द्विर्वचनं प्राप्नोति तत्प्रतिषेध्यम् ।

---

णकारत्वमिति । स्थानेऽन्तरतमत्वात् णकारप्राप्तिः । वक्ष्यति णकारो हि रेफस्य स्थानमात्रेणान्तरतमः, न तु स्थानतो गुणतश्च । अतएव रेफस्य स्थाने णकारो न भविष्यतीति ।

द्विर्वचनमिति । अचः परात् हकारात् परो रेफः यरन्तर्भावात् द्विरुच्यते, तस्य "रो रि" (८।३।१४) इत्यनेन प्राप्तं लोपं प्रति द्वित्वस्यासिद्धत्वात् लोपो न स्यात्, "हलो यमां यमि लोपः" (८।४।६४) इत्यनेन लोपस्य पाक्षिकत्वात् पक्षे रेफद्वयस्य श्रवणप्रसङ्गः । वक्ष्यतेऽत्र "रहाभ्या"मित्यनेन रकारस्य निमित्तत्वं तदस्य कार्य्यत्वं निवारयिष्यतीति दोषापनय इति। एवं सति दध्युदकमित्यादौ "यणो मयो द्वे भवतः" इत्यनेन 'दध्य्युदक'मिति न प्राप्नोति । कथम् ? दध्युदकमित्यत्र पूर्व्वं "यणो मय" इत्यस्य 'यण' इति पञ्चमीं कृत्वा 'दद्ध्युदक'मिति धकारस्य द्वित्वं कृतम् । ततः यण इत्यस्य निमित्तत्वात् 'दध्य्युदक'मित्यत्र तस्य कार्य्यित्वं न प्राप्नोति । इकां स्थाने जातानां यकारादीनां न निमित्तत्वं ; निमित्तत्वन्तु स्थानिनामिकामेव । प्रतिलक्ष्यं निमित्तकार्य्यित्वयोर्भिन्नभावेन ग्रहणं भवति, यथा 'चिचीषती'ति दीर्घत्वद्विर्वचनयोः, तथाच 'ववृश्चे'त्यत्र "लिट्यभ्यासस्ये"ति (६।१।१७) सम्प्रसारणम् ततो रेफस्य ऋकारत्वे "उरत्" (७।४।६६) इत्यनेन ऋकारस्य अत्वम् । तस्य अचः परस्मिन्निति (१।१।५७) स्थानिवद्भावात् "न सम्प्रसारणे सम्प्रसारणम्" (६।१।३७) इति लिट्यभ्यासस्येत्यनेन वत्वोत्वं न । अत्र लिटो निमित्तत्वं, तथापि प्रतिलक्ष्यं भिन्नत्वेन गृहीत्वैवं सिद्धान्तितम् ।

(३) परसवर्णस्य यथा 'कुण्डं रथेन' 'वनं रथेने'त्यत्र "अनुस्वारस्य ययि परसवर्णः" (८।४।५८) इत्यनेन परसवर्णः प्राप्नोति तत् प्रतिषेध्यम्।

अस्तु तर्हि पूर्व्वोपदेशः।

## ५। पूर्व्वोपदेशे कित्त्वप्रतिषेधो व्यलोपवचनञ्च।

यदि पूर्व्वोपदेशः, (१) कित्त्वं प्रतिषेध्यम्। 'देविला' 'दिदेविषति' इत्यत्र "रलो व्युपधात्" (१।२।२६) इत्यनेन कित्त्वं प्राप्नोति। नैष दोषः। कथम्? रलो व्युपधादित्यत्र रलोऽव् व्युपधादित्येवं विज्ञातव्यं, तेन अवकारान्ताद्व्युपधादित्यदोषः। (२) व्यलोपवचनञ्च यथा 'गौधेरः' 'पचेरन्' 'यजेरन्' 'जीरदानुः' इत्यत्र "लोपो व्योर्वलि"

---

कुण्डं रथेनेति। "वा पदान्तस्य" (८।४।५९) इत्यनेन पक्षे रेफः प्रवर्त्तते। अनुनासिक एव परसवर्णो भवितव्य इति नियमाभावात् रेफः, तस्य चाभिद्धत्वात् "रोरी"-त्यनेन न लोपः। अत्रापि अन्तरतमसवर्णलाभावान्न भविष्यति। वृहद्विवरणकारमते तु "अणोऽप्रगृह्यस्यानुनासिक" (८।४।५७) इत्यतो "अनुस्वारस्य ययि परसवर्णः" (८।४।५८) इत्यत्रानुनासिकानुकर्षणान्न दोषः।

पूर्व्वोपदेश इति। पूर्व्वोपदेशे ह र य व ट् इति स्थिते। "रलो व्युपधा"दित्यत्र वकारान्तेष्वपि कित्त्वप्रवृत्तेः 'देविला' 'दिदेविषती'त्यत्र पक्षे गुणनिषेधः प्राप्नोति, "लोपो व्योर्वली"त्यत्र रेफे परे यवयोर्लोपो न स्यात्। वलीत्यत्र रलीति चेदुच्यते इयगतौ 'इय्या'दित्यत्र यकारेऽतिप्रसङ्गः।

गौधेर इति। "गोधाया ढ्रक्" (४।१।१२९) इत्यनेन गोधाशब्दात् ढ्रक्प्राप्तौ "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" (७।१।२) इत्यनेन ढस्य इयादेशः। ततः ढ्रगित्यत्र इय् + रक् इत्येवं स्थितिः। रकारस्य पूर्व्वोपदेशे वलि तस्याभावात् यकारलोपोऽत्र न प्राप्नोति। एवं 'पचेरन्' 'यजेरन्' इत्यत्र "लिङः सीयुट्" (३।४।१०२) इति सीयुट्। तत्र देशविध्यर्थस्य टकारस्य उच्चारणार्थस्योकारस्य च लोपे 'सीय्' इति स्थिते "लिङः सलोपोऽनन्त्यस्य" (७।२।७९) इत्यनेन सलोपे ईय् इत्यस्य स्थितिः। "झस्य

(६।१।६६) इत्यनेन यवयोर्लोपो न प्राप्नोति। नैष दोषः, व्यंवलीत्यत्र रेफोऽपि निर्द्दिश्यते रेफे च वलि चेति।

अथवा पुनरस्तु परोपदेशः। ननु चोक्तं "रेफस्य परोपदेशेऽनुनासिकद्विर्वचन-परसवर्णप्रतिषेध" इति। न सन्ति रेफोष्मणां सवर्णा इति अनुनासिकस्य परसवर्णस्य च प्रतिषेधो न वक्तव्यः। द्विर्वचनप्रतिषेधोऽपि न कर्त्तव्यः, यतः रहौ न कार्य्यिणौ द्विर्वचनस्य, किन्तु निमित्तम्। तद्यथा "ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परि-वेविषाता"मिति परिवेशनपरायणौ अपरेषां ब्राह्मणानां भोजने निमित्तभूतौ माठर-कौण्डिन्यौ ब्राह्मणावपि नेदानीं तौ भुञ्जाते।

इदं विचार्य्यते। विसर्ज्जनीयजिह्वामूलीयोपध्मानीयानुस्वारयमा अयोगवाहाः। न क्वचिदेते उपदिश्यन्ते अथ च श्रूयन्ते। तेषां कार्य्यार्थं उपदेशः कर्त्तव्यः। कथमिमे अयोगवाहाः? अयुक्ताः वहन्ति, अनुपदिष्टाश्च श्रूयन्ते। क्व पुनरेषामुपदेशः कर्त्तव्यः?

## ६। अयोगवाहानामट्सु णत्वम्।

अयोगवाहानां णत्वार्थम् अट्सु उपदेशः कर्त्तव्यः। तथा सति, 'उरःकेण' 'उर≍केण', 'उरःपेण' 'उर≍पेण' इत्यत्र अड्व्यवाये (८।४।२) इति णत्वं सिद्धं भवति।

---

रन्" (३।४।१०५) इत्यनेन रन् भूत्वा ईय्+रन् इति संस्थाने यकारलोपाप्राप्तिः। 'जीरदानुः' इत्यत्र जीवेरदानुक् इति वकारलोपाप्राप्तिः।

अयुक्ता इति। प्रत्याहारार्थपाठाभावात् अयुक्ताः असम्बद्धाः। प्रत्याहारार्थ-पाठः, ग्रहणकशास्त्रेण च प्रत्यायनमुपदेशः। अयोगवाहानां नास्ति स द्विविधोपदेशः। अनुपदिष्टत्वादेव तेषामयुक्तत्वम्। अविद्यमानो योगः प्रत्याहारेषु सम्बन्धो येषां ते अयोगाः। वाहयन्ति निर्व्वाहयन्ति प्रयोगमिति वाहाः। अयोगाश्च ते वाहाश्चेति कर्म्म-धारयः।

अड्व्यवाय इति। अट्सु अयोगवाहानां ग्रहणे विसर्ज्जनीयजिह्वामूलीयोपध्मा-नीयैर्व्यवहितेऽपि णत्वं सिध्यति।

## ७ । शर्षु [जश्भावषत्वे] । * ।

जश्भावषत्वार्थं तेषां शर्षूपदेशः कर्त्तव्यः । उब्जिधातुरुपाध्मानीयोपधः पठ्यते । तस्य शर्षु पाठे झलत्वं स्यात् । झलत्वे तु "झलां जश् झशि" (८।४।५३) इति जश्त्वे कृते 'उब्जिता' 'उब्जितु'मिति रूपं सिद्ध्येत् । उब्जेरुपाध्मानीयोपधत्वेन पाठे 'उब्जिजिषतीति' पदं न सिद्ध्यति, यत उपाध्मानीयादेरेव द्विर्वचनं प्राप्नोति । उब्जेर्दकारोपधत्वेन पाठे "न न्द्राः संयोगादयः" (६।१।३) इत्यनेन उब्जिजिषतीति पदं सिद्ध्यति ।

यदि दकारोपधः पठ्यते का रूपसिद्धिः ? 'उब्जिता' उब्जितु'मिति ।

## ८ । असिद्धे भ उब्जेः ।

असिद्धप्रकरणे "स्तोः श्चुना श्चुः" (८।४।४०) इति पठित्वा तदनन्तरं "भ उब्जे"रिति पाठः । ततः श्चुना योगे दकारो भकारो भवतीति सूत्रार्थः ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । "भुजन्युब्जौ पाण्युपतापयो"(७।३।६१)रिति दर्शनात् निपातनादेव सिद्धम् । 'अभ्युद्गः' 'समुद्गः' इहापि तर्हि प्राप्नोति ।

---

उपाध्मानीयादेरिति । "अजादेर्द्वितीयस्य" (६।१।२) इत्यनेन प्राप्ते द्विर्वचने "झलां जश् झशी"ति जश्त्वम् असिद्धम् । "पूर्वत्रासिद्धीयमद्विर्वचने" इति सिद्धत्वे हलादिशेषेण (७।४।६०) नकारस्य निवृत्तौ 'उबिजिषती'ति पदं भवति ।

सिद्ध्यतीति । वक्ष्यमाणेन दकारस्य भत्वेनेति शेषः ।

निपातनादिति । "भुजन्युब्जौ पाण्युपतापयो"रिति घञि कुत्वाभावनिपातनार्थे सूत्रे बकारोच्चारणेनानुमीयते उब्जेरकुत्वविषये दकारस्य भकारविषयकं वचनमस्ति । तदनुमीयमानवचननिवेशोऽसिद्धप्रकरणे" स्तोःश्चुनाश्चु"रित्यनन्तरं" 'उब्जेर्भ' इति । एवं सति 'स्तोःश्चुने'ति पदद्वयलाभात् कल्पनागौरवाभावः, 'उब्जिजिषतीति' पदसिद्धिरपि । तत्र "न न्द्राः संयोगादयः" (६।१।३) इत्यनेन द्विर्वचननिषेधः कर्त्तव्यः न तु द्विर्वचनम् । द्विर्वचननिषेधमात्रपर्य्यवसाने "पूर्व्वत्रासिद्धीयमद्विर्वचने" इत्यस्याप्रवृत्तिः, तस्य द्वि द्विर्वचने कर्त्तव्ये प्रवृत्तेः । एवं भत्वस्यासिद्धत्वात् "हलादिः शेषः" (७।४।६०) इत्यस्याप्रवृत्तौ

निपातनमिदमकुत्सविषये। अथवा नैतद्‌वरूपम्। अभि उदिति द्व्युपसर्गात् गमेः डो विधीयते। अभ्युद्गतः 'अभ्युद्गः' समुद्गतः 'समुद्गः' इति।

षत्वञ्च प्रयोजनम्। शर्षु अयोगवाहानां ग्रहणे "शर्व्यवाये" इत्यनेनैव 'सर्पिःषु' 'धनुःषु' इत्यादिषु षत्वं सिद्धं भवति "नुम्विसर्जनीयशर्व्यवायेऽपि" (८।३।५८) इति विसर्जनीयग्रहणं कर्त्तव्यं न भवति। अनुस्वारग्रहणे नुम्ग्रहणमपि शक्यतेऽकर्त्तुम्। 'सर्पींषि,' 'धनूंषि' "शर्व्यवाय" इत्यनेनैव सिद्ध्यति। नुम्ग्रहणमवश्यकर्त्तव्यम्। नुमो-योऽनुस्वारस्तत्रैव यथा षत्वं स्यात् नान्यत्र यथा पुंसि।

अथवा अविशेषेणोपदेशः कर्त्तव्यः। किं प्रयोजनम्?

## ९। अविशेषेण संयोगोपधासंज्ञाऽलोन्त्य-द्विर्वचनस्थानिवद्भावप्रतिषेधः।

अविशेषेण (१) संयोगसंज्ञाप्रयोजनम्। 'उ ᳲ कः' इत्यत्र उपाध्मानीयस्य जश्त्वे तस्य संयोगसंज्ञायामसिद्धत्वात् "हलोऽनन्तराःसंयोगः" (१।१।७) इति संयोगसंज्ञा न, संयोगसंज्ञाभावे गुरुसंज्ञा न। गुरुसंज्ञाया अभावे गुरोरिति (८।२।८६) प्लुतो न

---

'उज्जिजिषती'तीष्टं द्विर्वचनं सिद्धम्, यद्यपि पूर्वोक्तानुमानाग्रहणं, तथापि दकारोपदेश-सामर्थ्यात् द्वित्वे कृते दकारस्य वत्वं प्रवर्त्तते।

अकुत्सविषय इति। अनुमानपचाग्रहणात् 'अभ्युद्गः' इत्यत्र दकारस्य वकारो न भवति अकुत्सविषय एव वकारनिपात इत्यभ्युपगमात्।

नुम्ग्रहणमिति। "अनुस्वारस्य शर्त्वात् तद्व्यवाये षत्वे सिद्धे नुम्ग्रहणं नियमार्थं, नुमो योऽनुस्वारस्तत्रैव यथा स्यादन्यत्र मा भूत् पुंस्विति।"

अविशेषेणेति। यत्र यत्र प्रयोजनं तत्र तत्रोपदेशः कर्त्तव्य इति प्रयोजनविशेष-मनपेक्ष्य सकलप्रयोजनोद्देशेनोपदेशोऽविशेषः।

भवति, अतः संयोगसंज्ञाप्रयोजनम्। (२) उपधासंज्ञाप्रयोजनम्। विसर्ज्जनीयविशेषणत्वेन "इदुदुपधस्य चाप्रत्ययस्य" (८।३।४१) इति ग्रहणं कर्त्तव्यम् 'दुष्कृतं' 'निष्कृतम्' 'दुष्पीतम्' 'निष्पीतम्' इत्यादिषु षत्वं यथा स्यात्। नेदं प्रयोजनम्। कथम्? नात्र विसर्ज्जनीयः किन्तर्हिः, सकारो विशिष्यते। इदुदुपधस्य सकारस्य यो विसर्ज्जनीयः स इति। अथवोपधाग्रहणमकृत्वा इदुद्भ्यां परस्य विसर्गस्येति इष्टसिद्धिः। (३) अलोन्त्यविधिश्च प्रयोजनम्। 'वृक्षस्तरति' 'प्लक्षस्तरति' इत्यत्र विसर्ज्जनीयान्तस्य पदस्य स इति पक्षेऽलोऽन्त्यस्य विधयो भवन्तीति अन्त्यस्य सत्वं यथा स्यात्। "निर्द्दिश्यमानस्यादेशाभवन्ती"ति परिभाषया सिद्धमेतत्, अतो नास्तीदमपि प्रयोजनम्। (४) द्विर्व्वचनं प्रयोजनम्। 'उर‿कः' 'उर‿पः' इत्यत्र "अनचि च" (८।४।४७) अच उत्तरस्य यरो द्वे भवत इति विधीयमानं द्वित्वं सिद्धं भवति। (५) स्थानिवद्भावप्रतिषेधः प्रयोजनम्। "अड्व्यवाय" इत्यनेन 'उरःकेण' उरःपेण' इत्यत्र यथा, तथा स्थानिवद्भावात् व्यूढो-

---

संयोगसंज्ञेति। उजेकपाध्मानीयोपधत्वात् उपाध्मानीयस्य हल्संज्ञां विना संयोगसंज्ञा न सिद्ध्यति। तत्सिद्ध्यर्थं हल्संज्ञेत्युक्तं संयोगसंज्ञाप्रयोजनमिति।

निर्द्दिश्यमानस्येति। निर्द्दिश्यमानमुच्चार्य्यमाणम्। निर्द्दिश्यमानस्य पदान्तस्य आदेशा भवन्ति। पदस्य यो विसर्ज्जनीयस्तस्येति व्याख्यानात् परिभाषाप्रवृत्तिः।

स्थानिवद्भावादिति। सकारस्य स्थानिवद्भावात् णत्वं प्राप्नोति। अनल्विधाविति प्रतिषेधस्तु स्थानिनो विसर्गस्याल्त्वे सति सिद्ध्यति। अनुपदिष्टत्वात् न हि स्थानिनोऽल्त्वमस्ति, अतः स्थानिवद्भावः प्रतिषेध्यः। "पूर्व्वत्रासिद्धे न स्थानिवत्" इति निषेधस्तु नात्र प्रवर्त्तते। स तु "अचः परस्मिन् पूर्व्वविधौ" (१।१।५७) इत्यनेन परनिमित्तोऽजादेशः स्थानिवदिति प्राप्ते "न पदान्तद्विर्व्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु" (१।१।५८) इत्यस्यारम्भे तत्र तत्र स्थानिवद्भावनिषेधाय। अस्य सूत्रस्य प्रत्याख्यानाय भाष्ये "पूर्व्वत्रासिद्धे न स्थानिवद्"िति वार्त्तिकमवद्यम्। अतस्तस्य वार्त्तिकस्य "अचः परस्मिन् पूर्व्वविधा"विति विषयत्वात् "स्थानिवदादेशोऽनल्विधौ" (१।१।५६) इति सूत्रं न विषयः। सुतराम् अस्मिन् सूत्रे "पूर्व्वत्रासिद्धे न स्थानिवद्"िति वार्त्तिकस्याप्रसरः। "अनल्विधा"वित्यस्य प्रसरार्थं स्थानिवद्भावप्रतिषेधः प्रयोजनत्वे-

रत्नेन' 'महीरत्नेन' इत्यत्रापि णत्वं प्राप्नोति । तत्रानल्विधाविति प्रतिषेधः सिद्धो भवति ।

---

किं पुनरिमे वर्णा अर्थवन्त आहोस्विदनर्थकाः ?

## १ । अर्थवन्तो वर्णा धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनात् । * ।

(१) धातव एकवर्णा अर्थवन्तो यथा 'एति' 'अध्येति' 'अधीतः' । (२) प्रातिपदिकान्येकवर्णान्यर्थवन्ति यथा 'आभ्यां' 'एभिः' 'एषु' । (३) प्रत्यया एकवर्णा अर्थवन्तः, यथा 'औपगवः' 'कापटवः' । (४) निपाता एकवर्णा अर्थवन्तः यथा 'अ' अपेहि, 'इ' इन्द्रं पश्य, 'उ' उत्तिष्ठ, 'अ' अपक्राम । अतो धात्वादीनामेकवर्णानामर्थदर्शनाद्वर्णा अर्थवन्तः ।

## २ । वर्णव्यत्यये चार्थान्तरगमनात् ।

वर्णव्यत्यये अर्थान्तरोपस्थितिर्भवति, अतएव वर्णा अर्थवन्तः । यथा कूपः सूपः यूपः । कूप इत्यत्र ककारेण कश्चिदर्थः, ककारापाये सकारोपजनेऽर्थान्तरम्, एवं यूप इत्यत्र ककारसकारापाये यकारोपजनेऽर्थान्तरं गम्यते । अतएव कूपे यः कूपार्थः स ककारस्य, सूपे यः सूपार्थः स सकारस्य, यूपे यो यूपार्थः स यकारस्य ।

## ३ । वर्णानुपलब्धौ चानर्थगतेः ।

वर्णस्यानुपलब्धौ अन्तर्धाने तद्वर्णसत्तायां योऽर्थस्तदर्थानवगतिः । यथा 'वृक्षः' इत्यत्र योऽर्थो वकारापाये 'ऋक्षे' स न गम्यते, 'काण्डीरः' इत्यस्य योऽर्थः ककारापाये

---

नात्र वर्णितः । "स्थानिवद्भावं प्रति त्रिपादीस्थस्यासिद्धतया न्यायसिद्धं तदिति पक्षे तु नेदं प्रयोजनम् ।"

वर्णव्यत्यय इति । एकस्य वर्णस्याभ्युपगमोऽन्यस्यापगमो व्यत्ययः ।

'आण्डीरे' स न गम्यते। किमुच्यते अनर्थगतेरिति? न साधीयोऽत्रार्थस्य गतिर्भवति। एवं तर्हीदं पठितव्यं स्यात्—"वर्णानुपलब्धौ चातदर्थगतेः" इति। किमिदमतदर्थगतेरिति? तस्यार्थस्तदर्थः तदर्थस्य गतिः तदर्थगतिः, न तदर्थगतिः अतदर्थगतिः, अतदर्थगतेरिति। अथवा सोऽर्थस्तदर्थः, तदर्थस्य गतिः तदर्थगतिः, न तदर्थगतिः, अतदर्थगतिः अतदर्थगतेरिति। तन्नैवं निर्देशः कर्त्तव्यः। उष्ट्रमुखवदतर्थगतेरनर्थगतेरित्यवोत्तरपदलोपो द्रष्टव्योऽतो न कर्त्तव्यः।

## ४। संघातार्थवत्त्वाच्च।

संघातार्थवत्त्वाच्च वर्णा अपि अर्थवन्तः। यतः येषां संघाता अर्थवन्तस्तेषामवयवा अप्यर्थवन्तः। एवम् अवयवानामर्थवत्त्वे संघातानामपि। तद्यथा एकचक्षुष्मान् समर्थस्तत्समुदयश्च शतमपि समर्थम्। एकश्च तिलस्तैलदाने समर्थः, तत्समुदायश्च खार्य्यपि तैलदाने समर्था। येषां पुनरवयवा अनर्थकास्तेषां समुदाया अप्यनर्थकाः। तद्यथा, एकोऽन्धो दर्शनेऽसमर्थस्तत्समुदायश्च शतमप्यसमर्थम्। एका च सिकता तैलदानेऽसमर्था तत्समुदायश्च खारीशतमप्यसमर्थम्।

यदि तर्हीमे वर्णा अर्थवन्तस्तदा "अर्थवत् प्रातिपदिक"(१।२।४५)मिति प्रातिपदिकसंज्ञा, प्रातिपदिकसंज्ञायां "प्रातिपदिकात्" (४।१।१) इति सुबुत्पत्तिः, सुबुत्पत्तौ "'सुबन्तं' पदम्" (१।४।१४) इति पदसंज्ञा। तत्र को दोषः? "पदस्य" (८।१।१६) इति 'धनं' 'वन'मित्यादिषु न लोपादीनि प्राप्नुवन्ति।

---

अनर्थगतेरिति। तस्य वर्णस्य सद्भावात् योऽर्थस्तस्यानवगतेरित्यर्थः।

तस्यार्थ इति। तस्य वर्णस्यार्थः।

सोऽर्थ इति। तस्मिन् वर्णे सति योऽर्थः प्रतीयते सोऽर्थः प्रकृतोऽर्थः।

उष्ट्रमुखवदिति। उष्ट्रमुखमिव मुखमस्य उष्ट्रमुखः।

एका सिकतेति। सिकताशब्दो बहुवचनान्तः। अत्र भाष्ये सिकतेति एकवचनान्तप्रयोगात् तस्यैकवचनान्तत्वमपीति विवरणम्।

## ५। संघातस्यैकार्थ्यात् सुबभावो वर्णात्।

एकत्वं संघातस्यार्थः, तेन वर्णात् सुबुत्पत्तिर्न भविष्यति।

## ६। अनर्थकास्तु प्रतिवर्णमर्थानुपलब्धेः।

प्रतिवर्णमर्थानुपलब्धेः अनर्थकास्तु वर्णाः। वर्णं वर्णं प्रतिवर्णम्।

## ७। वर्णव्यत्ययापायोपजनविकारेष्वर्थदर्शनात्।

वर्णव्यत्ययादिष्वर्थदर्शनात् वर्णा अनर्थकाः। तद्यथा (१) वर्णव्यत्यये 'कृतेः तर्कः' 'कसेः सिकता' 'हिंसेः सिंहः', एषु वर्णव्यत्यये नार्थव्यत्ययः। (२) अपायो लोपः। 'हतः' 'घ्नन्ति' 'घ्नन्तु' 'अघ्नन्'। एषु वर्णापायो न ह्यर्थापायः। (३) उपजन आगमः। 'लविता' 'लवितुम्'। अत्र वर्णोपजने नार्थोपजनः। (४) विकार आदेशः। 'घातयति' 'घातकः'। अत्र वर्णविकारो नार्थविकारः। वर्णव्यत्ययादिष्वर्थव्यत्ययादयो न भवन्ति अतो हि वर्णा अनर्थकाः।

अर्थवन्तोऽनर्थका वर्णा इत्युभयमुक्तम्? किमत्र न्याय्यम्। उभयमित्याह—स्वभावात्। *। धातुप्रत्ययप्रातिपदिकनिपाता एकवर्णा अर्थवन्तः, अतोऽन्येऽनर्थकाः। *॥

---

संघातस्येति। संघातस्य समुदायस्यैवार्थो न तु प्रत्येकवर्णानाम्। सुतरां न तेभ्यः स्वाद्युत्पत्तिः। पदसंज्ञा हि समुदायस्य न त्वसुबन्तत्वात् प्रत्येकं वर्णानाम्। न हि वर्णानां व्यत्ययेऽपाये संख्यान्तरोत्पत्तिः, सुतरां समुदायस्यैवार्थः।

अर्थदर्शनादिति। वर्णव्यत्ययात् पूर्व्वं योऽर्थः। तस्यैव वर्णव्यत्ययेऽपि दर्शनात्। सुतरां वर्णव्यत्ययेऽर्थव्यत्ययाभावः।

उभयमिति। कुत्रकुत्रचित् वर्णव्यत्ययेऽर्थान्तरावगतिः, कुत्र कुत्रचित्तन्न, अतएव उभयमेवावगन्तव्यम्।

"अर्थवन्तो वर्णा धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शना"दित्यादिषु वर्णानामर्थवत्तासाधकेषु हेतुषु इदं द्रष्टव्यम्। न खलु कूपसूपादिषु अर्थवतां ककारादीनामूपेनान्वयात् साधारणभूत ऊपे कश्चिदर्थो दृश्यते, न च कूपार्थः सूपे सूपार्थश्च कूपे वर्णव्यत्ययेन दृश्यते, अतः सिद्ध्यति एवंजातीयकानि संघातान्तराण्येवार्थान्तरेषु वर्त्तन्त इति। यदस्मिन् सिद्धान्ते "संघातार्थवत्त्वाच्चे"त्यस्य हेतोः परिहारो नाभवत् वक्ष्यति तं प्रातिपदिकसंज्ञायाम्।

---

# अ इ उ ण्, ऋ ऌ क्, ए ओ ङ्, ऐ औ च्।

## १। प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न।

अत्र प्रत्याहारार्था येऽनुबन्धाः क्रियन्ते कथं तेषामज्ग्रहणेषु ग्रहणं न भवति ?

---

दृश्यत इति। यदि कूपादिषु कादीनां वर्णानामर्थवत्ता ऊपशब्देनान्वयात्, तदा ऊपशब्दस्याप्यर्थवत्ता स्वीकर्त्तव्या। यदि कादीनामर्थोद्भावने ऊपस्य शक्तिरित्युच्यते, तदोपस्यानर्थकत्वात् वर्णानामर्थवत्त्वं भग्नम्। सुतरां समुदायस्यैवार्थवत्त्वमिति तत्त्वम्।

संघातान्तराणीति। संघातस्यैवार्थान्तरवाचित्वमिति सिद्धम्।

वक्ष्यतीति। तत्र परिहारो वक्ष्यति, "संघातार्थवत्त्वाच्चेति चेत् दृष्टो ह्यतदर्थेन गुणेन गुणिनोऽर्थभावः।" तत्र दृष्टान्तो रथाङ्गम्। रथाङ्गेन गुणिनो रथस्यार्थभावः, यतो न हि चक्रं रथोवैकाकी गमनक्रियायां समर्थः। उभयोः सम्मिलनेनैव तत्र सामर्थ्यम्। सुतरां समुदायेऽर्थवत्ता प्रतिपन्ना। न तु भिन्ने भिन्नेऽवयवे।

अज्ग्रहणेष्विति। अज्ग्रहणेष्वित्युपलक्षणं अजादिप्रत्याहारग्रहणेषु कथं न अनुबन्धानां ग्रहणमिति शेषः। अत्र अकारमारभ्य चकारं यावद्वर्णानां ग्रहणं भवति। तत्र मध्यस्थानां णकारककारङकाराणां ग्रहणे सति दधि+णकारः, दधि+ककारः, दधि+ङकार इत्यादिषु यण्प्रसङ्गः "अड्व्यवाय" इत्यत्र चकारस्यापि ग्रहणात् ऋचीनामित्यत्र णत्वं स्यात्। एवमन्यत्र विज्ञेयम्। अतो हि प्रश्नः, कथमज्ग्रहणेषु नेति।

## २। आचारात्;—

आचार्य्याणां व्यवहारात् न ग्रहणं भवति। न हि तेष्वनुबन्धेष्वाचार्य्या अच्-कार्य्याणि कृतवन्तः।

## ३। अप्रधानत्वात्;—

अचोऽन्त्ये हलो हल्ष्विति तुल्यजातीयानां तुल्यजातिषूपदेशदर्शनात्, न खल्वे-तेषामनुबन्धानामच्‌ प्राधान्येनोपदेशः।

## ४। लोपश्च बलवत्तरः।*।

लोपः खल्वप्यनुबन्धानां भवति।

---

आचारादिति। प्रश्नस्योत्तरमाह आचारात्। सूत्रकृतां व्यवहारात् "उणादयो बहुलम्" (३।३।१) इत्यत्र उकारस्य णकारे, "तृषिमृषिकृशेः" (१।२।२५) इत्यत्र इका-रस्य ककारे, "ङसिङसोः" (६।१।११०) इत्यत्र इकारस्य ङकारे "ई च गणः" (७।४।९७) इत्यत्र ईकारस्य चकारे यण् न कृतः। तस्मादनुबन्धानां नास्ति संज्ञित्वमिति ज्ञाप्यते।

न खल्विति। अणादिसंज्ञाप्रतिपत्त्यर्थं हि अनुबन्धानामुच्चारणम्। सुतरां तेषां परार्थत्वान्न प्राधान्येनोपदेशः। यदर्थमेषामुपदेशस्तेषामेव हि प्राधान्यम्। "प्रधाना-प्रधानयोः प्रधाने कार्य्यसंप्रत्ययः" इति न्यायात् परार्थानामनुबन्धानामणादिसंज्ञा न। एवं सति "आदिरन्त्येन सहेता" (१।१।७१) इति आदिरकारोऽपि अप्रधानत्वेन संज्ञि-त्वेन न परिगृहीतः स्यादिति चेत्, न, आद्यन्तपदाभ्यां यतः संज्ञित्वेन स्वघटितस्य समु-दायस्योपस्थितिः, लक्ष्यसिद्ध्यर्थन्तु प्रत्येकं संज्ञित्वम्, अतोऽस्य नाप्राधान्यम्, अन्त्यस्य तु न तथा इत्संज्ञया तस्य लोपप्राप्तेः। अस्या युक्तेः प्रामाणिकत्वात् "स्वं रूपं शब्दस्याशब्द-संज्ञा" (१।१।६८) इत्यतोऽनुवृत्तेन स्वशब्देन स्वस्य च रूपस्येति व्याख्याय स्वं रूपं चादे-रेव गृह्यते नान्त्यस्य अन्त्येनेत्यप्रधानतृतीयानिर्द्देशात्, सर्व्वनाम्न उत्सर्गतः प्रधानपरा-मर्शित्वादित्येषा शेखरकारेण नादृता।

लोप इति। "हलन्त्यम्" (१।३।३) इत्यनेन णकारादीनामित्संज्ञा। "तस्य लोपः" (१।३।९) इत्यनेन लोपः। सुतरां प्रत्याहारे णकारादीनां यथाच्संज्ञा तथा लोपो-

५ । ऊकालोऽजिति वा योग-
स्तत्कालानां यथा भवेत् ।
अचां ग्रहणमच्कार्य्यं
तेनैषां न भविष्यति ॥

अथवा "ऊकालोऽज् ह्रस्वदीर्घप्लुतः" (१।२।२४) इत्यत्र ऊकालोऽजिति योगं विभज्य ततः ह्रस्वदीर्घप्लुत ऊकालोऽज् इति कालविशेषेणावच्छिन्नस्याच्त्वम् । एवं सति कुक्कुट इत्यत्राच्त्वं प्राप्नोति । तस्मात् पूर्व्वोक्त एव परिहारः ।

एष एवार्थः । अपर आह,

"ह्रस्वादीनां वचनात्प्राग् यावत् तावदेव योगोऽस्तु ।
अच्कार्य्याणि यथा स्युस्तत्कालेष्वच्सु कार्य्याणि ॥"

अथ किमर्थमन्तःस्थानामण्सूपदेशः ?

'सँय्यन्ता' 'सँव्वत्सरः' 'यँल्लोकम्' 'तँल्लोकम्' इत्यत्र "अनुस्वारस्य ययि परसवर्णः" (८।४।५८) इति परसवर्णस्यासिद्धत्वात् "अनचि च" (८।४।४७) इत्यनेन प्राप्तम्

---

ऽपि । परत्वात् नित्यत्वादन्तरङ्गत्वाच्च लोपप्राप्तिः । एवं लोपे कृते संज्ञाप्रवृत्तिकाले त्वविद्यमानत्वात् तेषामजादिसंज्ञाया अभावः । अतएवोक्तं "लोपश्च बलवत्तर" इति बलवानेव बलवत्तरः, स्वार्थे तरप् ।

तस्मादिति । मात्राकालावगमे पूर्व्वमेव (६६पृ.) "न च मात्रिकं व्यञ्जनमस्ती"ति परिहार उक्तः । उ ऊ उ ३ इत्येवं मात्राकालनिर्णयात् व्यञ्जनस्यार्द्धमात्रिकत्वे द्वयोः संयोगे पूर्णैकमात्रायामपि तौ द्वावेव वर्णौ नैका जातिरिति अचां मात्रिकत्वस्य तेष्व-सम्भवः । मात्रिकत्वास्वीकारस्त्वच्सहायतां विनानुच्चार्य्यमाणत्वादिति तत्त्वम् ।

एष एवार्थ इति । एष एवार्थः । कस्य ? "अपर आह" इत्यारभ्य "अच्कार्य्याणी"त्यन्तस्य वार्त्तिककृतोक्तस्य ।

परसवर्णस्येति । अनुनासिके ययि अनुस्वारस्य परसवर्णत्वम् । तस्य असिद्धत्वात् द्विर्व्वचने कर्त्तव्ये अनुस्वारस्यैव द्विर्व्वचनं प्राप्नोति ।





चेत्तं न्यसीव्यदेतेन दुःखं विषहते महत्।
स न्यषहत दुर्भाग्यं पर्य्यसहत लाञ्छनम्॥
पर्य्यस्करोच्चित्तमहो परिष्करो-
त्यसौ स निष्टौति यतः परेश्वरम्।
व्यष्टौत् पुरा यस्तु कदापि शुद्धया
न्यस्तौन्न भक्त्या स कथं तदास्पदम्॥
पर्य्यष्वजत दुःखं स पर्य्यस्वजत दौर्भगम्।
को नु निष्वजते वा न यदि धर्म्मपथाच्युतः॥

(क) [सुमते स्यात्] परिनिविभ्यः सेव-
सितसयसिवुसहसुट्स्तुस्वञ्जाम्।

परि-नि विभ्यः सेव-सित-सय-सिवु-सह-सुट्-स्तु-स्वञ्जां सस्य मूर्द्धन्यः (८।३।७०)।

---

'निषीव्यति' स्यूतमावद्धं करोति। संसारेणातिघनिष्ठनिबन्धनं द्योतयितुं सीवनमित्युक्तम्। चेदिति। चेत् यदि तम् विषयः एतेन कामतन्तुना 'न्यषीव्यत्' महद्दुःखं 'विषहते' स जनो दुर्भाग्यं 'न्यषहत' लाञ्छनं कलङ्कं 'पर्य्यसहत'—"सिवादीनां वाड्व्यवायेऽपि"—। पर्य्यस्करोदिति। अहो सोऽसौ चित्तं 'पर्य्यस्करोत्' विशुद्धमकरोत् वर्त्तमाने 'परिष्करोति', यतः परेश्वरं परमात्मानं पुरा 'व्यष्टौत्' स्तुतिमकरोत् अधुनापि 'निष्टौति'। यस्तु कदापि शुद्धया भक्त्या न 'न्यस्तौत्' स्तुतिं नाकरोत्, स कथं तदास्पदं चित्तशुद्धेरास्पदम्। न हि परमेश्वरभजनं विना चित्तशुद्धिः। पर्य्यष्वजत इति। स भजनविमुखः दुःखं 'पर्य्यष्वजत' दौर्भगं 'पर्य्यस्वजत' आलिङ्गितवान्। को नु वा दुःखं दौर्भगञ्च न 'निष्वजते'—"परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्" "षिवादीनां वाड्व्यवायेऽपि"—यदि धर्म्मपथाच्युतः। धर्म्मपथपरिभ्रष्टोजनः सदा दुःखदुर्भाग्यभाजनम्।

(ख) सिवादीनां वाड्व्यवायेऽप्य[सी व्यसहत प्रिय] ।

सिवादीनाम् अड्व्यवायेऽपि परि-नि-विभ्यः वा सस्य मूर्द्धन्यः (८।३।७१) ।

७४ । तैलमनुष्यन्दतेऽनुस्यन्दते जलमाश्रयात् ।
जलेऽनुस्यन्दते मत्स्योऽक्षराज्ज्ञानं परेऽपरः ॥
निष्यन्दोऽभ्यञ्जनानामनवरतपरिष्यन्दनं सर्पिषाञ्च
भक्तेऽभिष्यन्दजन्तद्बलमतिशयविष्यन्दनञ्चौजसान्तु ।
विष्कन्तुं पापपङ्कं हरिचरणजुषां सर्व्वमेवानुकूलं
विस्कन्नोधर्म्मभावो विषयमतिमतां तैस्तदासक्ति-
हेतुः ॥

---

७४ । तैलमिति । आश्रयात् स्वाधिष्ठानात् तैलम् 'अनुष्यन्दते' जलम् अनुस्यन्दते', अक्षरात्परमात्मनः ज्ञानम् । जले मत्स्याः 'अनुस्यन्दते', परे परमेश्वरे अपरो जीवः । निष्यन्द इति । भक्ते ईश्वरानुरक्ते अभ्यञ्जनानां तैलादीनां 'निष्यन्दः' गात्रात् चरणं, सर्पिषाञ्च अनवरत'परिष्यन्दनम्' भोज्यवस्तुनी नियतपरिचरणम् बहुलपरिमाणघृतयुक्तभोज्यसामग्रीग्रहणमिति भावः, 'अभिष्यन्दजं' घृताद्यभिष्यन्दजन्यं तत् बलम् ओजसां प्राणबलानान्तु अतिशय'विष्यन्दनम्'—"अनुविपर्य्यभिनिभ्यः स्यन्दतेरप्राणिषु"—बाहुल्येन बहिराविर्भवनम् सर्व्वमेव हरिचरणजुषां हरिपदसेविनां पापपङ्कं 'विष्कन्तुम्'—"वेः स्कन्देरनिष्ठायाम्"—परिशोषयितुम् अनुकूलम् । न हि तेषां भोगे आसक्तिः किन्तु हरिचरण एव । अतएव न तेन पापवृद्धिः किन्तु कृतज्ञतापरिवृद्ध्या तद्ध्रास एवेति फलितार्थः । विपरीतं दर्शयति—विषयमतिमतां विषयेषु बद्धचित्तानां तैः भोगैः यदा 'विस्कन्नो' विशोषितः धर्म्मभावः तदा आसक्तिहेतुः तदिति शेषः । "आपूर्य्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वदि"त्यादि न्यायेन न हि भोग्यवस्तुषु बन्धनहेतुः किन्तु मनस्येवेति भावः ।

(क) अनुविपर्य्यभिनिभ्यः स्यन्दतेरप्राणिष्व [ह्रो]।

अनु-वि-पर्य्यभि-निभ्यः स्यन्दतेः अप्राणिषु सस्य वा मूर्द्धन्यः। (८।३।७२)

(ख) [स्याद्]वेः स्कन्देरनिष्ठायां[विष्कन्तव्यं यथा शिशो]।

वेः स्कन्देः अनिष्ठायां सस्य वा मूर्द्धन्यः (८।३।७३)।

७५। परिष्कन्ता परिष्कस्सः परिस्कन्दो न निष्फुरेत्।
क्षतघ्नत्वाद्धि निस्फूर्त्तिर्विष्फूर्त्तिस्तद्विपर्य्ययात्॥
विस्फुरत् शोभया पुष्पं स विष्फुलति विस्फुलन्।
विष्कभ्नाति हि विष्कम्भो यदि चित्तं विचञ्चलम्॥

(क) परेश्च [स्यात् परिष्कन्तुं परिस्कन्तुं यथा शुभ]।

परेश्च स्कन्देः सकारस्य वा मूर्द्धन्यः। (८।३।७४)।

(ख) परिस्कन्दः प्राच्यभरतेषु [कल्याण निश्चिनु]।

प्राच्यभरतेषु परिस्कन्दः [निपात्यते] (८।३।७५)।

---

७५। परिष्कन्तेति। 'परिष्कन्ता' परपोषकेण 'परिष्कस्सः' परिपुष्टः सन् 'परिस्कन्दः'—"परेश्च"—परपुष्टः न 'निष्फुरेत्' स्फूर्त्तिमान् भवेत्। कथम्? 'निष्फूर्त्तिः' स्फूर्त्त्यभावः क्षतघ्नत्वात् अकृतज्ञत्वात्; तद्विपर्य्ययात् क्षतघ्नतायाः विपरीतभावात् 'विस्फूर्त्तिः' विशेषेण स्फूर्त्तिः। परेण प्रतिपालितो यदि उपकारिण्यपकारपरस्तस्याश्वात्मग्लानिजनितविषादोनिश्चितः। यदि हि प्रतिपालकस्य हितानुष्ठानपरो न तस्य ग्लानिः प्रत्युत चित्तप्रसाद एव। विस्फुरदिति। शोभया 'विस्फुरत्' पुष्पम् स 'विस्फुलन्' विस्फुरन् 'विष्फुलति'—"स्फुरतिस्फुलत्योर्निर्निविभ्यः—" चिनोति। एतेन स्वाभाविकत्वमुक्तम्। हि यस्मात् यदि चित्तं विचञ्चलं 'विष्कम्भो' योगोक्तबन्धविशेषः 'विष्कभ्नाति'—"वेः स्कभ्नातेर्नित्यम्"—प्रतिबन्धीभवति। स्वाभाविकपथे वर्त्तमानस्य मनःसंयमसाधनमनायाससाध्यम्, न तु कठोरयोगबन्धादिभिस्तदिति भावः।

(ग) [स्यात्] स्फुरतिस्फुलत्योर्निर्निविभ्यो [विष्फुरत्यसौ] ।

स्फुरति-स्फुलत्योः सस्य नि-निं-विभ्यः वा मूर्द्धन्यः (८।३।७६) ।

(घ) वेः स्कभ्नातेर्नित्य [मत्र विष्कभ्नाति न तून्नतिः] ।

वेः स्कभ्नातेः सस्य नित्यं मूर्द्धन्यः (८।३।७७) ।

७६ । च्योषीढ्वं न धृतेर्जातु चक्रढ्वं यन्न वः स्मृतौ ।
अच्योढ्वं न लविषीढ्वं पविषीध्वन्तु मानसम् ॥

(क) इणः षीध्वं-लुङ्लिटां धोऽङ्गात् [अप्लोढ्वमहो प्रियौ]।

इणोऽङ्गात् षीध्वं लुङ्लिटां धः मूर्द्धन्यः (८।३।७८) ।

(ख) विभाषेटः [पविषीढ्वं पविषीध्वं यथा शुभ] ।

इणइटः षीध्वं लुङ्लिटां धः विभाषा मूर्द्धन्यः (८।३।७९) ।

——o-o——

---

७६ । च्योषीढ्वमिति । जातु कदाचित् धृतेः सन्तोषात् धैर्य्याद्वा न 'च्योषीढ्वम्' विच्युताभूयास्त । वः युष्माकं स्मृतौ यन्न तत् 'चक्रढ्वं' कृतवन्तः । न वयं स्मरामीऽतस्तन्न कृतवन्त इति कदाचिन्मा मंध्वम् । 'अच्योढ्वम्'—"इणः षीध्वं लुङ्लिटां धोऽङ्गात्" —पूर्व्वं विच्युता अभूत, अतः मानसं चित्तं न 'लविषीढ्वम्' खण्डितं कुरुध्वम्, तु किन्तु 'पविषीध्वम्'—"विभाषेटः"—पवित्रं कुरुध्वम् । "उद्धरेदात्मनात्मानं नात्मानमवसादयेदि"ति न्यायात् पूर्व्वपतनेन भग्नहृदया माभूतेति फलितार्थः ।

—

अथ समासे—

७७ । अयुक्तमत्राङ्गुलिषङ्गभीरु-
ष्ठाने निवस्तुं सविकारचित्ताः ।
अग्निष्टुता शुद्धिमहो न चाग्नि-
ष्टोमेन तेऽहङ्कृतितोलभन्ते ॥

अग्नीषोमीयच्चेत् प्रभवति परिहर्त्तुं हृदयस्य ।
मालिन्यं विपरीतं फलमस्मिन्न तदा दृश्येत ॥

(क) [स्यात्]समासेऽङ्गुलेः सङ्गे[ऽङ्गुलिषङ्गो यथा भिश्गो]।
अङ्गुलेः सङ्गः समासे सस्य मूर्द्धन्यः (८।३।८०) ।

(ख) भीरोः स्थानं [यथा भीरुष्ठानं त्याज्यं हि बुद्धिमन्] ।
भीरोः स्थानं समासे सस्य मूर्द्धन्यः (८।३।८१) ।

---

७७। अयुक्तमिति। अत्र 'अङ्गुलिषङ्गभीरुष्ठाने'—"समासेऽङ्गुलेः सङ्गः" "भीरोः स्थानम्"—अङ्गुलेः सङ्गस्तस्माद्भीरूणां स्थाने निवस्तुम् अयुक्तम् । त्यागायागाद्यनुष्ठानेनाभिमानपरास्तद्विमुखानां संसर्गेनाविशुद्धिमाशङ्कन्ते तैः सहवासो न युक्तः, तेषामभिमानोद्दीपनेन मालिन्यवर्द्धनात् । अहो सविकारचित्तास्ते अहङ्कृतितोऽहङ्कारवशात् "अग्निष्टोमेन" तद्विकृतियागेन 'अग्निष्टुता'—"अग्नेः स्तुत्स्तोमसोमाः"—न शुद्धिं लभन्ते ।

अग्नीषोमीयमिति । चेत् यदि 'अग्नीषोमीयम्'—"अग्नेर्दीर्घात् सोमस्येष्यते । * ।"—तद्देवताकं हविः हृदयस्य मालिन्यं परिहर्त्तुं प्रभवति तदा अस्मिन् जने विपरीतं फलं न दृश्येत । त्यागाभिमानत एव शुद्धाभिमानीऽन्यथा दीनतैव परिलक्ष्यते । "अविद्यया बहुधा वर्त्तमाना वयं कृतार्था इत्यभिमन्यन्ते बालाः" इत्याद्याः श्रुतय इममेवार्थमभिदधति ।

(ग) अग्नेः स्तुत्स्तोमसोमाः [सोऽग्निष्टोमी विकारवान्]।

अग्नेः स्तुत-स्तोम-सोमाः समासे सस्य मूर्द्धन्यः (८।३।८२) ।

अग्नेर्दीर्घात् सोमस्येष्यते । * ।

७८ । ऋत्विक्कुलैः साधितोऽपि ज्योतिष्टोमोन शुद्धये ।
आयुष्टोमो वृथा तेन दीर्घायुष्ट्वं कुतो भवेत् ॥

(क) [स्याद्] ज्योतिरायुषः स्तोमः[आयुष्टोमो यथा शिशो]।

ज्योतिरायुषः स्तोमः समासे सस्य मूर्द्धन्य. (८।३.८३) ।

७९ । मातृष्वसा तथा पितृष्वसा मातुःष्वसुः पुनः ।
मातुःस्वसा पितुःष्वसुर्मान्या पितुःस्वसा सदा ॥

(क) [कल्याण] मातृपितृभ्यां स्वसा [पितृष्वसा यथा]।

मातृपितृभ्यां स्वसा समासे सस्य मूर्द्धन्य. (८.३।८४) ।

(ख) [स्यान्] मातुः पितुर्भ्यामन्यतरस्यां [सा पितुःस्वसा]।

मातुःपितुर्भ्यां स्वसा अन्यतरस्यां समासे मूर्द्धन्यः (८।३।८५) ।

समास इति निवृत्तम् ।

---

७८ । ऋत्विककुलमिति । ऋत्विक्कुलैः ऋत्विक्समूहैः साधितोऽपि 'ज्योतिष्टोमो' यागविशेषः न शुद्धये शुद्धिहेतोः । 'आयुष्टोमः'—"ज्योतिरायुषः स्तोमः"—वृथा, तेन कुतो 'दीर्घायुष्ट्व' भवेत् । न हि यागादिभिः किन्तु नियमप्रतिपालनेनायुर्वृद्धिः परमेश्वराराधनेन चित्तशुद्धिरिति वास्तविकोधर्म्मः ।

७९ । मातृष्वसेति । मातृष्वसा तथा पितृष्वसा—"मातृपितृभ्यां स्वसा"—मान्या, मातुःष्वसुः मातुःस्वसा पितुःष्वसुः पितुःस्वसा—"मातुःपितुर्भ्यामन्यतरस्याम्"—पुनः सदा मान्या । दूरतरसम्बन्धमन्यमानेन मायमन्तव्या ।

८०। वर्णः स्यादभिनिस्तानोऽभिनिष्टानः पुनः शिशो।
विसर्ज्जनीय एषोऽयं शब्दसंज्ञासु दृश्यते॥

(क) अभिनिसः स्तनः शब्दसंज्ञायां [स्याद्वि वुद्धिमन्]।
अभि-निसः स्तनः अन्यतरस्यां मूर्द्धन्य. शब्दसंज्ञायाम् (८।३।८६)।

८१। तपांसि चेदङ्ग निषन्ति प्रादुः-
ष्यात् सौख्यमुत्पन्नसुषुप्तिरत्र।
दुःषुप्तिरूपा विषमा विकल्पै-
र्निःषुप्तिरेका हि सतां सुषूतिः॥

---

८०। वर्ण इति। वर्णोऽक्षरनादाभिव्यञ्जकः 'अभिनिस्तानः', न तदा षत्वसम्भव इति कश्चित्। हे शिशो, 'अभिनिष्टानः'—"अभिनिसः स्तनः शब्दसंज्ञायाम्"—पुनः विसर्ज्जनीयः। एषोऽयम् अभिनिष्टानशब्दः शब्दसंज्ञासु दृश्यते। तद्यथा गृह्यसूत्रे "नाम चास्मै दद्युर्घोषवदाद्यन्तरन्तस्थमभिनिष्टानान्त"मिति।

८१। तपांसीति। अङ्ग हे शिशो, चेत् यदि तपांसि 'निषन्ति' निश्चयेन विद्यन्ते सौख्यं 'प्रादुःष्यात्'—"उपसर्गप्रादुर्भ्यामस्तिर्यच्परः"—सुखानुभूतिः प्रादुर्भवेत्। अत्र सुखलाभविषये उत्पन्न'सुषुप्तिः' अस्वाभाविकसाधनयोगेनोत्पन्नसमाधिरूपावस्थाविशेषः विकल्पैः समाधिलाभकालेऽन्यचिन्ताजनितमानसविकारैः 'विषमा' विगतसाम्यावस्था 'दुःषुप्ति'रूपा भवति परमेशचिन्ताविरहात्। एका हि 'निःषुप्तिः' भगवद्भजनविषये आलस्यविरहः सतां 'सुषूतिः'—"सुविनिर्दुर्भ्यः सुपिसूतिसमाः"—प्रकृष्टप्रसवभूमिः। ततो हि साधूनां साधुत्वमिति तेषां प्रादुर्भावस्थानम्।

(क) [बाले] पसर्गप्रादुर्भ्यामस्तिर्यच्पर [इष्यते] ।

उपसर्गप्रादुर्भ्यां यच्परः अस्तिः सस्य मूर्द्धन्यः (८।३।८७) ।

(ख) [भवेयुः] सुविनिर्दुर्भ्यः सुपिसूतिसमाः [शिशो] ।

सु-वि-नि-र्दुर्भ्य. सुपिसूतिसमाः मूर्द्धन्याः सस्य (८।३।८८) ।

८२ । कुतो नदीष्णोऽयमिति प्रशंसा
निष्णात एषोऽत्र विद्वद्‌मानः ।
सूत्रं प्रतिष्णातमिदं मुनेस्तु
कापिष्ठलिः कुत्र वसत्यहो वा ॥

(क) [स्यान्] निनदीभ्यां स्नातेः कौशल [एष नदीष्णातो हि] ।

नि-नदीभ्यां स्नातेः सस्य मूर्द्धन्यः कौशले (८।३।८९) ।

(ख) [बाल] सूत्रं प्रतिष्णातं [प्रतिष्णातं हि तन्मुनेः] ।

प्रतिष्णातं [निपात्यते] सूत्रं [चेत्] (८।३।९०) ।

(ग) [ज्ञेयः] कपिष्ठलोगोत्रे [यथा कापिष्ठलिः शिशो] ।

कपिष्ठलो [निपात्यते] गोत्रे (८।३।९१) ।

---

८२ । कुत इति । अयं 'नदीष्णः' नद्यां स्नातुं कुशल इति प्रशंसा कुतः । सन्तरणादिकुशलोऽयमिति न प्रशंसाहेतुः । एषोऽत्र शास्त्रे 'निष्णातः'—"निनदीभ्यां स्नातेः कौशले"—पारङ्गतः अतएव विद्वद्‌मानः । मुनेः पाणिनेः इदम् सूत्रम् व्याकरणन्तु 'प्रतिष्णातं'—"सूत्रं प्रतिष्णातम्"—परिशुद्धम् । अहो कुत्र वा 'कापिष्ठलिः'—"कापिष्ठलोगोत्रे"—कपिष्ठलगोत्रसम्भवो वसति । न हि गोत्रप्रवर्त्तनेनापि कोऽपि चिरप्रतिष्ठां लभत इति भावः ।

८३। प्रष्ठो जनो विष्टरभाक् न विष्टरै-
विष्टारमुख्यैस्तु युधिष्ठिरः स्तुतः।
धर्म्माय वृत्ताय ऋषिर्गविष्ठिरः
स्वर्गे स्थिरत्वाद्भविता सुपूजितः॥

(क) प्रष्ठोऽग्रगामिनि [प्रष्ठो जनोऽयं सद्भिरर्च्चितः]।
प्रष्ठो [निपात्यते] अग्रगामिनि (८।३।९२)।

(ख) [बालक] वृक्षासनयोर्विष्टर [एष हि विष्टरोऽत्र]।
वृक्षासनयोः विष्टरः निपात्यते (८।३।९३)।

(ग) छन्दोनाम्नि च [बालात्र विष्टरोऽपि विगण्यते]।
छन्दोनाम्नि विष्टरः [निपात्यते] (८।३।९४)।

(घ) [बाल ज्ञेयो] गवियुधिभ्यां स्थिरो[ऽत्र युधिष्ठिरः]।
गवियुधिभ्यां स्थिरः सः मूर्द्धन्यः (८।३।९५)।

---

८३। प्रष्ठ इति। 'प्रष्ठः'—"प्रष्ठोऽग्रगामिनि"—अग्रगामी जनः 'विष्टर'भाक् आसनभाक् न 'विष्टरैः'—"वृक्षासनयोर्विष्टरः"—वहुवृक्षैः वहुवृक्षसम्पत्तिमत्तयेति यावत्। सम्मानहेतुं दर्शयति दृष्टान्तेन। 'युधिष्ठिरः' धर्माय वृत्ताय 'विष्टार'मुख्यैः—"छन्दोनाम्नि च"—वृहतीच्छन्दःप्रभृतिभिः स्तुतः वर्णितगुणः। 'गविष्ठिरः'—"गवियुधिभ्यां स्थिरः"—ऋषिः गोत्रप्रवर्त्तकः स्तोत्रनिर्माता कण्वो वा स्वर्गे स्थिरत्वात् सुपूजितः भविता, न तु गोत्रप्रवर्त्तनेन स्तोत्रनिर्माणेन वेति भावः। "गविष्ठिरः शिव" इति पुरुषोत्तमः। "गविष्ठिराणामात्रेयगविष्ठिरपौतिमाषे"ति आश्वलायनोक्तो गोत्रप्रवर्त्तकऋषिरिति "गविष्ठिरं कण्व"मिति वेदभाष्ये कण्व इति दर्शनात् स एवार्थोऽत्र परिगृहीतः।

८४ । कुष्ठलं भवतु विष्ठलं सदा
सत्परिष्टलमिदं ग्रमिष्ठलम् ।
द्विष्ठचित्तमनुकूलमत्र न
पारमेष्ठपदमप्यनादृतम् ॥
अम्बष्ठानां स्वकुलगरिमा गोष्ठगानामृजुत्वं
शेकुष्ठोऽन्यैर्न परिगणितः कुष्ठवृत्तादपष्ठः ।
भूमिष्ठानामशिवहरणोऽग्निष्ठमञ्जिष्ठ एष
शङ्कुष्ठो वा परहृदिशयस्त्विष्ठ एवं दिविष्ठः ॥

---

८४ । कुष्ठलमिति । 'कुष्ठलं' कुत्सितस्थलं सदा 'विष्ठलं' दूरगतस्थानं भवतु । इदं 'ग्रमिष्ठलं' ग्रनिपरिवृतस्थानं सत् 'परिष्ठलम्'—"वि-कु-ग्रमि-परिभ्यः स्थलम्"—साधुपरिवेष्टितस्थलम् । तैः सेवितमित्यस्य समादरो न तु ग्रम्यधिष्ठानेन । अत्र 'द्विष्ठ' चित्तम् विभक्तचित्तम् नानुकूलम् धर्म्मादिसञ्चये इति यावत् । 'पारमेष्ठ'पदं सर्व्वोच्चतमपदमपि अनादृतं भक्तैरिति शेषः ।

अम्बष्ठानामिति । 'अम्बष्ठानां' स्वकुलगरिमा अभिमानप्रधानजातित्वात् तथोक्तम् । 'गोष्ठ'गानां गोपालानाम् ऋजुत्वं सरलता । 'शेकुष्ठो'ऽन्यैर्व्याकरणकृद्भिरधुनाप्रसिद्धत्वान्न परिगणितः । कुशे तिष्ठतीति शेकुष्ठः पृषोदरादित्वाद्वर्णविपर्य्यय इति व्युत्पत्तिपक्षे कुशे तिष्ठतीति नान्यैः परिगणितः, चरित्रत एव हि गणनम् । कुष्ठवृत्तात् कुत्सितभावेनावस्थिताच्चरित्रात् 'अपष्ठः' अपक्रम्य स्थितः । कुष्ठवृत्तेरिति पाठे कुत्सितभावेनावस्थिता वृत्तिर्यस्य तस्य सम्बन्धे अपष्ठोऽङ्कुशाग्रः । एतदेव हि तादृशजनानां तं प्रति विद्वेषकारणम् । अतः किमेष जनसङ्गवर्ज्जनपरः ? न । "भूमिष्ठानाम्" पृथिवीस्थजनानाम् अशिवहरणः अमङ्गलहरणः एष जनोऽत्र 'अग्निष्टमञ्जिष्ठः' अग्निष्ठः अग्नौ

अङ्गुष्ठानामुपरिविलसद्भूषणैर्नो वरिष्ठः
पुञ्जिष्ठो वा विपुलविभवः शान्तिहेतोर्न जातु ।
बर्हिष्ठैश्चित् सुरभिसुकचो भोगदोषैर्विनष्टः
सव्येष्ठश्चेद्विनतहृदयो मानदानोपयुक्तः ॥

(क) [बाल]विकुशमिपरिभ्यः स्थलम् [सदा कुष्ठलं हेयम्] ।

वि-कु-शमि-परिभ्यः स्थलं मूर्द्धन्यम (८।३।९६) ।

(ख) [बाल स्यात्] अम्बाम्बगोभूमि-
सव्यापद्वित्रिकुशेकुशङ्कु·

---

निक्षिप्तः, 'नञ्जिष्ठः' मुकुलनिर्म्मितशय्यायामवस्थितः । एतेनात्यादरः प्रदर्शितः । अग्निष्ठी लौहमयकटाह इत्यर्थे तप्तघृतकटाहे निक्षिप्तः पुष्पमुकुलोपरिकल्पितोपवेशन इति व्याख्यानम् । 'अङ्कुली' वा शङ्कुविद्ध इव महर्षीशा इव शङ्कुविद्धः,—न तदनुकरणं पर-वर्त्तिसमये सम्भवदत उपमामुखेन शङ्कुविद्धत्वं परिगृहीतम्—परहृदिशयः परेषां हृद्यवस्थितः भक्तिरत्याचारः उभे तेषामन्यहृदयाधिकारं सूचयेते । 'त्रिष्ठो'ऽग्निमञ्जि-शङ्कुवस्थित एवं 'दिविष्ठः' स्वर्गगतः । जनानां शत्रुतासाधनेनात्यादरेण वा तेषां पृथिव्यां स्वर्गे च चिरप्रतिष्ठा न तु विच्युतिरिति भावः ।

अङ्गुष्ठानामिति । 'अङ्गुष्ठानाम्' उपरि विलसद्भूषणैः नो 'वरिष्ठः' न श्रेष्ठतमः । पुञ्जिः समूहस्तत्र तिष्ठतीति 'पुञ्जिष्ठो'ऽतिमात्रसञ्चितविपुलविभवो जातु कदाचित् न शान्तिहेतोः । 'बर्हिष्ठैः' ह्रीवेराख्यकेशप्रसाधनगन्धद्रव्यैः सुरभिसुकचो जनः भोगदोषैः विनष्टः । 'सव्येष्ठः' सव्ये वामे तिष्ठतीति सव्येष्ठः विनयवशात् सर्व्वदा वामपार्श्वे स्थितः, अथवा सव्येष्ठो दक्षिणस्थ इति प्रसिद्धार्थे सारथिः परिचालकः सन् विनतहृदयो जनो मानदानोपयुक्तः स एव सदा माननीयः ।

ङ्गुमञ्जिपुञ्जिपरमेवर्हिर्दि-
व्यग्निभ्यः स्थो [ऽम्बष्ठो गोष्ठः] ॥

अम्ब-ऽऽम्ब-गो-भूमि-सव्या-ऽप-द्वि-त्रि-कु-शेकु-शङ्कु-ऽङ्गु-मञ्जि-पुञ्जि-परमे-वर्हि-र्दिव्य-ऽग्निभ्यः स्थः मूर्द्धन्यः (८।३।९७) ।

८५ । सव्येष्ठाः परमेष्ठी किमु तेनापरिगणितेन वा ।
सव्येष्ठारं परमं विना हि विश्वरथं न याति ॥

स्था-स्थिन्-स्थॄणामिति वक्तव्यम् । * ।

८६ । अयं सुषामेति किमु प्रशंसा
निष्षामता वापि न चास्य निन्दा ।
सुषन्धिरस्यास्ति न चेन्महद्भि-
रन्यल्लसत् सुष्ठु विभाति दुष्ठु ॥

(क) सुषामादिषु चा [ऽयं सन् सुषामा ब्राह्मणो यथा] ।

सुषामादिषु च [सस्य] मूर्द्धन्यः (८।३।९८) ।

---

८५ । सव्येष्ठा इति । 'परमेष्ठी' ब्रह्मा 'सव्येष्ठाः' विश्वरथपरिचालकः । अपरिगणितेन तेन वा किमु ? यदि तं न कोऽपि गणयति न कापि हानिः कल्पितत्वात्, पूर्व्वतनशास्त्रेऽपि तस्यापरिगणितत्वाच्च । परमं सव्येष्ठारं परमेश्वरं विना हि विश्वरथो न याति । इदं हि विश्वं परमेश्वरपरिचालितं सद्गच्छतीति सर्व्वैः प्रत्यक्षतोऽवगन्तव्यम् ।

८६ । अयमिति । अयं जनः 'सुषामा' सामपारग इति किमु प्रशंसा ? अस्य च 'निष्षामता' सामविरहितत्वमपि वा न निन्दा । कथमेवमवधेयम् ? चेत् यदि अस्य जनस्य महद्भिः साधुभिः 'सुषन्धिः' सम्मिलनं नास्ति 'सुष्ठु' लसत् अन्यत् सर्व्वं 'दुष्ठु'—"सुषामादिषु च"—विभाति भासते । सामकुशलत्वं तदकुशलत्वं न प्रशंसायां निन्दायां वा हेतुः, किन्तु साधुजनैः सम हृदयस्यैकत्वमेव वाञ्छनीयमिति तथोक्तम् ।

८७। नाम्ना चेद्धरिषेणोऽयं विष्वक्‌सेनपराङ्मुखः ।
रोहिणिषेण-भरणिसेनाभिख्याऽस्य शोभते ॥

(क) [बाल स्यात्]एति संज्ञायामगात्[स हरिषेण ऐत्]।
इण्को: एति सस्य मूर्द्धन्यः अगात् संज्ञायाम् (८।३।९९)।

(ख) नक्षत्राद्वा [शतभिषक्‌सेनो रोहिणिषेण ऐत्] ।
इण्को: एति नक्षत्रात् वा सस्य मूर्द्धन्यः अगात् संज्ञायाम् (८।३।१००)।

८८। हविष्टरं वा बहुलं हविष्टमं
सोऽश्नाति सायुष्टमहो न तेन ।
न गीस्तरा वास्य निवृत्तिसाधिका
चरित्रमूलं निखिलं जनस्य ॥

(क) ह्रस्वात्तादौ तद्धिते [स्यात् सर्पिष्टन्तचतुष्टयम्]।
ह्रस्वात्तादौ तद्धिते सस्य मूर्द्धन्यः (८।३।१०१)।

---

८७। नाम्नेति। चेत् यदि अयं जनः नाम्ना नाममात्रेण 'हरिषेणः' फलतः 'विष्वक्सेन'पराङ्मुखः—"एति संज्ञायामगात्"—भगवद्विमुखः। अस्य 'रोहिणिषेणभरणिसेना'भिख्या—"नक्षत्राद्वा"—शोभते। नक्षत्रनाम्ना तन्नामदानमेव शोभनं न तु परमिश्रनाम्नेति भावः।

८८। हविष्टरमिति। 'हविष्टरं' बहुलं 'हविष्टमं' वा अश्नाति अहो तेन यज्ञावशेषहविर्भोजनेन न 'सायुष्टम्'—"ह्रस्वात्तादौ तद्धिते"—आयुष्मत्ता। अस्य जनस्य 'गीस्तरा' अतिमात्रवाक्यप्रयोगो वा न निवृत्तिसाधिका। तथा प्रार्थनादिच्छलेन वाग्बाहुल्यं न विषयतृष्णानिवृत्तिकारणम्। कथं न तद्भवति? जनस्य निखिलं सर्व्वं चरित्रमूलम्, चरित्रशुद्धिर्हि प्रार्थनादिसाफल्ये स्वास्थ्यवृद्धौ च हेतुरिति फलितार्थः।

८९। परहृदयगतानान्तु महतां परिचयसम्पदः स्युः।
न तदनुचिन्तनतस्ते परेण च भवेयुस्तरां हि ॥

तिङन्तस्य प्रतिषेधो वक्तव्यः । * ।

९०। सुवर्णं निष्टपत्यग्नौ शोधनाय तथा मनः।
अनुतापानले शुद्धो दहन् भवति मानवः ॥

(क) [स्यात्] निसस्तपतावनासेवने [निष्टपत्यसौ] ।

अनासेवने [ऽर्थे] तपतौ निसः सः मूर्द्धन्यः (८।३।१०२)।

९१। विस्रब्धोऽयं कथयति गुणान् साधुनिष्ठान् विस्रृतान्
निन्दाभाक् तान् विसृजति दिवि स्पृष्टकीर्त्तीन् कथं वा।

---

८९। परहृदयेति। परहृदयगतानां भगवद्धृदयवासिनां महतां महाजनानां तदनुचिन्तनतः तेषां महताम् अनुचिन्तनतः न परिचयसम्पदः स्युः। कथं न ततः तेषां परिचयः? ते हि महाजनाः परेण परमेश्वरेण च 'भवेयुस्तराम्'—"तिङन्तस्य प्रतिषेधो वक्तव्यः । * ।"—परमात्मना सम्बन्धानुरूपः तैः सम्बन्ध इति तत्त्वम्।

९०। सुवर्णमिति। शोधनाय सुवर्णम् अग्नौ "निष्टपति"—"निसस्तपतावनासेवने"—सकृदग्निं स्पर्शयति, तथा मनः अनुतापानले दहन् मानवः शुद्धः भवति। "कृत्वा पापं हि सन्तप्य तस्मात् पापात् प्रमुच्यते। नैव कुर्य्यां पुनरिति निवृत्त्या पूयते तु सः।" इत्यत्र सन्तापेन सन्तापविषयात् पापात् तज्जनितापराधात् प्रमुक्तिः न तु शुद्धिरिति दर्शनात् कथमत्र शुद्धो भवतीत्युक्तिः युक्ततमा। दहन्निति विशेषणस्य निवृत्तिपर्य्यन्त-फलपरत्वात्तथा निवचनं युक्तमनुपश्यामः।

९१। विस्रब्ध इति। अयं जनः साधुनिष्ठान् "विसृतान्" सर्व्वतो विसारिणः गुणान् "विस्रब्धः" आश्वस्तः सन् कथयति। एवं गुणविघोषणेन निन्दाभाक् साधुविद्वेषिभिः निन्दितः सन् कथं वा "दिवि स्पृष्ट"कीर्त्तीन् तान् "विसृजति" निन्दया भीतः न तान्

निस्पृह्यायं निखिलविषयानग्निसात् पापकर्म्म
कुर्व्वन्नेवं स खलु विकृतीर्ध्वंसयन् साधु सस्ति ॥

(क) [स्यान्] न रपरसृपिसृजिस्पृशिस्पृहि-
सवनादीनां [विसृजति सुमतै]।

रपर-सृपि-सृजि-स्पृशि-स्पृहि-सवनादीनां सस्य न मूर्द्धन्यः (८।३।११०)।

(ख) सात्पदाद्योः [रग्निसात् स दधि सिञ्चति बालक]।

सात्-पदाद्योः सस्य न मूर्द्धन्यः (८।३।१११)।

९२। सेसिच्यते गात्रमहो न निर्म्मल-
आधोरणस्तं परिसेधयत्यसौ।
नागन्तु निस्तब्धमपां चये पुनः
कामप्रतिस्तब्धधियां गतिस्तथा ॥

---

परित्यक्तुं समर्थं इत्यर्थः। एवं साधुप्रशंसनेन सोऽयं जनः निखिलविषयान् "निस्पृह्य"—"न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम्"—अनभिलष्य पाप-कर्म्म "अग्निसात्" कुर्व्वन् अनुतापानले निःक्षिपन्, विकृतीः ध्वंसयन् विनाशयन् साधु 'सस्ति'—"सात्-पदाद्योः"—सुष्ठु निद्राति भयविरहितत्वात् स्वस्थः "सुखं दान्तः प्रस्वपिती"ति न्यायाद् विश्रामसुखं भजते। साधुजीवनसौन्दर्य्यदर्शनेन हि तत्प्रशंसोपतिष्ठते, ततस्तदाकृष्टचित्तस्य विषयादिषु निस्पृहा, निस्पृहया पापकर्मपरिहारः, तत्परिहारेण विकृतिध्वंसः, विकृतिध्वंसेन च स्वस्थत्वमिति सर्व्वं सुस्थम्।

९२। सेसिच्यत इति। नागः हस्ती गात्रं 'सेसिच्यते'—'सिचो यङि'—पुनः पुनः सिक्तं करोति, अहो न निर्म्मलः सेचनसहकृतधूलिविक्षेपणात् न मालिन्यविरहितः। असौ आधोरणः हस्तिपकः तं 'निस्तब्धं' विमूढं नागं हस्तिनं तु अपां चये जलाशये 'परिसेधयति' प्रस्थापयति, काम'प्रतिस्तब्ध'धियां—"सेधतेर्गतौ" "प्रतिस्तब्धनिस्तब्धौ च"—वासनाप्रतिरुद्धबुद्धीनां गतिः तथा तद्धस्तिसदृशी। "प्रायश्चित्तन्तु पापानां मन्ये कुञ्जरशौचव"दित्यादिन्यायात् वासनाविवशचित्तानां सर्व्वमेवानुष्ठानं विफलमिति तात्पर्य्यम्।

(क) सिचो यङि [यथा सेसिच्यते हस्ती कलेवरम्]।

यङि सिचः सस्य न मूर्द्धन्यः (८।३।११२)।

(ख) [स्यात्] सेधतेर्गतौ [बालाभिसेधयति गा यथा]।

गतौ [वर्त्तमानस्य] सेधतेर्न सस्य मूर्द्धन्यः (८।३।११३)।

(ग) [स्यात्]प्रतिस्तब्धनिस्तब्धौ चा[यं निस्तब्ध एति भोः]।

प्रतिस्तब्धनिस्तब्धौ च [निपातनात्] न मूर्द्धन्यौ (८।३।११४)।

९३। विसोढुमावेगमहो रिपूणां
स पर्य्यतस्तम्भदपानप्राणौ।
न्यसीषिवत्तन्तुभिरिन्द्रियाणि
न्यसीषहत्तेन न भक्त्यभावात्॥

(क) सोढ़ौ [बाल परिसोढुम्]—

सोढ़ः सकारस्य न मूर्द्धन्यः (८।३।११५)।

(ख) स्तम्भुसिवुसहां चङि।

स्तम्भु-सिवु-सहां चङि सस्य न मूर्द्धन्यः (८।३।११६)।

उपसर्गादिति वाच्यम्। *।

---

९३। विसोढुमिति। अहो रिपूणाम् आवेगं 'विसोढुं'—"सोढ़ः"—सः अपानप्राणौ 'पर्य्यतस्तम्भत्' प्राणायामयोगेन स्तम्भितौ कृतवान्। तेन प्राणायामपरजनेन इन्द्रियाणि तन्तुभिः सामान्यसूत्रैः "न्यसीषिवत्" सेवितान्यकारयत् तदुपदेष्टेति शेषः, भक्त्यभावात् परमात्मन्यनुरागविरहात्, तेन न "न्यसीषहत्"—"स्तम्भुसिवुसहां चङि";—साहयितुमशकत् रिपूणामावेगमिति शेषः। प्राणायामाद्यस्वाभाविकयोगोपायेन न कृतार्थता किन्त्वीश्वरप्रणिधानादेवेति भावः।

९४। चेदभ्यसोष्यन्न सुखी भवेत् स
शिवाय सोऽयं न ततोऽभिसोष्यति।
निन्द्या सदा साभिसुसूर्जनोऽभि-
षसाद मृत्युं सुरयाभिषस्वजे॥

(क) सुनोतेः स्यसनो[र्नैयो न जातु परिसोष्यति]।

सुनोतेः सस्य मूर्द्धन्यः न स्य-सनोः (८।३।११७)।

(ख) [स्यात्] सदिष्वञ्जोः परस्य लिटि[तं परिषस्वजे]।

सदि-स्वञ्जोः लिटि परस्य सस्य न मूर्द्धन्यः (८।३।११८)।

इति दृष्टान्तसर्व्वस्वे दृष्टान्तानुगमने संहितायां षत्वाश्रय-
संहिताकथनं नाम षष्ठं प्रकरणम्।



९४। चेदिति। चेत् यदि स 'अभ्यसोष्यत्' सुरास्थापनम् अकरिष्यत् न सुखी भवेत्, ततः शिवाय कल्याणाय सोऽयं जनः न 'अभिसोष्यति' सुरास्थापनं करिष्यति। सा 'अभिसुसूः'—"सुनोतेः स्यसनोः"—सुरास्थापनाभिलाषः निन्द्या निन्दनीया। कथम्? सुरया जनः 'अभिषसाद' अवसादग्रस्तो बभूव, मृत्युम् 'अभिषस्वजे'—"सदिष्वञ्जोः परस्य लिटि"—आलिङ्गितवान्। पूर्व्वं यदभवदधुनापि तत्तथैव भवेदिति सुरास्थापना-भिलाषः सदैव निन्दनीयः।

इति दृष्टान्तव्याख्याने षष्ठं प्रकरणम्।



९५ । विस्तीर्णेऽसौ जगति सुनृणां भाति पुष्णाति विश्वं
विश्वेशोऽयं करणनिकरातीतकारुण्यसिन्धुः ।
मूर्खेणाप्तो ननु भजनतो नैति तर्केण कोऽपि
दर्पेणान्धः कुमतिविमतो मार्गणे चान्तिमापत् ॥
पर्य्याणद्धो विषयनिगड़ैर्वर्म्मणा योगरूपे-
णाच्छन्नश्चेत् परिहृतभयो वृंहणं याति नित्यम् ।

---

९५ । विस्तीर्ण इति । 'विस्तीर्णे' जगति असौ विश्वेशः परमेश्वरः 'सुनृणां' सुमनुष्याणां सत्पथाश्रयिणां समीपे भाति, जगद्दृष्ट्वा ते तं जानन्ति । कथं भाति ? अयं परमेश्वरः विश्वं 'पुष्णाति' स्वशक्त्या नियतं परिपोषयति । अयं 'करण'निकरातीत'कारुण्य'-सिन्धुः—"रषाभ्यां नो णः समानपदे"—इन्द्रियनिचयस्यातीतः अथच कारुण्यसिन्धुः, सुतरां भजनतो 'मूर्खेण' आप्तो ननु प्राप्तः खलु, कोऽपि 'तर्केण' न एति प्राप्नोति, विनीतमूर्खाणां समीपे करुणावशत आत्मप्रकाशं करोति ज्ञानाभिमानिनान्तु दुर्ज्ञेयत्वेन प्रतिभाति । कथं विदुषां समीपे तथा, तत्परिस्फुटयति ? 'दर्पेण' अहङ्कारेण अन्धः कुमतिविमतः कुत्सितबुद्धिविमतः अथच कुमतीत्याख्यया प्रसिद्धेन पाश्चात्यपण्डितेन विमतः जनः 'मार्गणे' परमेशानुसन्धाने चान्तिम् आपत् निवृत्तोऽभवत्, अज्ञेयत्वदुर्बुद्ध्या परम-पुरुषानुसन्धाने स्थगितगतिः । पर्य्याणद्ध इति । विषयनिगड़ैः विषयशृङ्खलैः 'पर्य्याणद्धः' सर्व्वतोभावेन बद्धः जनः चेत् यदि 'योगरूपेण' 'वर्म्मणा' आच्छन्नः भवति परि-हृतभयः भयशून्यः सन् नित्यं 'वृंहणं'—"अट्कुप्वाङ्नुम्व्यवायेऽपि"—परिवृद्धिम् उत्तरो-

रचस्तत्र द्रुणस इति संकीर्त्तितं भीतिमुच्चै-
र्धर्म्मध्वंसी जन इव न तु प्रापयत्याशु लोके ॥

(क) रषाभ्यां नो णः समानपदे [विस्तीर्णमीषणम्] ।

र-षाभ्यां समानपदे नः णः [स्यात्] (८।४।१) ।

ऋवर्णादिति वक्तव्यम् । * ।

(ख) अट्कुप्वाङ्नुम्व्यवायेऽपि[किरिणा चर्म्मणा यथा] ।

अट्-कु-पु-आङ्-नुम्-व्यवायेऽपि नः णः (८।४।२) ।

(ग) [स्यात् कल्याण] पूर्व्वपदात्संज्ञायामग [इष्यते] ।

अगः पूर्व्वपदात्संज्ञायां नः णः (८।४।३) ।

८६ । पुरगावणमासन्नं मिश्रकावणमुत्तमम् ।
सिध्रकावणमापूर्णं शारिकावणमिव वा ॥
कोटरावणमुत्कण्ठो गन्तुमग्रेवणन्त्वहो ।
संसारो वनतां यातो रोचते न कथञ्चन ॥

---

सरोन्नतिं याति प्राप्नोति । तत्र 'द्रुणसः'—"पूर्व्वपदात्संज्ञायामगः"—रचः राचसः इति संकीर्त्तितं धर्म्मध्वंसी जन इव न तु आशु लोके उच्चैः भीतिं प्रापयति । रचोनामश्रवणेऽपि न तथा भयं भवति यथा धर्म्मध्वंसपरस्य जनस्य नामश्रवणे इति फलितार्थः ।

८६ पुरगेति । आसन्नं निकटस्थं पुरं गच्छतीति पुरगः 'पुरगावणं', उत्तमम् 'मिश्रकावणं' इन्द्रोद्यानं 'सिध्रकावण' सिध्रकाख्यवृक्षविशेषप्रधानं वनं, आपूर्णं 'शारिकावणं' पक्षिविशेषप्रधानं वनं, 'कोटरावणं' कोटरप्रधानं वनम्, 'अग्रेवणं' वनस्याग्रे अग्रेवणम् —"वनं पुरगामिश्रकासिध्रकाशारिकाकोटराग्रेभ्यः"—अहो उत्कण्ठः सन् गन्तुं यातुं कथञ्चन न रोचते । कथम् ? संसारः वनतां यातः, वनत्वं प्राप्तः, "गृहमेव गृहस्थानां सुसमाहितचेतसाम् । शान्ताहङ्कृतिदोषाणां विजना वनभूमयः ॥" "अन्तर्मुखमना नित्यं सुप्तो बुद्धो व्रजन् पठन् । पुरं जनपदं ग्राममरण्यमिव पश्यति ॥" इति वशिष्ठोक्तदिशा ।

(क) [बालक] वनं पुरगामिश्रका-
सिध्रकाशारिकाकोटराग्रे-
भ्यः [कोटरावणं कथं याति]।

पुरगा-मिश्रका-सिध्रका-शारिका-कोटरा-ग्रेभ्यः पूर्व्वपदात्संज्ञायां वनं णः।(८।४।४)।

९७। कुत्र प्रवण गन्तव्यं निर्व्वणे किं न सिद्ध्यति।
अन्तर्व्वणे योगसिद्धिः श्रयेत् शरवणं न हि॥
इक्षुवणं महत् प्लक्षवणमाम्रवणं तथा।
खदिरवणमासन्नं पीयूक्षावणमेव वा॥

(क) [स्यात्] प्रनिरन्तःशरेक्षुप्लक्षा-
म्रकार्ष्यखदिरपीयूक्षाभ्योऽसं-
ज्ञायामपि [प्रवणो यातो हि]।

प्र-निर-न्तः-शरे-क्षु-प्लक्षा-म्र-कार्ष्य-खदिर-पीयूक्षाभ्यः संज्ञायाम् असंज्ञायामपि वनं णः (८।४।५)।

९८। शिरीषवणमध्यास्य वदरीवनमेव वा।
सिद्ध्येत्साधको दूर्व्वावणे मूर्व्वावनेऽपि च॥

---

९७। प्रवण इति। प्रगतौ-वनात् हे 'प्रवण'! कुत्र गन्तव्यम्, 'निर्व्वणे' जने किं न सिद्ध्यति योग इति शेषः, 'अन्तर्व्वणे' अन्तरवस्थिते वने योगसिद्धिः, न 'शरवणं' तृणभेदवनं 'इक्षुवणं' महत् 'प्लक्षवणं' तथा 'आम्रवणम्' आसन्नं निकटस्थं 'खदिरवणं' 'पीयूक्षावणं'—"प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि"—न आश्रयेत्। यतो गृहे स्थित्वा एव योगसिद्धिरतो न वनं गन्तव्यमिति भावः।

९८। शिरीषेति। 'शिरीषवणं' 'वदरीवनं' वा अध्यास्य चेत् यदि साधकः सिद्धः 'दूर्व्वावणे' 'मूर्व्वावने'—"विभाषौषधिवनस्पतिभ्यः"—लताविशेषप्रधानवने अपि च

(क) [स्याद्] विभाषौषधिवनस्पतिभ्यो [वदरीवनम्]।

औषधिवनस्पतिभ्यो वनं णः विभाषा (८।४।६)।

९९। ते देवदारुवनतः पाश्चात्या बहुसाधना हि।
विदारीवनमापद्य को वा भविता तादृशो नु॥

द्व्यचरत्र्यचरेभ्य इति वक्तव्यम्। *।

इरिकादिभ्यः प्रतिषेधो वक्तव्यः। *।

१००। पूर्व्वाह्णश्चेत् स्मरणमननैः कीर्त्तनैश्चापराह्णो
नो गच्छेत्तद्विफलितमहस्तन्निरह्नो दुरह्नः।

---

सिद्धः स्यादिति शेषः। पूर्व्वमृषिभिर्वदरीवणादिकमाश्रितं योगसिद्धय इति न मन्तव्यम्, यतः तत्स्थानामपि तेषां गृहस्थत्वं दृश्यते पत्न्यादिपरिवेष्टितत्वात्। सुतरां चित्तनिग्रहे सर्व्वत्रैव योगः सुलभ इति भावः।

९९। ते इति। ते पाश्चात्याः 'देवदारुवनतः'—"द्व्यचरत्र्यचरेभ्य इति वक्तव्यम्। *।" —हि बहुसाधनाः, ततो बहुविधं द्रव्यजातं सम्पादयन्ति। को वा 'विदारीवनं'— "इरिकादिभ्यः प्रतिषेधो वक्तव्यः। *।"—विदारी शालपर्णी भूमिकुष्माण्डे च तद्वनम् आपद्य प्राप्य तादृशः बहुसाधनः भविता नु, न कोऽपि भवेदित्यर्थः। पाश्चात्यानां क्रियाप्राधान्यं न तथा प्राच्यानां, यतस्ते निष्फलकार्य्यनिरता अतस्ते पाश्चात्या अस्माकं नत्रानुकरणीया इति फलितार्थः।

१००। पूर्व्वाह्ण इति। चेत् यदि 'पूर्व्वाह्णः' स्मरणमननैः 'अपराह्णः'—"अह्नोऽदन्तात्" —च कीर्त्तनैः भगवत इति शेषः नो न गच्छेत् तत् अहः दिनं विफलितं, तत् अहः 'निरह्नः' निर्गतम् अहः दिनरूपेण न तदह्नो गणितव्यमिति भावः, केवलं न निरह्नः

दीर्घाङ्गीयं शरदपि परब्रह्मपादारविन्दे
नाकर्षेद्यं स घृणितसुरावाहणप्राय एव ॥

(क) अङ्गोऽदन्तात्[पराह्णः पूर्व्वाह्णो बुद्धिमन् यथा]।

अदन्तात् पूर्व्वपदात् अङ्गो नः णः (८।४।७)।

अदन्तस्येति वक्तव्यम्। *।

(ख) [स्या]द्वाहनमाहितात् [तद्दर्भवाहणमुत्तमम्]।

आहितात् पूर्व्वपदात् वाहनं णः (८।४।८)।

१०१। पाश्चात्यास्ते विदितविगुणा नित्यमैरेयपाणाः
प्राच्याः पूर्व्वं प्रकृतिवशगा नीरपाणा हि सुस्थाः।
सम्प्रत्येते धनहरसुरापाणरागेण याता
दुर्भाग्यं तद्विकलकरणे चीरपानं कुतः स्यात् ॥

---

किन्तु 'दुरङ्ग.' निन्दितत्वात्। 'दीर्घाङ्गी'—"अदन्तस्येति वक्तव्यम्। *।"—दीर्घाणि अङ्गानि अस्या दीर्घाङ्गी इयं शरदपि यं परब्रह्मपादारविन्दे न आकर्षेत्—बहुवकाशा शस्यसम्पत्सम्पन्नेति तस्याः स्वभावत आकर्षकत्वम्—स जनः घृणित'सुरावाहण'प्राय एव—"वाहनमाहितात्"—उह्यतेऽनेनेति वाहनं सुराया वाहनं सुरावाहणं मद्यभाण्डविशेषः तत्तु अमेध्यत्वादस्पृश्यं तत्सदृश एष जनः परब्रह्मचिन्ताविरहितत्वात् सद्भिर्विगर्हित इति फलितार्थः।

१०१। पाश्चात्या इति। ते पाश्चात्याः विदितविगुणाः प्रत्यक्षीकृततीव्रसुरापानजनितानिष्टाः 'नित्यमैरेयपाणाः' नित्यं मैरेयं पानं येषां पैष्टीपाननिरताः—"मैरेयं धातकीपुष्पगुड़धानाम्लसम्भवम्"—पूर्व्वं पुरा प्रकृतिवशगाः प्रकृतिस्थाः प्राच्याः 'नीरपाणाः'—"पानं देशे"—हि सुस्थाः आसन्निति शेषः। सम्प्रति एते प्राच्याः धनहर'सुरापाण' रागेण धनहरं सुरा पीयतेऽनेनेति सुरापाणं सुरापात्रं तस्मिन् रागेण अनुरागवशात् दुर्भाग्यं याताः प्राप्ताः, तत् तस्मात् कुतः विकलकरणे इन्द्रियवैकल्यदशायां 'चीरपानं'—"वा भावकरणयोः"—दुग्धपानं स्यात्। एतेन सुरापानजनितवर्त्तमानदुरवस्था प्रद्योतिता।

(क) पानं देशे [सुरापाणाः प्राच्याः पाश्चात्यदोषतः]।

देशे पानं नस्य णः (८।४।६)।

(ख) भावकरणयोः [क्षीरपाणं परं हितं मतम्]।

भावकरणयोः पानं नस्य णः (८।४।१०)।

१०२। सर्व्वाः किमु गिरिणद्यो न गिरिनदीति विशेषणेन।
नास्ति प्रयोजनमत्र चक्रणदीति सविशेषेयम्॥

गिरिनद्यादीनामुपसंख्यानम्। *।

१०३। क्षीरपायिणि तेजस्त्वं नीरपायिनि सुस्थता।
क्षेत्राणि व्रीहिवापाणि माषवापानि यानि च॥
अमेध्याहारलोपानि नित्यं विदधते सुखम्।
व्रीहिवापेण निष्पन्नं माषवापेन किन्न वा॥

(क) [बाल] प्रातिपदिकान्तनुम् विभक्तिषु च [प्रिय]।

प्रातिपदिकान्त-नुम्-विभक्तिषु च पूर्व्वपदात् [उत्तरस्य] नस्य वा णः (८।४।११)।

---

१०२। सर्व्वा इति। सर्व्वाः किमु 'गिरिणद्यः', यतः हृदेभ्योऽपि नदी उत्पन्ना भवति ततः न सर्व्वा गिरिसमुत्पन्नाः। अतः 'गिरिनदी'ति विशेषणेन प्रयोजनं नास्तीति न। अत्र 'चक्रणदी'—"गिरिनद्यादीनामुपसंख्यानम्। *।"—इति इयं सविशेषा न कुत्रापि चक्रसम्भूतनद्या अवस्थितिसम्भवात्।

१०३। क्षीरपायिणीति। 'क्षीरपायिणि' पुनः पुनः क्षीरपाननिरते "बहुलमाभीक्ष्ण्ये" (३।२।८१) इत्यनेन णिन्, तेजस्त्वम् बलशालित्वं, 'नीरपायिनि' सुस्थता; यानि 'व्रीहिवापाणि' व्रीहीणां वापो वपनं यत्र 'माषवापानि' क्षेत्राणि तानि अमेध्याहारलोपानि अपवित्रभोजनतिरोधायकानि नित्यं सुखं विदधते। 'व्रीहिवापेण' व्रीहीन् वपतीति व्रीहिवापः तेन 'माषवापेण'—"प्रातिपदिकान्तनुम्विभक्तिषु च"—किं न वा निष्पन्नम्। सर्व्वेषां सुखदानेन ते धन्या न तु सुरामांसादिविक्रयिण इति भावः।

१०४। क्षत्रिययूना समरं विफलं कामैरार्य्ययूनाम्।
वृत्तं परिपक्वानि विदधाति हि साधनानि तेषान्तु॥

युवादीनां प्रतिषेधो वक्तव्यः। *।

१०५। को वा वृत्रहणः सत्रं सोमेनात्र विधास्यति।
सुरापाणि कुलान्यङ्ग निन्द्यन्ते नीरपेण यत्॥

(क) एकाजुत्तरपदे णः [स्याच्छत्रुहणि सम्मतिः]।

एकाजुत्तरपदे प्रातिपदिकान्त-नुम-विभक्तिषु पूर्व्वपदात् [उत्तरस्य] नस्य णः (८।४।१२)।

१०६। स्वर्गगामिणि नरे कृतार्थता
शुद्धितः करयुगाणि सत्कृतौ।
आकुलानि यदि नृत्वमन्यथा
तुल्यता खरयुगेण किं नहि॥

---

१०४। क्षत्रियेति। 'क्षत्रियूना'-सह समरं रणं विफलम्, न तत्र कश्चित् फललाभः प्रत्युत पापमेव। 'आर्य्ययूनां' कामैः रिपुभिः वृत्तं जातं समरं तु तेषां साधनानि हि 'परिपक्वानि'—"युवादीनां प्रतिषेधो वक्तव्यः। *।"—विदधाति, विना कामैः संग्रामं न साधनेषु परिपक्वतालाभः, अत एतत् समरम् एकान्तफलजनकमिति भावः।

१०५। को वेति। को वा 'वृत्रहणः' इन्द्रस्य सत्रं यज्ञम् अत्र समये सोमेन मद्यविशेषेण विधास्यति? कथं न कुर्य्यात्? 'नीरपेण' जलपायिना यत् यस्मात् अङ्ग हे बाल 'सुरापाणि'—"एकाजुत्तरपदे णः"—मद्यपानि कुलानि निन्द्यन्ते।

१०६। स्वर्गेति। 'स्वर्गगामिणि' नरे कृतार्थता कृतकृत्यता शुद्धितः, इन्द्रियादिजनितविकाररहित्यात्, न तु पुराणवर्णितभोगसाधनस्वर्गगमनेनेति भावः। सत्कृतौ साध्वनुष्ठाने यदि करयुगाणि नृणामिति शेषः आकुलानि सदा व्यस्तानि नृत्वम् मनुष्यत्वम्, अन्यथा 'खरयुगेण'—"कुमति च"—गर्द्दभयुगलेन तुल्यता किं नहि? न किमप्यसादृश्यमिति भावः।

(क) [स्यात्] कुमति च [कल्याण वृषगामिणि धीरता]।

कुमति उत्तरपदे प्रातिपदिकान्त-नुम्-विभक्तिषु पूर्व्वपदात् [उत्तरस्य] नस्य णः (८।४।१३)।

१०७। विश्वेशं यः प्रणमति प्रमीणाति दुःखन्त्वशेषं
प्रेमानन्दं तदनु प्रहिणोत्यत्र तेन प्रयाणि।
पारं को वा प्रणिगदति नो तस्य सत्यत्वमुर्व्वीं
सत्त्वे सौख्यात् परिणिनदति प्राप्तविश्रान्तिरस्मिन्॥
तत्पादे प्रणिपद्यते हि प्रणिपत्याशातिरिक्तं फलं
तेनात्र प्रणिदीयते मधुरिमा भक्तिः प्रणिश्यत्यहो।
अश्रेयः प्रणिधीयते हरिगुणः प्राप्तं प्रणिप्साति स
सन्तोषात्प्रणिहन्ति कामनिचयं नात्र प्रणिद्रात्यसौ॥

---

१०७। विश्वेशमिति। यः जनः विश्वेशं परमेश्वरं 'प्रणमति'—"उपसर्गादसमासेऽपि णोपदेशस्य"—भक्त्या नमस्करोति स अशेषं दुःखं 'प्रमीणाति' विनाशयति, तदनु प्रणामानन्तरं प्रेमानन्दं 'प्रहिणोति'—"हिनुमीना"—परिवर्द्धयति। तेन प्रणामेन अत्र संसारे पारं "'प्रयाणि'—'आनि लोट्'"—पारं गच्छानि। तस्य तद्वचनस्य सत्यत्वं को वा उर्व्वीं पृथिव्यां नो 'प्रणिगदति' न कथयति। किन्त्वान्यत् कथयति? अस्मिन् सत्त्वे भगवति प्राप्तविश्रान्तिः लब्धारामः सौख्यात् सुखहेतोः 'परिणिनदति' उच्चैर्ध्वनिं करोति। तत्पाद इति। तत्पादे परमेश्वरचरणे 'प्रणिपत्य' आशातिरिक्तं फलं 'प्रणिपद्यते' प्राप्नोति, तेन प्रणिपातेन अत्र भक्तिः मधुरिमा माधुर्यं 'प्रणिदीयते' अर्प्यते, अहो अश्रेयः 'प्रणिश्यति' विनाशं गच्छति, तेन जनेन हरिगुणः 'प्रणिधीयते' प्रणिधानविषयः क्रियते, स प्राप्तं भगवत्कृपया यदृच्छोपस्थितं भक्ष्यं सन्तोषात् 'प्रणिप्साति' भुंक्ते, कामनिचयं 'प्रणिहन्ति' उन्मूलयति, अत्र न असौ 'प्रणिद्राति' अनवहितो

श्रेयोऽशेषं नु परिणिमिमीतेऽस्य पादाब्जजन्म
को वा तत्संपरिणिमयतेऽनित्यभोगाभिलाषैः ।
सर्व्वं दुःखं खलु परिणिशाम्यत्यहो साधुसेव्यं
स्वर्गारामं परिणिचिनुतां तत्पदध्यानयोगात् ॥
साधूनां प्रणिदेग्धि पादविलसद्धूलिं सदा श्रद्धया
गर्व्वं स प्रणिवाति संप्रणिवहत्यानन्दमस्मिन् हरौ ।
शान्तिञ्च प्रणियाति सत्प्रणिवपत्यानन्दशस्यं मुदा
को नामात्र भवे सतां परिभवे प्रोत्साहमापद्यते ॥

---

भवति । श्रेय इति । को वा नु जनः अस्य पादाब्जजन्म भगवत्पदसम्भूतम् अशेषं श्रेयः 'परिणिमिमीते' परिमाणविषयं करोति ? न कोऽपीत्यर्थः । तत् श्रेयः को वा अनित्यभोगाभिलाषैः 'संपरिणिमयते' परिवर्त्तयते, भोगाभिलाषविनिमये को वा श्रेयः परिहरतीत्यर्थः । खलु निश्चितं तेन श्रेयसा सर्व्वं दुःखं 'परिणिशाम्यति' अहो तत्साधुसेव्यम्, साधुजनाभिलाषविषयः । तत्पादध्यानयोगात् परमेश्वरचरणानुचिन्तनात् स्वर्गारामं स्वर्गभोगानन्दं 'परिणिचिनुतां' सञ्चितं करोतु । साधूनामिति । यो जनः सदा श्रद्धया साधूनां पादविलसद्धूलिं 'प्रणिदेग्धि' गात्रे लिम्पति स गर्व्वं 'प्रणिवाति' प्रकृष्टरूपेण विनाशयति, अस्मिन् साधुयस्तद्धृदये हरौ आनन्दं 'संप्रणिवहति' अविच्छेदेन सञ्चारयति, साधुसम्माननया भक्तिसञ्चारः भक्त्या हरिपादारविन्दे नतिः, तस्मिन् सुखावाप्तिश्च, शान्तिञ्च 'प्रणियाति' प्रकृष्टरूपेण निश्चयेन प्राप्नोति, मुदा हर्षेण सत् आमोदशस्यं 'प्रणिवपति'—"नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च"—रोपितं करोति । अत्र भवे को नाम सताम् एवम्भूतानां साधूनां परिभवे धर्षणे प्रोत्साहम् आपद्यते दुर्ज्जनान् विना न कोऽपीत्यर्थः ।

(क) उपसर्गाद्समासेऽपि णोपदेशस्य [प्रणिदेशस्व (?)] [ष्यतेऽङ्ग]।

णोपदेशस्य [धातोः] नस्य उपसर्गात् असमासे समासे अपि णः (८।४।१४)।

(ख) हिनुमीना [प्रहिणोति],—

हिनु-मीना उपसर्गात् नस्य णः (८।४।१५)।

(ग) [स्यात्] आनि लोट् [प्रयाणि भोः]।

लोट् आनि उपसर्गात् नस्य णः (८।४।१६)।

(घ) नेर्गदनदपतपदघुमास्यति-
हन्तियातिवातिद्रातिप्साति-
वपतिवहतिशाम्यतिचिनोतिदे-
ग्धिषु च [प्रणिदेग्धि देहं हि सः]।

उपसर्गात् नेः नस्य णः गद-नद-पत-पद-घु-मा-स्यति-हन्ति-याति-वाति-द्राति-प्साति-वपति-वहति-शाम्यति-चिनोति-देग्धिषु (८।४।१७)।

१०८। आत्मार्थं यः प्रणिपचति तत्तस्य नाशाय शश्वत्
स्वार्थत्यागात् परिनिनयति प्राणदां भूतिमन्यः।
आत्मानं संपरिनिकुरुते मूलमस्योन्नतेस्तु
लोभात् कामात् परिनिखनति प्रन्युष प्राणिषि प्राण॥

---

१०८। आत्मार्थमिति। यो जनः आत्मार्थं केवलं स्वोदरपूरणार्थं 'प्रणिपचति' तत् आत्मार्थपचनं शश्वत् नाशाय तस्यात्मघाताय, स्वार्थत्यागात् अन्यो जनः प्राणदां भूतिम् उन्नतिं 'परिनिनयति' सर्व्वतोभावेनाधिगच्छति, लोभात् कामात् आत्मानं 'संपरिनि-कुरुते' सर्व्वतोभावेन निन्दितं करोति, अस्य जनस्य उन्नतेस्तु मूलं 'परिनिखनति' —"शेषे विभाषाऽकखादावषान्त उपदेशे"—सर्व्वतोभावेन उत्खातं करोति, हे 'प्रन्युष' कामस्य लोभस्य च हन्तः 'प्राण्' जीव 'प्राणिषि'—"अनितेः" "अन्तः"—असिषि अन्यथा जीवन्नेव मृत इति भावः।

(क) शेषे विभाषाऽकखादावषान्त उपदेशे [ऽ] ।

शेषे उपदेशे अकखादौ अषान्ते विभाषा नेः नस्य णः (८।४।१८) ।

(ख) अनितेः [प्राणिति प्रेम्णा],—

उपसर्गात् अनितेः नस्य णः (८.४।१९) ।

(ग) [स्याद्] अन्तो [हे पराण् यथा] ।

उपसर्गात् अनितेः अन्तः नः णः (८।४।२०) ।

१०९ । आत्मंश्चेत् प्राणिणिषसि सदा ब्रह्मपादारविन्द-
ध्यानानन्दैः प्रहणनपरो वासनानान्तु भूयाः ।
त्वञ्चाहं ता मनसि परिहण्वोऽत्र सर्व्वे प्रहण्म-
स्तासामन्तर्हणनविषये स्यात् परानुग्रहो नः ॥
देशोऽन्तर्हननस्त्याज्यः सदान्तरयणं शुभम् ।
देशोऽन्तरयनो रम्यो कुत्सितं प्रणसं सुखम् ॥

(क) [बालौ] भौ साभ्यासस्ये [दं प्राणिणद्दो नितराम्]।

साभ्यासस्य अनितेः उपसर्गात् उभौ नौ णः (८.४:२१) ।

---

१०९ । आत्मन्निति । हे आत्मन् चेत् यदि सदा ब्रह्मपादारविन्दध्यानानन्दैः 'प्राणिणिषसि'—"उभौ साभ्यासस्य"—प्राणान् धारयितुमिच्छसि वासनानान्तु 'प्रहणन'परो भूयाः । त्वम् अहञ्च मनसि ताः वासनाः 'परिहण्वः' हताः कुर्व्वः, सर्व्वे वयं 'प्रहण्मः'—"वमोर्व्वा"—विनष्टाः कुर्म्मः । तासां वासनानाम् अन्तर्हणनविषये नः अस्माकं परानुग्रहः परमेश्वरानुग्रहः स्यात् भवतु । ईश्वरकरुणां विना वासनानिवृत्तेरसम्भवात् तत्प्रार्थनम् । देश इति । अन्तर्हन्यतेऽस्मिन् 'अन्तर्हननः'—"अन्तरदेशे"—देशः त्याज्यः, सदा 'अन्तरयणं'—"अयनञ्च"—अन्तरवस्थितिः शुभं कल्याणकरम् । 'अन्तरयनो' देशः रम्यः मनोहरः, 'प्रणसं'—"उपसर्गाद्बहुलम्"—प्रगता नासिका अस्येति प्रणसं मुखं कुत्सितम् ।

(ख) [प्रहण्यते तत्] हन्तेरत्पूर्व्वस्य [बुद्धिमन्नहो]।

अत्पूर्व्वस्य हन्तेः उपसर्गात् नस्य णः (८।४।२२)।

(ग) वमोर्व्वा [तत्परिहण्वः परिहण्मो यथा प्रिय]।

वमोः हन्तेः अत्पूर्व्वस्य उपसर्गात् नस्य णः (८।४।२३)।

(घ) अन्तरदेशे [ऽन्तर्हणनम्],—

अदेशे हन्तेः अत्पूर्व्वस्य अन्तः [उत्तरस्य] नस्य णः (८।४।२४)।

(ङ) अयनञ्च [शुभेष्यति]।

अदेशे अयनं च अन्तः (उत्तरस्य) नस्य णः (८।४।२५)।

(च) उपसर्गाद्बहुलं [स्यात् प्रणसं मुखमानतम्]।

उपसर्गात् बहुलं नसः नस्य णः (८।४।२८)।

११०। प्रयाणमंहोनिचयात् प्रयायमाणां विशुद्धिं वितरत्यमुष्मै।
अहो प्रयाणीयमहत्प्रतिष्ठाप्रयायिणोनाभयतः प्रहीणाः॥
अप्रयाणिरहो भूयादेवं शापो विगर्हितः।
प्रभुग्नं जनमालोक्य परिहासोऽपि तादृशः॥

(क) क्षत्यचः [स्यात् प्रयाणं तत् प्रयाणीयं प्रहीणवान्]।

क्षति अचः [उत्तरस्य] उपसर्गात् नस्य णः (८।४।२९)।

---

११०। प्रयाणमिति। अंहोनिचयात् पापसमूहात् 'प्रयाणम्' दूरगमनं 'प्रयायमाणां' प्राप्यमाणां विशुद्धिं पवित्रताम् अमुष्मै जनाय वितरति। अहो 'प्रयाणीय'महत्प्रतिष्ठा-'प्रयायिणो' प्राप्या या महतां साधूनां प्रतिष्ठा स्थितिः तां प्रयान्ति ये जनाः ते न अभयतः 'प्रहीणाः' ते अभयवन्तो भवन्तीत्यर्थः। अहो 'अप्रयाणिः' "आक्रोशे नञ्यनिः" (३।३।१२) अकृतकृत्यो भूया इति शापो विगर्हितः साधुभिर्निन्दितः, 'प्रभुग्नम्'—"क्षत्यचः"—जनम आलोक्य दृष्ट्वा परिहासोऽपि तादृशः निन्दित इत्यर्थः।

१११। निर्व्विस्थानां भक्तिः सिद्ध्यति न पुनरनिर्व्विसस्य।
धर्म्मेऽप्यधिकृतिरेतत् तत्त्वं हि नियतपरीक्षाप्तम्॥

निर्विंसस्योपसंख्यानम्। *।

११२। प्रयापणैनेशगुणानुकीर्त्तनै-
र्दिनस्य नास्त्यस्य खलु प्रमापनम्।
प्रमोहनन्तच्चरणानुचिन्तनै-
र्हरत्यहो तद्विषयप्रकोपणम्॥

(क) णोर्विभाषा [प्रयापिण्यः],—

णेः कृति उपसर्गात् नस्य णः विभाषा (८।४।३०)।

(ख) हलश्चेजुपधात् [स्मृतः]।

इजुपधात् हलश्च कृति उपसर्गात् नस्य णः विभाषा (८।४।३१)।

---

१११। निर्व्विंणानामिति। 'निर्व्विंणानां'—"निर्व्विंसस्योपसंख्यानम्।" *।— विषयविरक्तानां भक्तिः सिद्ध्यति, न पुनः 'अनिर्व्विंसस्य' विषयविरक्तस्य धर्म्मेऽपि अधिकृतिः। अतएव मनुराह "अर्थकामेष्वसक्तानां धर्म्मज्ञानं विधीयते" इति। किं शास्त्रतएतज्ज्ञातव्यम्? नेत्याह एतत् तत्त्वं हि नियतपरीक्षाप्तम्। दृश्यते हि जनेषु विषयविरागविहीनानां भक्त्याभासो न स्थायी भवति नापि तेषां धर्म्मे प्रवेश इति।

११२। प्रयापणेनेति। ईशगुणानुकीर्त्तनैः दिनस्य 'प्रयापणेन', अस्य दिनस्य खलु 'प्रमापनम्'—"णेर्विभाषा"—विनाशो नास्ति, न केवलं परमेशगुणकीर्त्तनैः दिनस्य साफल्यं किन्तु जीवनगतसत्फललाभेन तस्य स्थायित्वमित्यस्याविनाशः। तच्चरणानुचिन्तनैः तस्य परमेश्वरस्य चरणानुध्यानैः 'प्रमोहन' मुग्धभावः अहो तत् प्रसिद्धं 'विषय'प्रकोपणं'—"हलश्चेजुपधात्"—विषयाणाम् अत्यावेगं हरति। परमेश्वरे विमुग्धस्य विषयैरपराभवस्तेषु तस्यानभिनिवेशात्।

११३। प्रेङ्खणे न मनसः प्रमङ्कनं
व्यर्थमेव वचसा प्रणिंसनम्।
श्रेयसां किमु पुनः प्रनिचनं
सर्व्वमेव कपटे प्रणिन्दितम्॥

(क) इजादेः सनुमो [बाल प्रेङ्खणं प्रोम्भणं यथा]।

सनुमः इजादेः हलः कृति उपसर्गात् नस्य णः (८।४।३२)।

(ख) वा निंसनिक्षनिन्दां [स्यात् प्रणिंसनप्रनिक्षणे]।

निंस-निक्ष-निन्दाम् उपसर्गात् वा नस्य णः (८।४।३३)।

११४। प्रभानं चित्तस्य प्रभवनमहो ध्याननिरते
न चेतस्तच्छून्ये परिपवनमाविन्दति पुनः।
निकामं कामानां प्रकमनमप्यायनमसत्
प्रवेपिन्या बाल प्रगमनमबुद्ध्या भवतु न॥

---

११३। प्रेङ्खण इति। 'प्रेङ्खणे' प्रचलने चाञ्चल्ये इति यावत् न मनसः 'प्रमङ्कनम्'—"इजादेः सनुमः"—मण्डनम्। अचाञ्चल्यं हि मनसो भूषणम्, ततस्तस्यान्तर्भूताद्भुतशक्तिनिचयस्य विकाशलाभात्। वचसा वाङ्मात्रेण 'प्रणिंसनं' परिचुम्बनं व्यर्थमेव, किमु पुनः श्रेयसां 'प्रनिक्षण'' परिचुम्बनं तेनेति शेषः। कपटे सारल्यविहीने जने सर्व्वमेव 'प्रनिन्दितम्'—"वा निंसनिक्षनिन्दाम्"—तथा वागाड़म्बरेणानुरागप्रदर्शनं विफलं यदि न ततः श्रेयोलाभः; प्रेम्णोऽतिविशुद्धतातो हि यतस्तस्योदयः।

११४। प्रभानमिति। अहो ध्याननिरते जने चित्तस्य 'प्रभानम्' आलोकसम्पन्नत्वम्, 'प्रभवनं' शक्तिसम्पन्नत्वम्, तच्छून्ये ध्यानशून्ये जने न पुनः चेतः 'परिपवनम्' विशुद्धिम् आविन्दति प्राप्नोति, निकामं सातिशयं कामानां 'प्रकमनम्' अभिलषणम् असत्, 'अप्रप्यायनम्' तृप्तिविरहितम्। हे बाल 'प्रवेपिन्या' स्थिरताविरहितया अबुद्ध्या 'प्रगमनम्'—"न भा-भू-पू-कमि-गमि-प्यायि-वेपाम्"—गतिः न भवतु। स्थिरया बुद्ध्या सर्व्वमनुष्ठातव्यम्, न तु चञ्चलया।

(क) न भाभूपूकमिगमिप्यायिवेपां [प्रवेपनम्]।

भा-भू-पू-कमि गमि-प्यायि वेपां कृति उपसर्गात् नस्य णः न (८।४।३४)।

११५। चित्तप्रभापनन्तु प्रसिद्ध्यति समाधानतोऽत्र।
असमाहितचित्तानां निखिलं परिभावनमूलं हि.॥

ण्यन्तानामुपसंख्यानम्। *।

११६। दुष्पाननिष्पानमहो प्रतिष्ठं
प्रनष्ट एषोऽत्र सुरातियोगात्।
गुणान् समस्तान् हरते नृणां सो-
र्म्मिवायुयोगेन तटं नदीव॥

(क) षात् पदान्तात् [ यजुष्पानं सर्पिष्पानं यथा शिशो]।

पदान्तात् षात् नस्य णः न (८।४।३५)।

(ख) नशेः षान्तस्य [कल्याण प्रनष्टः परिणश्यति]।

षान्तस्य नशेः णः न (८।४।३६)।

---

११५। चित्तेति। चित्त'प्रभापनम्' आलोकसम्पन्नकरणं समाधानतः प्रसिद्ध्यति सिद्धं भवति। अत्र असमाहितचित्तानां निखिलं सर्व्वं हि 'परिभावन'मूलम्—"ण्यन्तानामुपसंख्यानम्। *।"—तिरस्कारस्य अभिभवस्य वा निमित्तम्। सर्व्वतस्तस्य परिभवो निश्चितः, सर्व्वैश्चकृतकृत्यता च।

११६। दुष्पानेति। 'दुष्पाननिष्पानम्'—"षात्पदान्तात्"—दुष्पानस्य निष्पानम् अहो प्रतिष्ठम् शारीरमानससुस्थताविधानेन सुस्थितम्। एष जनः अत्र सुरातियोगात् 'प्रनष्टः' —"नशेः षान्तस्य"—। सा सुरा नृणां समस्तान् 'गुणान्'—"पदान्तस्य"—नदी 'ऊर्म्मिवायुयोगेन'—"पदव्यवायेऽपि"—ऊर्म्मिश्च वायुश्च तयोः योगेन तटम् इव हरते।

(ग) पदान्तस्य [यथा वृत्रान्] ;—

पदान्तस्य नस्य णः न (८।४।३७)।

(घ) [स्यात्] पदव्यवायेऽप्य[ह्नौ]।

पदव्यवाये नस्य णः न (८।४।३८)।

११७। स्यात् शुष्कगोमयेण स्थलशुद्धिरिति न मूर्खवादः।
विज्ञानसिद्धमेतत् पर्य्यवनिन्दितमज्ञानेन॥

अतद्धित इति वाच्यम्। *।

११८। हरिनन्दन एषोऽयं प्रकृत्या हरिनन्दनः।
न क्षुभ्नात्यथ तृप्नोति नरीनृत्यत ईहते॥

(क) क्षुभ्नादिषु च [क्षुभ्नन्ति यथा नृनमनः शुभ]।

क्षुभ्नादिषु नस्य णः न (८।४।३९)।

इति दृष्टान्तसर्व्वस्वे दृष्टान्तानुगमने संहितायां णत्वाश्रयसंहितानुकथनं नाम सप्तमं प्रकरणम्।

---

११७। स्यादिति। 'शुष्कगोमयेण'—"अतद्धित इति वाच्यम्।*।"—स्थलशुद्धिः स्यात् इति न मूर्खवादः। कथम्? एतत् विज्ञानसिद्धम् आधुनिकविज्ञानस्य सिद्धान्तेऽपि तथा दर्शनात्। कथं तदनेके निन्दन्ति? अज्ञानेन पर्य्यवनिन्दितम्।

११८। हरिनन्दन इति। 'हरिनन्दनः' एषोऽयं जनः प्रकृत्या न केवलं नाम्ना हरिनन्दनः। कथम्? न 'क्षुभ्नाति'—"क्षुभ्नादिषु"—क्षुब्धो भवति, अथ 'तृप्नोति' सर्व्वास्ववस्थासु तृप्तिं लभते, 'नरीनृत्यते' पुनः पुनः नृत्यं करोति, ईहते चेष्टां कुरुते। अवस्थात्रयगो नानन्दं परमेश्वरे जहाति, अतोऽयं हरिनन्दन एव।

इति दृष्टान्तव्याख्याने सप्तमं प्रकरणम्।

---

# हल्विषया संहिता ।



११९ । यश्चिनोति बलमत्र हृच्छयो-
च्छेदनेन स जगज्जयी खलु ।
मज्जतीह परमे स्वतश्शुभे
याच्ञया स सफलो न यत्नतः ॥

(क) स्तोः श्चुना श्चुः[रिमे वृत्ताश्छादयन्ति शिलोच्चयम्] ।

स्-तोः श्-चुना श्-चुः भवति (८।४।४०) ।

१२० । प्रयत्नष्षण्ढत्वं भजति करणैष्टल्यत इह
स पिष्टा कामांश्चेड्डयत इतराद्‍ड्डति सुखम् ।
स्वकर्त्तव्यं मातुश्चरणमधुलिट् तत्त्वमनुयन्
विदन् षण्णां बाधां भवतु स इव प्रश्न इह कः ॥

---

११९ । य इति । 'हृच्छयोच्छेदेन' कामादीनामुच्छेदेन अत्र बलं 'यश्चिनोति' स खलु 'जगज्जयी', 'स्वतश्शुभे' इह परमे परमेश्वरे 'मज्जति' । कथमेवं स कृतार्थः ? 'याच्ञया' सः सफलः न 'यत्नतः'—"स्तोः श्चुना श्चुः"—प्रार्थनया छन्नतया साधकस्य परमेश्वरे निमग्नभावो सिद्ध्यति, न तु यज्ञाद्यनुष्ठानेन ।

१२० । प्रयत्न इति । इह संसारे 'प्रयत्नष्षण्ढत्वं' भजति प्रयत्नः निष्फलत्वं गच्छति, 'करणैष्टल्यते' इन्द्रियाणि वैक्लव्यं भजन्ते । स जनः कामान् 'पिष्टा' 'चेड्डयते', ऊर्द्ध्वभूमिमारोहति इतरात् नीचसांसारिकविषयात् । तेन किं भवति ? सुखं यथा स्यात् तथा स्वकर्त्तव्यम् 'अड्डति'—"ष्टुना ष्टुः"—निर्व्वहति मातुश्चरण'मधुलिट् तत्त्वम्' अनुयन् अनुगच्छन्—"न पदान्ताट्टोरनाम्"—मधुलिट् साधुमनुयन्निति पाठे सकारस्योदाहरणम्—'विदन् षण्णां'—"तोः षि"—षट्संख्यकानां रिपूणां बाधां स इव कामान् पिष्टा इव भवतु इह कः 'प्रश्नः' । यतः इन्द्रियसंयमाद्धर्म्मजीवनारम्भः, अतस्तदारम्भे

देहेऽङ्ग चतुरशीत्या षण्णवतिरिह खलु पेशीनाम्।
संख्याः शुभ विज्ञेया अस्थ्नां बन्धननिमित्तं ताः॥

(क) ष्टुना ष्टुः [स्तरुणष्षण्डः कृषीष्टाः सोऽट्टति सुखम्]।
स्-तोः ष्-टुना ष्-टुः भवति (८।४।४१)।

(ख) न पदान्ताट्टोरनाम् [स्यान्मधुलिट् तरति प्रिय]।
पदान्तात् टोः स्-तोः अनाम् ष्-टुः न (८।४।४२)।

(ग) तोः षि [स्यादग्निचित् षण्डे]—
तोः षि पूर्व्वोक्तं न (८।४।४३)।

(घ) शात् [प्रश्नोविश्न एधते]।
शात् तोः पूर्व्वोक्तं न (८।४।४४)।

१२१। न वाङ्निष्पत्तिरत्रास्ति भजेशं नियतं हरिम्।
वैपरीत्ये भवेद्नैव सुखं जात्वचलन्नर॥

---

तत्सफलतायां च न कोऽपि संशयः कर्त्तव्यः। देह इति। अङ्ग हे शुभ चतुरशीत्या 'षण्णवतिः'—"अनाम्नवति नगरीणामिति वक्तव्यम्।*।"—अशीत्यधिकं शतं इह देहे पेशीनां संख्याः विज्ञेयाः; ताः पेश्यः अस्थ्नां बन्धननिमित्तम्। ताभिरस्थीनि दृढ़बद्धानि तिष्ठन्ति। तासां संस्थानं यथा, षट्चत्वारिंशदूर्द्ध्वस्य जनपथाश्रदन्तके। अधःस्थे जठरे द्वाविंशतिश्च त्र्यधिका पुनः। षष्टिः शिरसि घाटायां पेशीसंख्याः खलु स्मृताः॥ अन्तकं करचरणाङ्गसमूहः।

१२१। न वाङिति। नियतम् ईशं हरिं भज, अत्र न 'वाङ्निष्पत्तिः' अस्ति। कथम्? वैपरीत्ये भजनस्येति शेषः जातु कदाचित् 'अचलन्नर' हे नर अचलत् स्थिरं सुखं 'भवेद्नैव'—"यरोऽनुनासिकेऽनुनासिको वा"—निश्चितं न भवेत्।

(क) [स्याद्] यरोऽनुनासिकेऽनुनासिको वा [जगन्नवम्]।

पदान्तस्य यरः अनुनासिके अनुनासिकः वा (८।४।४५)।

१२२। वाङ्मयमेतन्निखिलं ध्रुवमस्तीति रटितुं हि तन्मात्रम्।
प्रभवति न तर्ककुशलस्ततोऽधिकं तं तु प्रतिपत्तुम्॥

प्रत्यये भाषायां नित्यमिति वक्तव्यम्। *।

१२३। नार्को भासयते ब्रह्म न तमोऽपह्नुते च तत्।
साद्ध्च भासते चित्ते भक्त्या ह्यालोकिते पुनः॥

(क) अचोरहाभ्यां द्वे [बाल],—

अचः रहाभ्याम् [उत्तरस्य] यरो द्वे [भवतः] (८।४।४६)।

(ख) [भवेद्] अनचि च [प्रिय]।

अचः [उत्तरस्य] यरः द्वे [भवतः] अनचि (८।४।४७)।

---

१२२। वाङ्मयमिति। ध्रुवम् अस्तीति एतन्निखिलं वाङ्मयम्—"प्रत्यये भाषायां नित्यमिति वक्तव्यम्। *।"—"नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा। अस्तीति ब्रुवतोऽन्यत्र कथन्तदुपलभ्यते" इति श्रुत्युक्तन्यायात्—जनः तन्मात्रं हि रटितुं प्रभवति वक्तुं सक्षमो भवति। तर्ककुशलः ततोऽधिकं तं परमेश्वरं प्रतिपत्तुं न प्रभवतीति शेषः।

१२३। नार्क इति। 'अर्कः' सूर्य्यः न 'ब्रह्म' परमात्मानं भासयति, न तमः अन्धकारः तत् ब्रह्म 'अपह्नुते' च—"अचो रहाभ्यां द्वे"—आच्छादयति। तत्कथं तद्दर्शनं सम्भाव्यते? 'साद्ध्च'—"अनचि च"—भक्त्या हि आलोकिते चित्ते पुनः भासते। "न तत्र सूर्य्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्व्वं तस्य भासा सर्व्वमिदं विभाति॥" "भक्तिरेवैनं दर्शयती"त्यादिभिः श्रुतिभिरिदमेव प्रकाश्यते।

(१) [बाल] स्थानिवदादेशोऽनल्विधौ [स्यादन्नुवी वचि] (१।१।५६) ।

(२) अचः परस्मिन् पूर्व्वविधा[ववधीद् बहुखट्टकः] (१।१।५७) ।

(३) [बालक सुविनिश्चिनु] न पदान्त-
द्विर्व्वचनवरेयलोपस्वरस-
वर्णानुस्वारदीर्घजश्चर-
विधिषु [तानि सन्ति द्वयत्र यथा] (१।१।५८) ।

(४) [विज्ञेयो]ऽदर्शनं लोपो[जीरदानुर्यथाशुभ](१।१।६०)

(५) संयोगान्तस्य लोपः [स्याद्यवमान् कृतवान् यथा] (८।२।२३) ।

१२४ । उल्कापिण्डं भ्रष्टं मनुते ना तारकापातम् ।
सुध्यग्नुपमबुद्धौ वत्सरगणिते स्थिथतिमान् स तावत्त् ॥

यणो मय इति वाच्यम् । * ।
शरः खय इति वाच्यम् । * ।
अवसाने द्वे इति वाच्यम् । * ।

---

१२४ । उल्केति । ना साधारणो मनुष्यः 'उल्का'पिण्डं—"यणो मय इति वाच्यम् । * ।"—(यणोऽत्र पञ्चमी मयोऽत्र षष्ठी) तारकापातम् आकाशपथात् तारकास्खलनं मनुते विज्ञानविज्ञज्ञानाभावात् 'सुध्य्र'नुपमबुद्धौ—"यणो मय इति वाच्यम् ।*."—(यणोऽत्र षष्ठी मयोऽत्र पञ्चमी) सुधीनां पण्डितानाम् अनुपमबुद्धौ स उल्कापिण्डः 'वत्स्सर'गणिते—"शरः खय इति वाच्यम् । * ।"—(अत्रापि पूर्व्ववत् बोध्यम्) वर्षगणनायां 'स्थ्थितिमान्' 'तावत्त्'—"अवसाने द्वे इति वाच्यम् । * ।"—उल्कापिण्डानां वर्षमध्ये दृक्पथगमनकालोऽस्तीति ज्योतिर्विद्भिर्निर्णीतम् ।

१२५ । पुत्रादिनीति साक्रोशाद्यदि त्वामाक्षिपत्यहो ।
मा क्रुधस्त्वं क्षमा लोके सर्व्वत्र परिपूजिता ॥

(क) [स्यान्] नादिन्याक्रोशे पुत्रस्य [पुत्रादिनी त्वम्] ।

आदिनी [परतः] आक्रोशे पुत्रस्य न द्वे [भवतः] (८।४।४८) ।

१२६ । पापे त्वं पुत्रहती उ पुत्रपुत्रादिनी त्वमसि पापे ।
त्वं भवसि पुत्त्रजग्धी पाप इति रटतु मृष्य वत्से ॥

तत्परे चेति वक्तव्यम् । * ।

वा हतजग्धपर इति वक्तव्यम् । * ।

चयो द्वितीयाः शरि पौष्करसादेः । * ।

१२७ । सच्चन्द्रमाः कर्षति चित्तमस्य
ब्रह्मण्यहो पात्रमसौ हि भक्तेः ।

---

१२५ । पुत्रेति । सा आक्रोशात् यदि त्वाम् अहो 'पुत्रादिनी'ति—"नादिन्याक्रोशे पुत्रस्य"—आक्षिपति, त्वं मा क्रुधः आक्रोशं मा कार्षीः । कथम् ? लोके क्षमा सर्व्वत्र परिपूजिता । "क्षमा गुणो ह्यशक्तानां शक्तानां भूषणं क्षमे"त्यादिभिर्वाक्यैः ।

१२६ । पाप इति । पापे त्वं 'पुत्रहती' उ सम्बोधने पापे त्वं 'पुत्रपुत्रादिनी' —"तत्परे चेति वक्तव्यम् । * ।"—त्वं पापे 'पुत्रजग्धी'—"वा हतजग्धपर इति वाच्यम् । * ।"—भवसि इति रटतु सा मुखरा नारीति शेषः, 'वत्से'—"चयो द्वितीयाः शरि पौष्करसादेः । * ।"—(पक्षे वत्से) मृष्य क्षमस्व ।

१२७ । सच्चन्द्रमा इति । स'च्चन्द्रमाः'—"चिप्रभृतिषु शाकटायनस्य"—साधिन्दुः 'ब्रह्मणि'—"सर्व्वत्र शाकल्यस्य"—अस्य जनस्य चित्तं 'कर्षति'—"शरोऽचि" —आकृष्टं करोति, साधुदर्शनमात्रं परब्रह्मणि चित्तं धावति, हि अतएव असौ साधुः

लब्धुं पदन्तूच्चतमञ्च बोद्धुं
दोग्धुञ्च गां सम्पदगण्यशेषा ॥

(क) शरोऽचि [बालकाकर्षोऽच्चदर्शो वर्षति श्रियः]।
शरः अचि [परतः] न द्वे [भवतः] (८।४।४९)।

(ख) [स्यात्] त्रिप्रभृतिषु शाकटायनस्यो [द्व एष भो]।
त्रिप्रभृतिषु [वर्णेषु] शाकटायनस्य [मते] न [भवति] (८।४।५०)।

(ग) [स्यात्] सर्व्वत्र शाकल्यस्य।
[सोऽर्कस्तर्को ब्रह्मारामः] ॥
शाकल्यस्य [मते] सर्व्वत्र न द्विर्व्वचनं (८।४।५१)।

(घ) [दात्रं पात्रं भवेद्]दीर्घादाचार्य्याणां[हि बुद्धिमन्]।
आचार्य्याणां [मते] दीर्घात् [उत्तरस्य] न द्वित्वम् (८।४।५२)।

(ङ) झलां जश् झशि [बोद्धव्यं दोग्धा लब्धा धनस्य सः]।
झशि झलां जश् [भवति] (८।४।५३)।

(१) झलां जशोऽन्ते [वागत्र श्वलिडत्र चिदंशवान्]।
अन्ते [पदस्य विद्यमानानां] झलां जशः [भवन्ति] (८।२।३९)।

१२८। चखान मूलं न बभार खेदं
चचार भूमौ बुबुधे न वृत्तम्।

---

भक्तैः सखानस्य 'पात्रम्'—"दीर्घादाचार्य्याणाम्"—उच्चतमं पदम् तु 'लब्धुं' 'बोद्धुं' च गां स्वर्गं 'दोग्धुं' च—"झलां जश् झशि"—'सम्पदगण्यशेषा'—"झलां जशोऽन्ते"—अगण्यशेषा शेषगणनाविरहिता सम्पत् अस्य साधोरिति शेषः।

१२८। चखानेति। मूलं 'चखान' उत्खातं कृतवान् अथच खेदं न 'बभार' तज्जन्यं खेदं न कृतवान्, भूमौ पृथिव्यां चचार विचरणं कृतवान् अथच वृत्तं चरित्रं न 'बुबुधे'—

भेत्ता सुखस्यास्य जनस्य या त्वक्
पश्वोस्तु मण्डूकरुतोपमा वाक् ॥

(क) अभ्यासे चर्च्च [सा तस्थौ तिष्ठासति बुभूषति] ।

अभ्यासे [वर्त्तमानानां] झलां चर् जश् च (८।४।५४) ।

प्रकृतिचरां प्रकृतिचरः प्रकृतिजशां प्रकृतिजश इति वक्तव्यम् । * ।

(ख) खरि चा[त्र न भेत्तव्यमारिप्सन्ते युयुत्सते] ।

खरि च झलां चर् (८।४।५५) ।

(ग) वावसाने [श्वलिट् त्रिष्टुब् वाक् वाग् विट् वित् यथा शुभ] ।

अवसाने [वर्त्तमानानां] झलां वा चर् (८।४।५६) ।

१२९। मधुरं न मधु प्राणभृतां नाम हरेर्मधुँ ।
न गङ्गा स्वर्धुनी पुण्या तद्भक्तिः खलु स्वर्धुनीँ ॥

(क) [बालका]ऽणोऽप्रगृह्यस्यानुनासिक [इदं दधिँ] ।

अवसाने अप्रगृह्यस्य अणः वा अनुनासिकः (८।४।५७) ।

---

"अभ्यासे चर्च्च"—"प्रकृतिचरां प्रकृतिचरः प्रकृतिजशां प्रकृतिजश इति वक्तव्यम् । * ।" —तन्मर्य्यादाबोधहीनः। एवमबुद्धेः किं फलम् ? सुखस्य 'भेत्ता'—"खरि च"— सुखस्योच्छेदकः। अस्य जनस्य या 'त्वक्' सा तु पश्वोः, अस्य 'वाग्'—"वावसाने"— मण्डूकरुतोपमा दर्द्दुरकर्कशरवसदृशी। सर्व्वमस्मिन् विफलमिति भावः।

१२९। मधुरमिति। प्राणभृतां जनानां सम्बन्धे मधु न मधुरं हरेः भगवतः नाम 'मधुँ' पुण्या गङ्गा न 'स्वर्धुनी' स्वर्णदी तद्भक्तिः भगवद्भक्तिः खलु निश्चितम् 'स्वर्धुनीँ'— "अणोऽप्रगृह्यस्यानुनासिकः"— ।

१३०। शङ्कनीयमिदमेव वाञ्छितं
नन्दितं भवति कुण्ठितन्न यत्।
पापकर्म्मणि वलल्लुनाति चो-
त्तम्भितोत्थितमसौ विनश्यति॥

(क) [स्याद्] अनुस्वारस्य ययि परसवर्णं [इन्यति]।

ययि अनुस्वारस्य परसवर्णः (८।४।५८)।

(ख) वा पदान्तस्य [विद्मियन्तं कथं तङ्कथं वदेत्]।

ययि पदान्तस्य अनुस्वारस्य वा परसवर्णः (८।४।५९)।

(ग) तोर्लि [तस्मिन् महल्लच्यं स भवाँल्लोकपावनः]।

लि तोः परसवर्णः (८।४।६०)।

(घ) उदः स्थास्तम्भोः पूर्व्वस्य [यथोत्तम्भितमुत्थितम्]।

उदः स्थास्तम्भोः पूर्व्वस्य सवर्णः (८।४।६१)।

१३१। वाग्घतोऽयमपि चेन्न वाग्हत-
श्चेद्धितं स मनुतेऽङ्ग तद्-द्धि तम्।

---

१३०। शङ्कनीयमिति। इदमेव 'वाञ्छितम्' अभिलाषः 'शङ्कनीयं'—"अनुस्वारस्य ययि परसवर्णः"—पापकर्म्मणि यत् 'वाञ्छितं' 'नन्दितं' भवति 'कुण्ठितन्न'—"वा पदान्तस्य"—'वलल्लुनाति'—"तोर्लि"—वृद्धिं गच्छत् उच्छिन्नं करोति च जनमिति शेषः। किम्भूत्वा 'उत्तम्भितोत्थितं'—"उदः स्थास्तम्भोः पूर्व्वस्य"—अग्रे उद्दीपितं पश्चात् उत्थितं प्ररूढ़ावस्थां गतम्। किञ्चास्य फलम् भवति? असौ वाञ्छितवान् जनः विनश्यति विनाशं गच्छति। इच्छैव स्वर्गस्य नरकस्य च हेतुरिति फलितार्थः।

१३१। वाग्घत इति। अपि चेत् अयं जनः 'वाग्घतः' न 'वाग्हतः' वाचा कर्कशया हतोऽपि न वाग्हतः नभोवत् निर्लिप्तचित्ततया न तत्र परुषा वाणी स्थितिपदं लब्धवती, 'चेद्धि' तं जनं हन्तारमिति शेषः 'तद्द्धि तम्'—"झयो होऽन्य-

ईश्वरोच्छ्सनतो विभाति चा-
दित्यवत्तदनुगम्य चर्धिमान् ॥

(क) झयो ह्योऽन्यतरस्यां [वाग्घसति प्रिय वाग्हसन्] ।

झय: [उत्तरस्य] ह: पूर्व्वसवर्ण: अन्यतरस्याम् (८।४।६२) ।

(ख) शश्छोटि [स्याच्छवलितं तच्छिवं तच्छयन् बभौ] ।

झय: [उत्तरस्य] श: अटि [परत:] छ: (८।४।६३) ।

(ग) हलो यमां यमि लोप [आदित्यं हविरेधते] ।

हल: [उत्तरेषां] यमां यमि लोप: अन्यतरस्याम् (८।४।६४) ।

(घ) झरो झरि सवर्णे [स्यात् मरुत्तोऽवत्तमात्तवान्] ।

सवर्णे झरि झरो लोप: अन्यतरस्याम् (८।४।६५) ।

इति दृष्टान्तसर्व्वस्वे दृष्टान्तानुगमने संहितायां हल्विषय-
संहिताकथनं नामाष्टमम् प्रकरणम् ।
समाप्तञ्चेदं प्रकरणम् ।

—०—

---

तरस्याम्"—तस्मात् हननं कृतवानिति हेतो: हि स तं हितम् उपकारकं प्रियं वा मनुते, ईश्व'रोच्छ्सनत:'—"शश्छोटि"—ईश्वरनि:श्वसितात् विभाति, 'आदित्य'वत्—"हलो यमां यमि लोप:"—तद् देवश्वसितम् अनुगम्य 'चर्धिमान्'—"झरो झरि सवर्णे"—ऐश्वर्य्यसम्पन्न: । ज्ञानप्रेमपुण्यादिकं सर्व्वं तेनोपायेन लभ्यत इति ऐश्वर्य्यवत्ता ।

इति संहिताघटितदृष्टान्तव्याख्यायामष्टमम्
प्रकरणम् । हत् ।

—०—

# कारकम् ।



अर्थबोधः समासेषु तस्य यद्वाक्यतो भवेत् ।
विभज्य पदजातञ्च प्रकृतिप्रत्ययाश्रयम् ॥
कल्पनया विभागश्चानान्वयव्यतिरेकतः ।
उन्नीय तत्समापत्तिरतो हि संहितामनु ॥
कारकञ्च समासश्चातिङन्तं प्रतिबोध्यते ।
प्रकृतिप्रत्ययानाञ्च विभागस्तदनन्तरम् ॥

१३२ । वृत्ताद्धीना न शोभन्ते धर्म्माद्भ्रष्टाः कथञ्चन ।
नोत्पादयन्ति विश्वासं पलायध्वं ततस्ततः ॥

(क) कारक[इत्यधिकारः संज्ञाविषयकः स्मृतः](१।४।२३)।

(१)आ कडारादेका संज्ञा[स्यादत्राधिकृतिः शिशो](१।४।१)।

(ख) [विज्ञेयं] ध्रुवमपायेऽपादानं [पतितो रथात्] ।

अपाये ध्रुवम् अपादानम् (१।४।२४) ।

१३३ । विरमतु विषयान्नियतं जुगुप्सतामतिचरणाज्जातु।
न प्रमाद्यतु स्वकृत्यात् प्रभवति हि ततो निरोद्धु-
मपनीतिम् ॥

जुगुप्साविरामप्रमादार्थानामुपसंख्यानम् । * ।

---

१३२ । वृत्तादिति । 'वृत्तात्' चरित्रात् हीनाः जना न शोभन्ते 'धर्म्मात्' भ्रष्टाः कथञ्चन विश्वासं न उत्पादयन्ति, ततः तस्मात् 'ततः'—"कारके"—"ध्रुवमपायेऽपादानम्"—तेभ्यो जनेभ्यः पलायध्वं दूरं गच्छ । न तत्र वासः कर्त्तव्यः ।

१३३ । नियतं 'विषयात्' विरमतु, 'अतिचरणात्' अत्याचारात् जुगुप्सतां, जातु कदाचित् 'स्वकृत्यात्' स्वानुष्ठितात् न 'प्रमाद्यतु'—"जुगुप्साविरामप्रमादार्थानामुप-

१३४ । बिभेति पापात्परिरचितुं चया-
न्मनः स चोद्विग्नधियारिसंयुगात् ।
न साधनाचेत् स पराजितो द्विष-
न्न शक्नुयाद् वारयितुं तमुन्नतिः ॥

(क) भीत्रार्थानां भयहेतु[स्त्रायतेऽस्माद्बिभेत्यतः] ।

भीत्रार्थानां भयहेतुः अपादानम् (१।४।२५) ।

(ख) [स्यात्] पराजेरसोढो[ऽसौ किं पराजयते श्रमात्] ।

पराजेः असोढः अपादानम् (१।४।२६) ।

(ग) [विघ्नेयं] वारणार्थानामीप्सितो [वारयत्यतः] ।

वारणार्थानाम् ईप्सितः अपादानम् (१।४।२७) ।

१३५ । स चान्तर्द्धत्तेऽस्माज्जनविमुखादीश्वर इह
ततोऽधीते शास्त्रं श्रुतिनयविदस्तत्तु विफलम् ।

---

संख्यानम् । * ।''—। कथमेवं कुर्य्यात्? हि यस्मात् ततः विरामादितः अपनीतिं निरोद्धुं जनः प्रभवति ।

१३४ । बिभेतीति । 'चयात्' मनः परिरचितुं स 'पापात्' बिभेति, 'अरिसंयुगात्' कामादिरिपुकुलैः सह संग्रामात्—''भीत्रार्थानां भयहेतुः''—उद्विग्नधिया उद्विग्नबुद्ध्या चेत् यदि 'साधनात्'—''पराजेरसोढः''—न पराजितः; द्विषन् शत्रुः कामादिः तं जनम् 'उन्नतेः'—''वारणार्थानामीप्सितः''—वारयितुं न शक्नुयात् । साधनेन रिपुजयः रिपुजयेन चोन्नतिद्वारोद्घाटनं भवतीति तत्त्वम् ।

१३५ । स चेति । इह स च ईश्वरः अजनविमुखात् 'अस्मात्' जनात्—''अन्तर्द्धौ येनादर्शनमिच्छति''—अन्तर्द्धत्ते, ततः ईश्वरदर्शनपरिभ्रंशात् 'श्रुतिनयविदः'—''आख्यातोपयोगे''—शास्त्रं अधीते, तत् अध्ययनन्तु विफलम्, न तेन दर्शनलाभसम्भावना ।

शृणोत्येष प्रायोऽभिनयनिपुणस्येव मरुती
न जातं शस्यं वा प्रभवति न गङ्गा क्रिमिगिरेः॥

(क) [अस्माद्विलीयते] ऽन्तर्द्धौ येनादर्शनमिच्छति ।

अन्तर्द्धौ येन अदर्शनम् इच्छति तद् अपादानम् (१।४।२८) ।

(ख) [भवत्या]ऽऽख्यातोपयोग [उपाध्यायादधीयते] ।

उपयोगे [नियमपूर्व्वकविद्याग्रहणे] आख्याता अपादानम् (१।४।२९) ।

(ग) जनिकर्त्तुः प्रकृतिः[स्याद् दौर्बल्यं जायते क्षयात्] ।

जनिकर्त्तुः प्रकृतिः [कारणम्] अपादानम् (१।४।३०) ।

(घ) [स्याद्] भुवः प्रभवो [गङ्गा हिमाद्रेः प्रभवत्यसौ] ।

भुवः प्रभवः अपादानम् (१।४।३१) ।

इत्यपादानम् ।

---

कथम ? ईश्वरसम्बन्धविरहात् एष प्रायः अभिनयनिपुणस्य नटस्य इव शृणोति । एवभूतादध्ययनादीश्वरलाभासम्भावनां दर्शयति दृष्टान्तमुखेन 'मरुती'—"जनिकर्त्तुः प्रकृतिः" —न शस्यं जातं, 'क्रिमिगिरेः'—"भुवः प्रभवः"—वल्मीकात् न गङ्गा प्रभवति । ईश्वरविमुखादध्यापकादीश्वरविमुखस्याध्ययनं न परमात्मप्रकाशे हेतुः ।

इत्यपादानम् ।

१३६। दरिद्राय धनं दद्यात् विद्यां विद्यार्थिने पुनः।
न वहेत स्मयन्तत्र स्मरन् दातारमीश्वरम्॥

(क) कर्म्मणा यमभिप्रैति स सम्प्रदान[मिष्यते]।
कर्मणा [दानस्य] यम् अभिप्रैति स सम्प्रदानम् (१।४।३२)।

१३७। संनह्यते च समिते पशुना रुद्रं पुनर्यजते।
एकसमयसिद्धः खलु व्यवहारोऽयं न तु नवेऽस्मिन्॥

क्रियाग्रहणमपि कर्त्तव्यम्। *।
कर्मणः करणसंज्ञा सम्प्रदानस्य च कर्मसंज्ञा। *।

१३८। न रोचतेऽस्मै धनमिन्द्रियार्था
न वा स्वदन्तेऽङ्ग विनिङ्क्षुतेऽस्मै।

---

१३६। दरिद्रायेति। 'दरिद्राय' धनं, 'विद्यार्थिने'—"कर्मणा यमभिप्रैति स सम्प्रदानम्"—पुनः विद्यां दद्यात्। दातारम् ईश्वरं स्मरन् तत्र दाने स्मयम् अभिमानं न वहेत। साध्वनुष्ठाने परमेश्वर एव कर्त्ता अतएव "कर्त्ताबहिरकर्त्तान्त"रित्युपदेशः।

१३७। संनह्यत इति। 'समिते'—"क्रियाग्रहणमपि कर्त्तव्यम्। *।"—युद्धाय संनह्यते 'पशुना' पुनः 'रुद्रं'—"कर्म्मणः करणसंज्ञा सम्प्रदानस्य च कर्मसंज्ञा। *।"—यजते। अयं व्यवहारः एकसमयसिद्धः खलु सामरिकसमयोचितत्वात्। नवे अस्मिन् समये न तु, नास्त्यत्र तादृशव्यवहारस्य स्थितिरिति शेषः। विधानगुणेन शान्तान्मुख-त्वात्तथोक्तम्।

१३८। न रोचत इति। 'अस्मै' जनाय धनं विषयसम्पत् न रोचते, इन्द्रि-यार्थाः विषयाः वा न स्वदन्ते। अङ्ग हे वाल जनस्तु 'अस्मै' नित्यं विनिङ्क्षुते

जनस्तु नित्यं न च तिष्ठते न
संश्लाघते नो शपते सुवृत्तात् ॥

(क) रुच्यर्थानां प्रीयमाणः [पूपो बालाय रोचते]।

रुच्यर्थानां [प्रयोगे] प्रीयमाणः सम्प्रदानं स्यात् (१।४।३३)।

(ख) श्लाघह्नुङ्स्थाशपां ज्ञीप्समानो[ऽस्मै श्लाघते जनः]।

श्लाघ-ह्नुङ्-स्था-शपां [प्रयोगे] ज्ञीप्समानः सम्प्रदानं स्यात् (१।४।३४)।

१३९। शतं तस्मै धारयति वित्तेभ्यः स्पृहयत्यसौ।
जनाय क्रुध्यति द्रुह्यत्यसूयतीर्ष्यतीह धिक् ॥

(क) [स्याद्] धारेरुत्तमर्णो [धारयत्यस्मै शतं यथा]।

धारेः [धारयतेः प्रयोगे] उत्तमर्णः सम्प्रदानं स्यात् (१।४।३५)।

(ख) [भवेत्] स्पृहेरीप्सितो[ऽङ्ग फलेभ्यः स्पृहयत्यसौ]।

स्पृहेः [स्पृहयतेः प्रयोगे] ईप्सितः सम्प्रदानं स्यात् (१।४।३६)।

---

कृतिं तं बोधयति अतीवविश्रब्धहृदयत्वात्, अन्यं न तिष्ठते इति न, न नेतृत्वेनाश्रयतीति न, नेतृत्वं तं बोधयति, संश्लाघते श्लाघां तं बोधयति, नो 'शपते'—"श्लाघह्नुङ्स्थाशपां ज्ञीप्समानः"—शपथेन सत्यमिदमिति न तं ज्ञापयति, शपथस्य तत्सन्निधौ हेयत्वात्। कथमेवं तस्मिन् व्यवहारो वर्त्तते सुवृत्तात् तस्य जनस्य सुन्दरचरित्रहेतोः।

१३९। शतमिति। असौ जनः 'तस्मै'—"धारेरुत्तमर्णः"—उत्तमर्णाय शतं धारयति। कथमेवम् ऋणी भवति? 'वित्तेभ्यः'—"स्पृहेरीप्सितः"—स्पृहयति। किमहो वित्ते स्पृहा निन्दनीया? तादृक्स्पृहया किं भवति तदुच्यते 'जनाय'—"क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः"—क्रुध्यति, द्रुह्यति, असूयति, ईर्ष्यति। इह क्रोधादौ धिक् तं जनमिति शेषः। धने लोभः तथा ततः क्रोधादीनां समागमः सर्व्वथा साधुविगर्हित इति तत्त्वम्।

(ग) [स्त्रियं] क्रुधद्रुहेर्ष्यासूया-
र्थानां यं प्रति कोपो [बाल]।

क्रुध-द्रुहे-र्ष्या-सूयार्थानां [प्रयोगे] यं प्रति कोपः स सम्प्रदानम् (१।४।३७)।

१४०। नाभिक्रुध्यत्वभिद्रुह्यत्वहो कञ्चन राध्यति।
ईक्षतेऽस्मै वृथा भूतद्रोहात् सर्व्वविधं भयम्॥

(क) क्रुधद्रुहोरुपसृष्टयोः कर्म्मा[ऽभिक्रुध्यतीह तम्]।

उपसृष्टयोः क्रुधद्रुहोः [प्रयोगे] यं प्रति कोपः स कर्म (१।४।३८)।

(ख) राधीक्षोर्यस्य विप्रश्नो [देवदत्ताय राध्यति]।

राधीक्षोः [प्रयोगे] यस्य विप्रश्नः स सम्प्रदानम् (१।४।३९)।

१४१। आशृणोमि यदि बाधयतामहो
तोषणं प्रतिशृणोमि सर्व्वदा।
साधवे प्रतिगृणाति मे परः
प्राणिने ह्यनुगृणाति सोऽजितः॥

---

१४०। नाभिक्रुध्यत्विति। अहो 'कञ्चन'—"क्रुधद्रुहोरुपसृष्टयोः कर्म"—न अभिक्रुध्यतु अभिद्रुह्यतु। 'अस्मै'—"राधीक्षोर्यस्य विप्रश्नः"—वृथाराध्यति ईक्षते शुभाशुभं दैवं पर्य्यालोचयति। कथं दैवपर्य्यालोचनं वृथा? सर्व्वविधं भयं भूतद्रोहात्। भूतद्रोहिणो निरन्तरं भयव्याकुलचित्ता अतएव ते दैवं पृच्छन्ति किमस्ति मे पुनः कुशलीत्यादि, न तेन तेषां भयापगमः।

१४१। आशृणोमीति। अहो यदि 'साधवे'—"प्रत्याङ्भ्यां श्रुवः पूर्व्वस्य कर्त्ता"—बाध्यताम् आशृणोमि भगवन्नाम्ना तेन याचितः प्रतिजाने, तथैव सदा तोषणं 'प्रतिशृणोमि' अङ्गीकरोमि, परः परमेश्वरः 'मे'—"अनुप्रतिगृणश्च"—मह्यं प्रतिगृणाति तां बाध्यतां तोषणञ्च शंसन्तं मां प्रोत्साहयति। कथमेतत् करोति भगवान्? अजितः अन्यविधोपायेनावशीभूतः स हि यस्मात् 'प्राणिने' अनुगृणाति तादृशीं स्वावस्थां शंसन्

(क) प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्त्ता [तस्मै प्रतिश्रुतम्] ।

प्रत्याङ्भ्यां श्रुवः [प्रयोगे] पूर्व्वस्य कर्त्ता सम्प्रदानम् (१।४।४०) ।

(ख) अनुप्रतिगृणश्चा[सौ होत्रे प्रतिगृणात्यहो] ।

अनुप्रतिगृणश्च [प्रयोगे] पूर्व्वस्य कर्त्ता सम्प्रदानम् (१।४।४१) ।

इति सम्प्रदानम् ।

---

१४२ । लुनाति शस्त्रेण जनान् तथाक्षै-
र्दीव्यत्यथाक्षान् ननु दीव्यतः शम् ।
हन्तुः कुतो वात्र जगद्गुणेभ्यः
प्रेम्णा परिक्रीतमिदं महद्भिः ॥

---

तं प्रोत्साहयति । ईश्वरप्रेरितसाधोर्वाणीं प्रति श्रद्धावशतः वाध्यताप्रदर्शनं, तत्सन्तोषणेन च भगवत्सन्तोषणं भवति हि कारणं परेण साक्षात्सम्बन्धस्य । एवं साक्षात्सम्बन्धेन च ततः प्रोत्साहावतरणमिति निर्गलितोऽर्थः ।

इति सम्प्रदानम् ।

---

१४२ । लुनातीति । 'शस्त्रेण'—"साधकतमं करणम्"—जनान् लुनाति, तथा 'अक्षैः' दीव्यति, ननु 'अक्षान्'—"दिवः कर्म च"—दीव्यतः, हन्तुः जनहिंसापरस्य कुतो वा अत्र संसारे शम् कल्याणम् । एतद्वैपरीत्यं दर्शयति, महद्भिः इदं जगत् 'गुणेभ्यः' 'प्रेम्णा'—"परिक्रयणे सम्प्रदानमन्यतरस्याम्"—परिक्रीतम् ।

इति करणम् ।

---

(क) [दात्रेणेदन्खलुनात् स यथा] साधकतमं करणम् ।

साधकतमं [प्रकृष्टोपकारकं] करणं स्यात् (१।४।४२)।

(ख) दिवः कर्म्म च [तत्राचानचैर्दीव्यति वा प्रिय]।

दिवः साधकतमं कर्म्म करणं च (१।४।४३)।

(ग) [स्यात्] परिक्रयणे सम्प्रदानमन्यतरस्यां [भोः]।

परिक्रयणे साधकतमम् अन्यतरस्यां सम्प्रदानं स्यात् (१।४।४४)।

इति करणम् ।

———०———

१४३ । हरौ ममाशा प्रबलाधितिष्ठति
नान्यं जनं सा, यदि वाधिशेते ।
कामं तथाध्यास्त इमं स्ववर्गं
विनाशहेतुः खलु सा भवेन्मम ॥

(क) आधारोऽधिकरणं [स्याद्विख्याताः साधवो भुवि]।

आधारः [क्रियायाः] अधिकरणं स्यात् (१।४।४५)।

(ख) अधिशीङ्स्थासां कर्म्म[स्यादध्यास्ते स गिरिं मुनिः]।

अधि-शीङ्-स्थाऽऽसाम् आधारः कर्म्म स्यात् (१।४।४६)।

---

१४३ । हराविति । मम आशा 'हरौ'—"आधारोऽधिकरणम्"—प्रबला । सा आशा अन्यं जनं' न अधितिष्ठति । यदि वा सा 'कामम्' अधिशेते, तथा 'इमं स्ववर्गं'—"अधिशीङ्स्थासां कर्म"—अध्यास्ते, सा खलु मम विनाशहेतुः भवेत् । केवलं भगवत्येवाशाबद्धहृदयो वसामीति नियतप्रार्थना सूचिता ।

१४४। अभिनिविशत ईश्वरं सति
ह्यधिवसति स शं तमावसन्।
उपवसतु न चापरं विभु-
मनुवसतु सुखी भविष्यति॥

(क) अभिनिविशश्च [ग्रामं ग्रामे वाभिनिविशते बाल]।

अभिनिविशश्च आधारः कर्म्म [मण्डूकतुल्या] अन्यतरस्याम् (१।४।४७)।

(ख) उपान्वध्याङ्वसो [ग्रामं सोऽधिवसति भाग्यवान्]।

उप-अनु-अधि-आङ्-वसो आधारः कर्म्म स्यात् (१।४।४८)।

१४५। यद्युपवसति ग्रामे नगरे वाङ्ग किमनेन कृच्छ्रेण।
इन्द्रियशैथिल्यं हि दृष्टं तापसजनेषु रसतोऽत्र॥

वसेरश्यर्थस्य प्रतिषेधो वक्तव्यः। *।

इत्यधिकरणम्।

———०———

---

१४४। अभिनिविशत इति। 'ईश्वरं' 'सति'—"अभिनिविशश्च"—साधौ स अभिनिविशते अभिनिविष्टो भवति। ततः किं भवति? हि अतएव स 'शं' कल्याणम् अधिवसति, किं कुर्व्वन्? 'तम्' ईश्वरम् आवसन्। अधुना किं कुर्व्वीत? 'विभुम्' परमेश्वरं अनुवसतु न च 'अपरम्'—"उपान्वध्याङ्वसः"—उपवसतु, स सुखी भविष्यति।

१४५। यदीति। अङ्ग हे बाल यदि 'ग्रामे' 'नगरे' वा—"वसेरश्यर्थस्य प्रतिषेधो वक्तव्यः। *।"—उपवसति भोजननिवृत्तिं करोति। अनेन कृच्छ्रेण किम्? कथम्? हि यस्मात् अत्र तापसजनेषु रसतः कामतः इन्द्रियशैथिल्यं दृष्टम्। "विषया

१४६ । प्राणी सुखञ्चेच्छति दुःखमुग्रं
भुङ्क्ते स्वकृत्यैरनुशास्ति तञ्चेत् ।
धर्म्मं परं तेन कृतार्थ एष
दुःखं सुखं मन्यत एव नित्यम् ॥

(क) [स्यात्] कर्त्तुरीप्सिततमं कर्म्म [ग्रामं स गच्छति] ।

कर्त्तुः ईप्सिततमं [क्रियया यदाप्तुमिष्टतमम् तत्] कर्म्म स्यात् (१।४।४९) ।

(ख) [बाल चेयं] तथा युक्तं चानीप्सितं [विषं पपौ] ।

तथा [ईप्सिततमवत्] युक्तं [क्रियया] अनीप्सितं च कर्म्म (१।४।५०) ।

(ग) अकथितञ्च [गां दोग्धि पयो गोपालको यथा] ।

अकथितम् [अपादानादिविशेषकथाभि.] च कर्म्म स्यात् (१।४।५१) ।

---

विनिवर्त्तन्ते निराहारस्य देहिनः । रसवर्ज्जं रसोऽप्यस्य परं दृष्ट्वा निवर्त्तते ॥" इति न्यायात् उपवासादिकं कृच्छ्रसाधनं निष्फलम्, परमात्मदर्शनं विना कामलोभविजयस्य नास्ति सम्भावना ।

इत्यधिकरणम् ।

---

१४६ । प्राणीति । प्राणी 'सुखं' च—"कर्त्तुरीप्सिततमम्"—इच्छति, 'उग्रं दुःखम्'—"तथा युक्तं चानीप्सितम्"—भुङ्क्ते स्वकृत्यैः स्वानुष्ठितकर्मवशतः । 'तं' चेत् परं श्रेष्ठं 'धर्मम्'—"अकथितञ्च"—अनुशास्ति, तेन धर्मेण एष कृतार्थः सन् नित्यं दुःखम् एव सुखं मन्यते । "यस्याहमनुगृह्णामि हरिष्यामि च तद्धन"मित्याद्युक्त्यनन्तरं "ये दारागारपुत्राप्तान् प्राणान् वित्तमिमं परम् । हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे ॥" इत्यादि वाक्यं तत्सन्निधौ सर्व्वदुःखहरत्वेन प्रतिभाति, तदा स वदति "नाहं त्यक्ष्यामि तं जातु यदि मां स विनाशयेत् ।" इति ।

१४७। दुग्धे गां स ज्ञानं स याचते तं परं धर्म्मम् ।
शोकं रुणद्धि चित्तं पृच्छति गुरुमसकृत् स तत्त्वम्॥
भिक्षत एतं सुभक्षं चिनोति धर्म्मतरुं विमोक्षम् ।
ब्रूते चामुं शास्त्रं तथानुशास्ति च परं योगम् ॥

दुहि-याचि-रुधि-प्रच्छि-भिक्षि-चिञा-
मुपयोगनिमित्तमपूर्व्वविधौ ।
ब्रुवि-शासि-गुणेन च यत् सचते
तदकीर्त्तितमाचरितं कविना ॥ * ॥

१४८। प्राप्यं स्थानं गमयति स तं बोधयत्यार्षधर्म्मं
शुद्धञ्चान्नं स तमनुदिनं लाशयत्यत्र तच्च ।
नित्यं चाध्यापयति निखिलं शास्त्रमत्यन्तसूक्ष्मं
शय्यायां तं सुखयितुमहो शाययत्यङ्ग साधु ॥

---

१४७। अध्ययन-धर्मजिज्ञासाफलमाह दुग्ध इति। स 'गां' स्वर्गलोकं 'ज्ञानं' दुग्धे, तं 'परं' परमेश्वरं 'धर्मं' याचते, 'शोकं' 'चित्तं' रुणद्धि वहिर्गमनं रोधयति, असकृत् स 'गुरुं' 'तत्त्वं' पृच्छति, 'एतं' गुरुं 'सुभक्षं' अध्यात्मभोज्यं भिक्षते, 'धर्मतरुं' 'विमोक्षं' फलस्थानीयमुक्तिं चिनोति, कथमेवं भवति ? 'अमुं' शिष्यं 'शास्त्रं' च ब्रूते, 'अमुं' परं 'योगं'ञ्च अनुशास्ति गुरुरिति शेषः—"दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोग-निमित्तमपूर्व्वविधौ, ब्रुविशासिगुणेन च यत् सचते तदकीर्त्तितमाचरितं कविना ॥ * ।—

१४८। आचार्य्यधर्मार्थिनोराश्चर्य्यसम्बन्धमाह प्राप्यमिति। स आचार्य्यः 'तं' प्राप्यं 'स्थानं' गमयति, 'आर्षधर्मं' 'तं' बोधयति, 'तम्' अनुदिनं प्रतिदिनं शुद्धम् 'अन्नं' च अत्र आशयति, निखिलम् अत्यन्तसूक्ष्मं च 'शास्त्रं 'तं' नित्यम् अध्यापयति च, अहो सुखयितुं 'तं'—'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्त्ता स णौ"—साधु यथा स्यात् तथा शय्यायाम् अङ्ग हे वाल शाययति। भोजनादिकं निखिलं तस्य यथा पवित्रतापरिवृद्धेर्हेतुर्भवति, तथा तं सर्व्वत्र नियोजयति।

(क) [स्याद्] गतिबुद्धिप्रत्यवसाना-
र्थशब्दकर्म्माकर्म्मकाणामणि-
कर्त्ता स णौ [गमयति तं ग्रामम्]।

गति-बुद्धि-प्रत्यवसानार्थ-शब्दकर्म्मा ऽकर्म्मकाणाम् [यः] अणिकर्त्ता स णौ कर्म्म स्यात् (१।४।५२)।

१४९। नाययति तेन भारं वाहयति स तच्च तेन भृत्येन।
वाहयति यवान् वाहान् वाहयितारो भवन्तु दय-
मानाः॥

गत्यर्थेषु नीवाह्योः प्रतिषेधो वक्तव्यः। *।

वहेरनियन्तृकर्त्तृकस्येति वक्तव्यम्। *।

१५०। आदयते तेनान्नं खादयति च तेन पूपं सः।
भक्षयति स तत् तेन धिक् शस्यं भक्षयति वाहान्॥

अदिखाद्योर्न। *।

भक्षेरहिंसार्थस्य। *।

---

१४९। नाययतीति। 'तेन' भृत्येन स भारं नाययति, 'तं' भारञ्च 'तेन वाहयति—"गत्यर्थेषु नीवाह्योः प्रतिषेधो वक्तव्यः। *।"—'वाहान्' अश्वान् 'यवान्'—"वहेरनियन्तृकर्त्तृकस्येति वक्तव्यम्। *।"—। वाहयितारः ये पुनरन्यैरन्यांश्च वाहयन्ति ते दयमानाः दयापरवशा भवन्तु।

१५०। आदयत इति। स 'तेन' 'अन्नम्' आदयते, पूपञ्च तेन खादयति। स 'तत्' अन्नम् शस्यसम्भूतं तेन भक्षयति, धिक् तं जनमिति शेषः, कथम् 'वाहान्' अश्वान् शस्यं भक्षयति उपकारकस्य हिंसार्थं तदपकर्म्म करोति। अकृतज्ञता निरयनिमित्तम्, अतीवगर्हिता च।

१५१। सन्तं दुःखं हारयति नासता, कारयत्यमुम्।
मङ्गलं न त्वनेनेति हरेः कर्म्म सदाद्भुतम्॥

(क) हृक्रोरन्यतरस्यां [तत् तं तेन हारयत्यसौ]।

हृक्रोः [यः] अणिकर्त्ता स णौ कर्म्म अन्यतरस्यात् (१।४।५३)।

१५२। अभिवादयते बालं गुरुं स यूना च दर्शयते।
तदमुच्चानेन वनं सन्तं शिशुनाभिवादयति च॥

अभिवादि दृशोरात्मनेपदे वेति वाच्यम्। *।

[आत्मनेपदे इति किम्? प्राप्तविकल्पत्वात् द्वितीया अप्राप्तविकल्पत्वात् तृतीयैव]

इति कर्म।

——०——

---

१५१। सन्तमिति। हरिः सन्तं साधुं दुःखं हारयति न असता असाधुना दुःखम् हारयतीति शेषः, अमुं साधुं मङ्गलं कारयति न अनेन असाधुना मङ्गलं कारयतीति हरेः कर्म सदा अद्भुतम्। साधुं विश्वासवन्तं न त्वसाधुं भगवान् नियोजयति विस्तृतजनमण्डली-हितसाधन इति सर्व्वेषामनुभूतविषयः। कथं नैतेन वैषम्यदोषः? वैषम्यं हि येषु येषु जनेषु यादृशो व्यवहारोऽनुपयोगी तेषु तेषु च तत्करणम्। अतः आपातप्रतीयमाने वैषम्ये साम्यमेवास्तीति सुधीभिर्विचिन्तनीयम्।

१५२। अभिवादयत इति। स 'बालं' 'गुरुम्' अभिवादयते, अनेन यूना च 'अमुच' तद् 'वनम्' दर्शयते, 'सन्तं' साधुं स 'शिशुना' अभिवादयति।—"अभिवादि-दृशोरात्मनेपदे वेति वाच्यम्। *।"—।

इति कर्म।

——

१५३ । करोति वा कारयति वहिः कर्त्तृत्वमस्य चेत् ।
अकर्त्तृत्वं पुनश्चान्तः स धन्यः पुरुषो भुवि ॥

(क) [ज्ञेयः] स्वतन्त्रः कर्त्ता [स करोति कर्म्म चाद्भुतम्] ।

स्वतन्त्रः [क्रियासिद्धौ प्रधानभूतः] कर्त्ता स्यात् (१।४।५४)।

(ख) [स्यात्] तत्प्रयोजको हेतुश्चा[ऽसौ तं हारयत्यमुम्] ।

तत्प्रयोजकः [स्वतन्त्रस्य प्रयोजकोऽर्थः] हेतुः कर्त्ता च (१।४।५५) ।

इति दृष्टान्तसर्व्वस्वे दृष्टान्तानुगमने कारके आकडारादिका संज्ञेत्यनेना-धिकृतषट्कारकसंज्ञाकथनं नाम प्रथमं प्रकरणम् ।

---

१५३ । करोतीति । 'सोऽयं' करोति—"स्वतन्त्रः कर्त्ता"—कारयति—"तत्प्रयोजको हेतुश्च"—वा, चेद् अस्य वहिः कर्त्तृत्वम्, अन्तः पुनः अकर्त्तृत्वम्, स पुरुषः भुवि धन्यः । साध्वनुष्ठाने कर्त्तृत्वाभिमानविरहितत्वमेव परमोधर्मः ।

इति कर्त्ता ।

इति कारके दृष्टान्तव्याख्यायां प्रथमं प्रकरणम् ।

# कारके विभक्तिनिर्द्देशः ।

१५४। केन क्रियते भद्रं कृतं करोतीत्यध्यासोऽत्र ।
पापं त्वपराक्रमिकं मनुष्य इह प्राप्तकर्त्तृताख्यातिः ॥

(क) [स्यात् कल्याणा]ऽनभिहित [इत्यत्राधिकृतिः शिष्टौ] (२।३।१)।

तिङ्कृत्तद्धितसमासैः परिगणनं कर्त्तव्यम् । * ।

१५५। धन्या दीनजनाः स्वर्गराज्यं ते विगतस्पृहाः ।
अधिकुर्व्वन्ति पात्रत्वं लभन्ते विनयेन हि ॥

---

१५४। केनेति। केन 'भद्रं' 'क्रियते 'कृतं' भद्रं करोतीति अत्र अध्यासः आरोपः, कल्याणस्य कर्त्ता हि परमेश्वरः, सुतरां तेन कृतं कल्याणम् अन्यच करोतीत्यारोपो भवति। तत् किं पापस्यापि कर्त्ता भगवान् नेत्याह, पापं तु 'अपराक्रमिकम्' अपराक्रमेण कृतम् अशक्तिसम्भूतम्। अशक्त्या हि मनुष्ये पापारम्भः, न खलु शक्तिमानीश्वरोऽशक्तिमान् भवितुमर्हति। तत् को वा पापस्य कर्त्ता? इह पापकर्मणि मनुष्यः 'प्राप्तकर्त्तृताख्यातिः' —"तिङ्कृत्तद्धितसमासैः परिगणनं कर्त्तव्यम् । * ।" प्राप्ता कर्त्तृताख्यातिः येन सः। यदि मानवे कर्त्तृत्वारोपः कर्त्तव्यः स्यात् तदा पापकर्मण्येव। "जानामि धर्मं न च मे प्रवृत्तिः जानाम्यधर्मं न च मे निवृत्तिः। त्वया हृषीकेश हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि ॥" इत्यादिषु अन्तर्यामिप्रेरणया पापं पुण्यञ्च करोतीत्यायाति, कथमत्र तद्विरुद्धपरिभाषणम्। श्लोकस्यास्यार्थोऽनवधानतयाऽन्यथाव्याख्यातः। पूर्व्वापरपर्य्यालोचनया प्रार्थनावाक्यमिदम्, न तु स्वरूपभाषणम्। प्रार्थयामि, किं प्रार्थयसि? हे हृषीकेश हृदि स्थितेन त्वया यथा नियुक्तो भवामि, तथा करोमीति। भविष्यत्सामीप्येऽत्र वर्त्तमान इत्यवधेयम्।

१५५। धन्या इति। दीनजनाः दीनात्मानः धन्याः, विगतस्पृहाः ते 'स्वर्गराज्यम्'—"कर्मणि द्वितीया"—अधिकुर्व्वन्ति। विनयेन हि 'पात्रत्वं' लभन्ते। विनीतान् साधकाननुगृह्णाति परमात्माऽतस्तेषां स्वर्गराज्यप्राप्तिः।

(क) [स्यात्]कर्म्मणि द्वितीया[तं कटं करोषि बुद्धिमन्] ।

कर्मणि [कारके] द्वितीया भवति (२।३।२) ।

१५६ । स्रोतस्वतीमुभयतो गिरिर्वनं सर्व्वतस्तरुसमूहः ।
धिक् तानुपर्य्युपरि तत्सौन्दर्य्यमधोऽधो विषयान् हि ॥

उभसर्व्वतसोः कार्य्या धिगुपर्य्यादिषु त्रिषु ।

द्वितीयाऽऽम्रेड़ितान्तेषु ततोऽन्यत्रापि दृश्यते ॥ * ॥

१५७ । गिरिमभितो वनमेतत्परितो निर्झरकुलं प्रसूनानि ।
समया तं निकषा तत् हा हरिविमुखं न तं प्रति विभाति ॥

अभितः-परितः-समया-निकषा-हा-प्रति-योग उपसंख्यानम् । * ।

---

१५६ । "स्रोतस्वतीम्" उभयतः गिरिः, 'वनं' सर्व्वतः तरुसमूहः, गिरिनद्यादि-जन्यम् तत् 'सौन्दर्य्यम्' उपर्य्युपरि, 'विषयान्', अधोऽधो हि स्थितान्। अतएव 'तान्'—"उभसर्व्वतसोः कार्य्या धिगुपर्य्यादिषु त्रिषु । द्वितीयाऽऽम्रेड़ितान्तेषु ततोऽन्यत्रापि दृश्यते ॥ * ॥"—जनान् धिक् । विषयरसरसिका न प्राकृतिकसौन्दर्य्ये मतिं दधते, ते हि सौन्दर्य्यदर्शनवैमुख्यात् तदुपरि वर्त्तन्ते, अथच विषयाधिकृतचित्तत्वात् तदग्रे तिष्ठन्ति । अतएव धिक् ।

१५७ । गिरिमिति । 'गिरिम्' अभितो वनम्, 'एतत्' वनं परितः निर्झर-कुलं, 'प्रसूनानि' पुष्पाणि समया, 'तं' प्रकृत्यधिष्ठितं हरिं निकषा, अथच न 'तं' हरि-विमुखजनं प्रति विभाति, तत् तस्मात् हा, 'हरिविमुखं'—अभितः-परितः-समया-निकषा हा-प्रति-योग उपसंख्यानम् । * ।—जनमिति शेषः । भजनविमुखस्य सन्निधौ सर्व्वं भगवत्स्मारकं स चास्ति, तथापि न प्रतिभातीति तस्य दुर्भाग्यम् ।

१५८ । तामन्तरेणाव्रतमग्निमन्तरा
संवत्सरं चेत्तपसा वसेदथ ।
भ्राम्येदहो योजनमाकुलो जन-
स्तीर्थेऽतिपुण्ये विफलन्त्वभक्तितः ॥

(क) अन्तरान्तरेण युक्ते [त्वामन्तरा कमण्डलुः] ।

अन्तरान्तरेण युक्ते द्वितीया [भवति] (२।३।४) ।

(ख) [स्यात्]कालाध्वनोरत्यन्तसंयोगे [मासमावसेत्] ।

अत्यन्तसंयोगे [गम्यमाने] कालाध्वनोः द्वितीया (२।३।५) ।

१५९ । मासेन निष्पन्नमहो व्रतं वा
क्रोशेन सङ्कीर्त्तनमङ्ग भक्त्या ।
एवं त्र्यहाद्धिद्यतु स द्व्यहे वा
मुहूर्त्तमात्रात्कृपया हरेस्तु ॥

---

१५८ । तामिति । 'तां' भक्तिम् अन्तरेण विना चेत् यदि आव्रतं परिवेष्टितं 'अग्निम्' अन्तरा—"अन्तरान्तरेण युक्ते"—तपसा 'संवत्सरं' वसेत्, अथ अहो आकुलो जनः अतिपुण्ये तीर्थे 'योजनं'—"कालाध्वनोरत्यन्तसंयोगे"—भ्राम्येत्, अभक्तितस्तु विफलम् । "अनर्थतीर्थादिकदर्थनाभिः क्लिश्येत कायः किमपायपात्रम् । सुखं शयानं शरणे शरण्यं श्रय श्रियः कान्तमनन्तमन्तः ॥" इत्याद्याभिः साधकोक्तिभिरेतदेव परिस्फुटम् ।

१५९ । मासेनेति । अहो 'मासेन' व्रतं निष्पन्नं, अङ्ग हे वाल भक्त्या 'क्रोशेन' —"अपवर्गे तृतीया"—वा सङ्कीर्त्तनं निष्पन्नम् । एवम् अनुष्ठानं कृत्वा स 'त्र्यहात्' 'द्व्यहे' वा—"सप्तमीपञ्चम्यौ कारकमध्ये"—सिद्ध्यतु ; हरेः कृपया मुहूर्त्तमात्रात् सिद्ध्यतीति शेषः । साधनेन सिद्धिर्न झटिति सम्भवति, कृपया तु अचिरेणैवेति फलितार्थः ।

(क) अपवर्गे तृतीया [स्यात् मासेनाधीतवान् मनुम्] ।

अपवर्गे [गम्यमाने] कालाध्वनोः अत्यन्तसंयोगे तृतीया (२।३।६) ।

(ख) [बुद्धिमन्] सप्तमीपञ्चम्यौ
कारकमध्ये[ऽत्ति द्व्यहाद्व्यहे] ।

कारकमध्ये [शक्तिद्वयमध्ये] कालाध्वनोः सप्तमीपञ्चम्यौ [भवतः] (२।३।७) ।

१६० । ध्यानमनु प्रसादोऽस्मिन् तमनु क्रीड़नं हरौ ।
त्वामन्विति विचार्य्यं न गुणाः सन्तूप ते शते ॥

(क) कर्म्मप्रवचनीययुक्ते द्वितीया [स्याज्जनानन्] ।

कर्म्मप्रवचनीययुक्ते द्वितीया [भवति] (२।३।८) ।

(१) कर्म्मप्रवचनीयाः [इत्यधिकारः प्रकीर्त्त्यते] (१।४।८३)।

(२) [स्याद्] अनुर्लक्षणे [तस्य प्रावर्षत्संहितामनु] ।

लक्षणे [द्योत्ये] अनुः कर्म्मप्रवचनीयः (१।४।८४) ।

(३) तृतीयार्थे [नदीमन्ववसिताः सैनिका यथा] ।

तृतीयार्थे [द्योत्ये] अनुः कर्म्मप्रवचनीयः (१।४।८५) ।

---

१६० । ध्यानमिति । 'ध्यानम्' अनु—"कर्म्मप्रवचनीययुक्ते द्वितीया" "अनुर्लक्षणे"—ध्यानमनुगम्य प्रसादः निर्म्मलता, 'तम्' अनु—"तृतीयार्थे"—प्रसादेन अस्मिन् हरौ क्रीड़नम्, 'त्वाम्' अनु—"हीने"—त्वत्तो हीना इति न विचार्य्यम् । 'शते' उप—"उपोऽधिके च" "यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी"—शतादधिकास्ते गुणाः सन्तु । यदि बहुगुणयुक्तोऽपि त्वं भवसि, तथापि त्वत्तो हीना जना इति मनसि न विचार्य्यम्, एवं निरहङ्कारे मनसि ध्यानं सम्भवति । ध्यानहेतूपलक्षिता निर्म्मलता, निर्म्मलतया हरौ नित्यवास इति पूर्व्वापरसम्बन्धः ।

(४) हीने [यथार्ज्जुनमनु योद्धारः सर्व्वे एव ते]।

हीने [द्योत्ये] अनुः कर्म्मप्रवचनीयः (१।४।८६)।

(ख) [बालक] यस्मादधिकं यस्य चे-
श्वरवचनं तत्र सप्तमी [भोः]।

यस्मादधिकं यस्य चेश्वरवचनं तत्र कर्म्मप्रवचनीययुक्ते सप्तमी (२।३।९)।

(१) उपोऽधिके चो[प निष्के कार्षापणमुपैष तम्]।

अधिके हीने च [द्योत्ये] उपः कर्म्मप्रवचनीयः (१।४।८७)।

१६१। तस्मादुपार्थितं किन्ते पर्य्यस्मान्न कथं हरिम्।
मा द्राचीरा जरायोः किं त्वा दिवं दानसम्भृतः॥

(क) पञ्चम्यपाङ्परिभिः [स्यात्त्रिगर्त्तेभ्योऽप वृष्टवान्]।

अप-आङ्-परिभिः कर्म्मप्रवचनीययुक्ते पञ्चमी (२।३।१०)।

(१) अपपरी वर्ज्जने[ऽप त्रिगर्त्तेभ्यो ववर्ष च]।

वर्ज्जने [द्योत्ये] अपपरी कर्म्मप्रवचनीयौ (१।४।८८)।

(२) आङ्मर्य्यादावचने [कीर्त्तिस्तस्याकुमारमवदाता]।

मर्य्यादावचने [द्योत्ये अभिविधौ च] आङ् कर्म्मप्रवचनीयः (१।४।८९)।

---

१६१। तस्मादिति। "तस्मात्" हरेः उप तं परिवर्ज्ज्य किं ते तव अर्थितं प्रार्थनम्, 'अस्मात्' संसारात् परि—"अपपरी वर्ज्जने".—संसारं वर्ज्जयित्वा कथं हरिं मा द्राचीः। 'आ जरायोः' 'आ दिवं'—"आङ्मर्य्यादावचने" "पञ्चम्यपाङ्परिभिः" —किं नु दानसम्भृतः, हरेर्दानेन परिवर्द्धितः। यतस्तद्दानेन नित्यं परिपुष्टः परिपालितः, अतस्तं हित्वा किं वान्यत् प्रार्थनीयं दर्शनीयं वाऽस्ति।

१६२। तमनु प्रति ताञ्चैतं परि प्रोक्तं शुभं यतः।
साधवस्तं प्रति स्युस्ते यद्‌यं प्रति तदन्वहम्॥
देयं जनं जनमनु शुभार्थी पूतदर्शनः।
अभि तां साधुरभितमभि तं तं प्रियश्चिरम्॥

(क) [बाल] लक्षणेत्थंभूताख्यान-
भागवीप्सासु प्रतिपर्य्यनवः।

लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्य्यनवः कर्म्मप्रवचनीयाः (१।४।९०)।

(ख) अभिरभाग [एष त्वामभि प्रेमयुतः सदा]।

अभागे [भागं वर्ज्जयित्वा] अभिः कर्म्मप्रवचनीयः (१।४।९१)।

१६३। महात्मनः प्रति स्यात् को धर्म्मतः प्रति किं धनम्।
कुतोऽध्यागच्छति श्रैष्ठ्यं पर्य्येति मनुजान्न तत्॥

---

१६२। तमिति। 'तम्' अनु 'तां' प्रति 'एतं' परि, तं तामेतं लक्ष्यीकृत्य संप्राप्य यतः शुभं प्रोक्तम्, अतः ते 'तं' जनं प्रति साधवः साधुभावापन्नाः स्युः। 'यं' प्रति यत् स्यात् 'तत्' अन्वहं प्रतिदिनं देयम्, यस्य योऽत्र भागः स दीयताम्। 'जनं जनम्' अनु—"लक्षणेत्थंभूताख्यानभाववीप्सासु प्रतिपर्य्यनवः"—सर्व्वेषु जनेषु शुभार्थी स्यात्। 'ताम्' अभि लक्ष्यीकृत्य पूतदर्शन. पवित्रदृष्टिः स्यात्। 'तम्' अभि साधुः साधुभावापन्नः स्यात्। 'तं तम्' अभि—"अभिरभागे"—सर्व्वेषु तेषु जनेषु चिरं प्रियः स्यात्।

१६३। महात्मन इति। कः 'महात्मनः' प्रति तस्य प्रतिनिधिः सदृशः स्यात् न कोऽपीत्यर्थः। धनं किं 'धर्म्मतः' प्रति,—"प्रतिः प्रतिनिधिप्रतिदानयोः"—धर्म्मस्य प्रतिदानतया किं धनेन तस्य निर्यातनं भवति। श्रैष्ठ्यं 'कुतः' अधि आगच्छति, तत् श्रैष्ठ्यं न 'मनुजात्' परि—"अधिपरी अनर्थकौ"—एति।

(क) [धान्येभ्यः प्रति तद्दात्] प्रतिनिधिप्रतिदाने च यस्मात्।

यस्मात् प्रतिनिधिः प्रतिदानञ्च तत्र कर्म्मप्रवचनीययुक्ते पञ्चमी (२।३।११)।

(ख) प्रतिः प्रतिनिधिप्रतिदानयोः [सोऽर्ज्जुनात्प्रति]।

प्रतिनिधि-प्रतिदानयोः प्रतिः कर्म्मप्रवचनीयः (१।४।९२)।

(ग) [कुतोऽध्यागच्छतस्तौ हि] अधिपरी अनर्थकौ।

अनर्थकौ [अनर्थान्तरवाचिनौ] अधिपरी कर्म्मप्रवचनीयौ (१।४।९३)।

१६४। सु स्तुतं भवता वाति स्तुतं ब्रह्म न मन्यताम्।
स्याद्भक्तेरपि वर्त्तेत सापि स्तुतिसहस्रकम्॥
अपि स्तौतु जनं धिक् तमपि गर्व्वं वहेत्ततः।
अपि भजत्वपि स्तौतु कृपां जानन्नहैतुकीम्॥

(क) सुः पूजायां [भवता सु स्तुतं सु सिक्तमेव तत्]।

पूजायां सुः कर्म्मप्रवचनीयः (१।४।९४)।

---

१६४। स्वितिः। भवता ब्रह्म सु 'स्तुतं'—"सुः पूजायाम्"—वा अति 'स्तुतं'—"अतिरतिक्रमणे च"—बहुतरं समीचीनं स्तुतमिति न मन्यताम्। 'भक्तेः' अपि स्यात् भक्तेर्विन्दुः स्यात, वर्त्तेत। सा भक्तिः 'स्तुतिसहस्रकम्' अपि। विन्दुपरिमाणापि भक्तिः स्तुतिसहस्रकमतिरिच्य स्वशक्तिमाविष्करोति। अपि जनं 'स्तौतु' यदि जन-विशेषं स्तोतुमभिलाषोऽस्ति तत् करोतु न तत्र बाधास्ति। धिक् तं जनं यतः ततः स्तवात् 'गर्व्वम्' अपि वहेत्। कृपाम् अहैतुकीं जानन्, अपि 'भजतु' अपि 'स्तौतु'—"अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु"—भगवत्कृपा हेतुमनपेक्ष्योदेतीति जानन् भजनञ्च स्तवञ्च करोतु।

(ख) अतिरतिक्रमणे च [भवतातिस्तुतं खलु] ।

अतिक्रमणे पूजायाञ्च अतिः कर्म्मप्रवचनीयः (१।४।९५) ।

(ग) [स्याद]पिः पदार्थसम्भावना-
न्ववसर्गगर्हासमुच्चयेषु ।

पदार्थ-सम्भावना-न्ववसर्ग-गर्हा-समुच्चयेषु अपिः कर्म्मप्रवचनीयः (१।४।९६) ।

१६५ । अधि हरौ द्युलोकस्था हरिर्भक्तेष्वधि स्वयम् ।
सेवायां स तु तेषां मां कृपयाधि करिष्यति ॥

[बालक] यस्मादधिकं यस्य चेश्वरवचनमित्याद्युक्तम् ।

(क) अधिरीश्वरे [एषोऽधि पञ्चालेषु महायशाः] ।

ईश्वरे अधिः कर्म्मप्रवचनीयः (१।४।९७) ।

(ख) विभाषा कृञि [विज्ञेयश्चेन्मामधि करिष्यति] ।

कृञि [करोतौ] अधिः विभाषा कर्म्मप्रवचनीयः (१।४।९८) ।

१६६ । पुरं ह्यसौ गच्छति वा वनाय
तद्याति सत्यं मनसा यदेति ।

---

१६५ । अधीति । द्युलोकस्थाः स्वर्गगामिनः भक्ताः 'हरौ' अधि हरेः परिवाराः, स्वयं हरिः 'भक्तेषु' तेषु अधि—"अधिरीश्वरे"—तेषां स्वामी । तेषां भक्तानां सेवायां स हरिः तु कृपया 'माम्' अधि—"विभाषा कृञि"—करिष्यति, विनियोक्ष्यते, तत्र तस्य स्वामित्वात् ।

१६६ । पुरमिति । असौ जनः 'पुरं' गृहं नगरं 'वनाय' वा गच्छति । सत्यं 'तत्' नगरं गृहं वनं वा याति, मनसा 'यत्' एति । दृष्टौ गमनं न हि गमनं, यतः

व्रजत्यसौ मार्गमहो सतां चेत्
सङ्गाय धन्यः स परिश्रमोऽस्य ॥

[भो] गत्यर्थकर्म्मणि द्वितीया-
चतुर्थ्यौ चेष्टायामनध्वनि।

गत्यर्थकर्म्मणि चेष्टायां द्वितीयाचतुर्थ्यौ अनध्वनि (२।३।१२)।

१६७। जनसेवितन्तु भयतः परिहाय स गच्छति पथे हि।
यस्मै कस्मै गन्ता तङ्गन्तायं यतो भीतिः॥

आस्थितप्रतिषेधश्च वक्तव्यः। *। [चतुर्थी वेति वक्तव्ये द्वितीयाग्रहणमपवाद-विषयेऽपि यथा स्यात्]।

इति द्वितीया तदपवादश्च।

---

मनःसाधर्म्म्यात् वनमपि गृहं पुरं वा, पुरं गृहमपि वनं भवति। अहो चेत् यदि असौ सतां सङ्गाय 'मार्गं'—"गत्यर्थकर्म्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि"—व्रजति, अस्य जनस्य स परिश्रमः अध्वगमनजन्यः धन्यः। सत्सङ्गलाभार्थमेव दूरदेशगमनं श्रेयोऽन्यथा वृथापरिश्रम इति भावः।

१६७। जनेति। भयतः भयवशात् जनसेवितं तु पन्थानं परिहाय 'पथे'—"आस्थितप्रतिषेधश्च वक्तव्यः। *।"—स गच्छति उत्पथेनेति शेषः। 'यस्मै कस्मै' गन्ता, तस्य गमनस्य न कापि नियतिः, अयं जनः 'तम्' पन्थानं गन्ता, यतो भीतिः अतिसाहसिकत्वात्। भीतस्य प्रतिदिनं गमनमार्गस्य परिवर्त्तनं भवति प्रच्छन्नत्वरक्षणाय, न निर्भीकस्य।

इति द्वितीया तदपवादश्च।

१६८ । भिक्षां ददातु पात्राय तस्मै न रोचते धनम् ।
विषयेभ्यः स्पृहयति चित्तं यस्य कुतः सुखम् ॥

(क) चतुर्थी सम्प्रदाने [स्यात् दरिद्राय धनं ददौ] ।

सम्प्रदाने [कारके] चतुर्थी (२।३।१३) ।

१६९ । पात्रं पानायास्मै हितं न नाशाय कल्पते तद्धि ।
मरणाय भवति मद्यैराकर्षगुणविरतिर्नु झञ्झायै ॥

तादर्थ्ये उपसंख्यानम् । * । क्लृपि सम्पद्यमाने वक्तव्या । * ।
उत्पातेन ज्ञाप्यमाने च वक्तव्या । * । हितयोगे च वक्तव्या । * ।

१७० । धनाय गच्छन्ति जनास्तमेव
त्यागाय यः सञ्चिनुते धनानि ।

---

१६८ । भिक्षामिति । 'पात्राय' दानभाजनाय भिक्षां ददातु । 'तस्मै' न धनं रोचते । यस्य चित्तं 'विषयेभ्यः'—"चतुर्थी सम्प्रदाने"—स्पृहयति तस्य सुखं कुतः । धनेऽरुचेः कारणं विषयसुखस्य परिणामविरसत्वम् ।

१६९ । पात्रमिति । 'पानाय' पात्रं—"तादर्थ्ये उपसंख्यानम् । * ।"—'अस्मै' मद्यपायिने—"हितयोगे च वक्तव्या । * ।"—न हितम् । कथम् ? तत्पात्रं हि 'नाशाय' कल्पते, मद्यैः 'मरणाय'——"क्लृपि सम्पद्यमाने वक्तव्या । * ।"——भवति । 'झञ्झायै' नु—"उत्पातेन ज्ञाप्यमाने च वक्तव्या । * ।"—आकर्षगुणविरतिः । यदाकर्षस्याकर्षण-गुणादेर्विरतिर्द्दृश्यते तदा धीनैर्झञ्झामरुदनुमीयते, वस्तुतः पृथिवीस्थाकर्षशक्त्याकर्षगुणस्य काले काले व्यतिक्रमो भवतीति विज्ञानसिद्धं तत्त्वम् ।

१७० । धनायेति । तमेव 'धनाय'—"क्रियार्थोपपदस्य च कर्म्मणि स्थानिनः"—धनमर्तुं जनाः गच्छन्ति यः 'त्यागाय'—"तुमर्थाच्च भाववचनात्"—त्यागं कर्त्तुं

तस्मै नमो यो वितरत्यमुभ्यो
दिव्यं धनं स्वस्ति चिरं तदस्मै ॥
स्वाहाग्नये वाथ वषट् स्वधा तु
पितृभ्य इत्युक्तिरहो न जातु ।
अलं विमुक्त्यै न सुखाय शक्ता
तं स्वार्थवाहं न तृणाय मन्ये ॥

(क) क्रियार्थोपपदस्य च कर्म्मणि स्थानिनः [शुभ] ।

क्रियार्थोपपदस्य च स्थानिनः [अप्रयुज्यमानस्य धातोः] कर्म्मणि चतुर्थी (२।३।१४)।

(ख) [भवेत्] तुमर्थाच्च भाववचनात् [याति भूतये] ।

तुमर्थात् भाववचनात् च [प्रातिपदिकात्] चतुर्थी (२।३।१५) ।

(ग) नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च [शुभ] ।

नमः स्वस्ति-स्वाहा-स्वधा-ऽलं-वषड्-योगात् च चतुर्थी (२।३।१६) ।

(घ) मन्यकर्म्मण्यनादरे विभाषाऽप्राणिषु [प्रिय] ।

मन्यकर्म्मणि अप्राणिषु विभाषा चतुर्थी अनादरे [गम्यमाने] (२।३।१७) ।

---

धनानि सञ्चिनुते । 'तस्मै' जनाय नमः, यः अमुभ्यः अर्थिभ्यः दिव्यं धनं वितरति, तत् तस्मात् "अस्मै" दिव्यधनवितरणशीलाय स्वस्ति । 'अग्नये' स्वाहा, अथवा 'अग्नये' वषट्, 'पितृभ्यः' तु स्वधा इत्युक्तिः अहो न जातु 'विमुक्त्यै'—"नमः-स्वस्ति-स्वाहा-स्वधालं-वषड्योगाच्च"—अलम् पर्य्याप्ता, न 'सुखाय' शक्ता, न हि तादृशोक्त्या मुक्तिः सुखोत्पत्तिर्वा । तं स्वार्थवाहं स्वार्थसिद्धयेऽनुष्ठानपरं स्वार्थपरायणं न 'तृणाय'—"मन्यकर्म्मण्यनादरे विभाषाऽप्राणिषु"—मन्ये ।

१७१। न त्वा नावं मन्ये मन्ये न त्वा भक्तमिह चेत्।
भवपारोऽमृतता न कृपण न मन्ये त्वा शृगालम्॥

अप्राणिष्वाने ऽनावादिष्विति वक्तव्यम्। *।

इति चतुर्थी।



१७२। साधितं तेन यत्कार्य्यं कृपया ह्येव तद्धरेः।
इच्छासाम्येन यदिह कल्याणं यत्प्रसिद्ध्यति॥

(क) [भुक्तं तेन च्छिन्नं] कर्त्तृकरणयोस्तृतीया [स्यात्]।

कर्त्तृकरणयोस्तृतीया (२।३।१८)।

---

१७१। नेति। न त्वा 'नावं' मन्ये, न त्वा 'भक्तम्' अन्नं मन्ये, इह चेत् यदि भवपारः संसारोत्तारः अमृतता न। तरणात्तरणीत्वं भवसागरपारगमने, अन्नत्वान्नत्वं ह्यमृतत्व-लाभे। हे कृपण व्ययकुण्ठ न त्वा 'शृगालं'—"अप्राणिष्वाने ऽनावादिषु वक्तव्यम्। *।"—मन्ये। दानभोगवर्ज्जनादनादरभाजनम्।

इति चतुर्थी।

---

१७२। साधितमिति। 'तेन' जनेन यत्कार्य्यं साधितं तत् हरेः 'कृपया'—"कर्त्तृकरणयोस्तृतीया"—एव हि। कार्य्यमत्र कल्याणं ज्ञेयम्। यत् यस्मात् इह यत् कल्याणं प्रसिद्ध्यति तत् इच्छासाम्येन भगवदिच्छया नरेच्छायाः समत्वेन एकत्वेन।

१७३ । मधुरं वचः प्रकृत्या मधुरो व्यवहारः प्रायेण ।
गोत्रेण हि द्विजन्मा सुखेन किन्नु वसेन्नियतम् ॥

प्रकृत्यादिभ्य उपसंख्यानम् । * ।

१७४ । सख्यं न पापिन समं कदाचन
किन्तेन चेत् काण इहाङ्ग चक्षुषा ।
योगाद्वियुक्तोऽयमहो न तापसो
जटाभिराभाति हि शान्तदर्शनः ॥

(क) सहयुक्तेऽप्रधाने[ऽयं पुत्रेण सह गच्छति] ।

सहार्थयुक्ते अप्रधाने तृतीया (२।३।१९) ।

(ख) [स्याद्]येनाङ्गविकारो[ऽक्ष्णा काणः कुण्ठस्तु पाणिना]।

येनाङ्गविकारः ततः तृतीया (२।३।२०) ।

(ग) इत्थम्भूतलक्षणे[ऽसौ जटाभिस्तापसो यथा] ।

इत्थम्भूतलक्षणे तृतीया (२।३।२१) ।

---

१७३ । मधुरमिति । वचः 'प्रकृत्या' मधुरं, व्यवहारः 'प्रायेण' मधुरः । हि यस्मात् 'गोत्रेण' द्विजन्मा । व्यवहारसम्भाषणेनोच्चगोत्रत्वं लक्षितम् । द्विजन्मत्वन्तु पार्थिव-जीवनपरिहारेण देवत्वप्राप्त्या । किं ननु नियतं 'सुखेन'—"प्रकृत्यादिभ्य उपसंख्या-नम् । * ।"—वसेत् ? अवश्यं वसेदेव ।

१७४ । सख्यमिति । 'पापिन'—"सहयुक्तेऽप्रधाने"—समं सह न कदाचन सख्यं सौहृद्यम् । तेन किं, चेत् यदि इह अङ्ग हे वाल 'चक्षुषा'—"येनाङ्गविकारः"—काणः । कथम् ? अयं योगाद्वियुक्तः । अहो न 'जटाभिः'—"इत्थम्भूतलक्षणे"—तापसः, हि यस्मात् शान्तदर्शनः आभाति तापस इति शेषः । जटोपलक्षितोऽयं तप-स्वीति भ्रान्तिविजृम्भितम्, प्रशान्तदर्शनेनैव स नित्यपरिलक्षितः ।

१७५ । शास्त्रेण संज्ञास्यत एष शिल्पं
तथा यशो निश्चितमेव विद्यया ।
शतात् स बद्धो मनुतेऽमितेन
न बन्धितो नैव शतेन नित्यशः ॥

(क) [स्यात्] संज्ञोऽन्यतरस्यां कर्म्मणि [संजानीते तेन] ।
संज्ञ: [संपूर्व्वस्य जानातेः] कर्म्मणि तृतीया अन्यतरस्याम (२।३।२२) ।

(ख) हेतौ [पापेन दुःखं स्यात् सुखं पुण्येन निश्चितु] ।
हेतौ तृतीया (२।३।२३) ।

(ग) [स्याद्]ऽकर्त्तर्य्यृणे पञ्चमी [संबद्धः शतादसौ] ।
अकर्त्तरि ऋणे हेतौ पञ्चमी (२।३।२४) ।

१७६ । जाड्येन विद्वत्त्वत एष बद्धः
बुद्ध्या भजेशन्तु सुखस्य हेतोः ।

---

१७५ । शास्त्रेणेति । एष जनः 'शास्त्रेण' तथा 'शिल्पं'—"संज्ञोऽन्यतरस्यां कर्म्मणि"—संज्ञास्यते शास्त्रं शिल्पञ्च ज्ञास्यति । कथम् ? निश्चितम् एव 'विद्यया'—"हेतौ"—यशः ख्यातिः । सः 'शतात्' शतस्य ऋणस्य हेतोः बद्धः मनुते, अमितेन 'शतेन' ऋणेन—"अकर्त्तर्य्यृणे पञ्चमी"—नित्यशः न बन्धितो नैव अपि तु बन्धित एव । संसारेऽस्मिन् मुद्रादिग्रहणजनितर्णात् यथा भीतिः, न तथाऽदृश्यागण्यर्णसमूहेन बन्धितत्वात् । वयं परमेशितुः पितुर्मातुः स्वजनानां सामान्यतः जनवर्गाणां सविधेऽपरिमितर्णैर्बद्धा इति तत्त्वम् ।

१७६ । जाड्येनेति । एष जनः 'जाड्येन' 'विद्वत्त्वतः' 'बुद्ध्या'—"विभाषा गुणेऽस्त्रियाम्"—बद्धः । ततः किं कर्त्तव्यम् ? 'सुखस्य' हेतोः—"षष्ठी हेतुप्रयोगे"—ईशं परमेश्वरन्तु

हृथा पुनः पृच्छति केन हेतु-

नासौ विजानाति च कस्य हेतोः ॥

(क) [जाड्याज्जाड्येन वा बद्धः स्यात्]विभाषागुणेऽस्त्रियाम् ।

गुणे हेतौ अस्त्रियां विभाषा तृतीया (२।३।२५) ।

(ख) षष्ठी हेतुप्रयोगे [स्याद्धेतोरन्नस्य सङ्गतः] ।

हेतुशब्दप्रयोगे षष्ठी (२।३।२६) ।

(ग) सर्व्वनाम्नस्तृतीया च [स केन हेतुना गतः] ।

सर्व्वनाम्नः हेतुप्रयोगे हेतौ तृतीया षष्ठी च (२।३।२७) ।

१७७ । कस्मिन् हेतौ कस्य च हेतोः कस्माद्धेतोः केन ।
स्याद्धेतुना च को वा हेतुर्ब्बहुशोऽफलः प्रश्नः ॥

निमित्त-कारण-हेतुषु सर्व्वासां प्रायदर्शनम् । * ।

इति तृतीया तदपवादश्च ।

---

अत्र । हृथा पुनः पृच्छति 'केन' हेतुना जाड्यादिभिर्बद्ध इति शेषः । 'कस्य' हेतोः —"सर्व्वनाम्नस्तृतीया च"—असौ विजानाति च । ईश्वरभजनविरहादेवं भवतीति जानातीति भावः ।

१७७ । कस्मिन्निति । 'कस्मिन्' हेतौ 'कस्य' च हेतोः 'कस्मात्' हेतोः 'केन' च हेतुना स्यात् 'को' वा हेतुः बहुशः प्रश्नः अफलः, कारणस्याज्ञेयत्वात् ।

इति तृतीया तदपवादश्च ।

१७८। कुतः प्रेमा विशुद्धः स्यादजितेन्द्रियमानवात्।
यः कामवशगो नित्यं स स्थानाद्भ्रंशते खलु॥

(क) अपादाने पञ्चमी [स्यात् पर्व्वतादवरोहति]।

अपादाने [कारके] पञ्चमी [विभक्तिः] (२।३।२८)।

१७९। मेरोर्व्वा भूमेर्व्वा पश्यतु साधोर्महत्त्वं हि।
अज्ञेयं खल्वेतज्ज्ञानन्तु कुतः पुनः स्वर्गात्॥

ल्यब्लोपे कर्म्मण्यधिकरणे चोपसंख्यानम्। *।

प्रश्नाख्यानयोश्च वक्तव्यम्। *।

१८०। ननु फाल्गुन्याश्चैत्री मासे स तु हिमवति शीतो नु।
वाराणसी प्रयागादधिकतरेष्वष्टयोजनानि न तु॥

---

१७८। कुत इति। 'अजितेन्द्रियमानवात्' कुतः विशुद्धः प्रेमा स्यात् आत्मसुखत्यागं विना तस्यासम्भवात्। यः कामस्य वशगः, स खलु नित्यं 'स्थानात्'—"अपादाने पञ्चमी"—भ्रंशते। इहलोकात् परलोकाच्च तस्य परिभ्रंशः।

१७९। मेरोरिति। 'मेरोः' मेरुमारुह्य 'भूमेः'—"ल्यब्लोपे कर्म्मण्यधिकरणे चोपसंख्यानम्। *।"—भूमौ उपविश्य वा साधोः महत्त्वं पश्यतु, हि निश्चितम् एतत् तस्य साधोः महत्त्वम् अज्ञेयं ज्ञानेनानधिगम्यम्। कुतस्तत्सम्पर्कीयज्ञानस्यागमस्तदाह—कुतः ज्ञानम्? ज्ञानन्तु पुनः 'स्वर्गात्'—"प्रश्नाख्यानयोश्च वक्तव्यम्। *।"—तथाहि—"न मां प्राकटयज्जातु तुभ्यं भो मांसशोणितम्। पिता तु स्वर्गधामस्थो धन्योऽसि त्वं शिमन्नहो॥"

१८०। नन्विति। 'फाल्गुन्याः' चैत्री 'मासे'—"यतश्चाध्वकालनिर्म्माणं ततः। *।"—"तद्युक्तात्काले सप्तमी वक्तव्या। *।"—हिमवति हिमालये स तु मासः शीतः शीतप्रधानः नु? वाराणसी प्रयागात् अधिकतरेषु 'योजनेषु' न तु 'अष्टयोजनानि'—"अध्वनः प्रथमा सप्तमी च वक्तव्या। *।" पुरुषोत्तमोक्तानि। अर्द्धेनाधिकानि द्वादशयोजनानि क्रोशानां पञ्चाशत् तु तत्त्वतो दूरत्वम्।

यतश्चाध्वकालनिर्म्माणं ततः । * । तद्युक्तात् काले सप्तमी वक्तव्या । * ।
अध्वनः प्रथमा सप्तमी च वक्तव्या । * ।

१८१ । कस्त्राता परमादन्यो वन्धायास्माद्विलक्षणः ।
आरादस्मान्न गन्तव्यं देवः को वेतरो हरेः ॥
नास्माहते ज्ञानदाता गङ्गायाः पूर्व्वं आसते ।
तटे ब्रह्मविदश्चातः पूर्व्वे काले हिमालये ॥
प्राक् प्रत्यक् देशतो नायं भेदो भ्रान्तविभेदकः ।
दक्षिणाद्युत्तरा वाथ चेत् परे मिलिता वयम् ॥

(क) [बाला]ऽन्यारादितरर्त्ते दिक्-
शब्दाञ्चूत्तरपदाजाहियु-
क्ते[ऽन्यस्तस्माद्विवदत्तादि] ।

अन्या-ऽऽरादि-तर-र्त्ते-दिक्-शब्दा ऽञ्चूत्तरपदा ऽऽजा-ऽऽहि-युक्ते पञ्चमी (२।३।२९) ।

१८२ । उत्तरतो हिमवतः स्वर्गो दक्षिणतः पुनः ।
यमालयो भारतस्य मिथ्या हृदि विलोकय ॥

---

१८१ । क इति । 'परमात्' परमेश्वरात् अन्यः कः त्राता ? 'अस्मात्' ईश्वरात् विलक्षणः विषयः बन्धाय । 'अस्मात्' आरात् विषयस्य समीपे न गन्तव्यम् । 'हरेः' इतरः कः वा देवः ? 'अस्मात्' हरेः ऋते न ज्ञानदाता, 'गङ्गायाः' पूर्व्वे तटे ब्रह्मविदः आसते, 'अतः' पूर्व्वे काले हिमालये आसतेति शेषः, 'देशतः' प्राक् प्रत्यक्, दक्षिणाद्वि उत्तरा वा—"अन्यारादितरर्त्तेदिक्शब्दाञ्चूत्तरः पदाजाहियुक्ते"—नायं भेदः भ्रान्तविभेदकः, चेत् यदि वयं परे परमेश्वरे मिलिताः ।

१८२ । उत्तरत इति । 'हिमवतः' उत्तरतः स्वर्गः 'भारतस्य' दक्षिणतः—"षष्ठ्यतसर्थप्रत्ययेन"—पुनः यमालयः ; एतत् मिथ्या, हृदि विलोकय स्वर्गं नरकञ्चेति शेषः ।

(क)　[दक्षिणतो ग्रामस्य] षष्ठ्यतसर्थप्रत्ययेन ।

अतसर्थप्रत्ययेन युक्ते षष्ठी (२।३।३०) ।

१८३ ।　दक्षिणेन हिमगिरिमुत्तरेण ह्युदन्वतः ।
विन्ध्यः कटितटे भाति भूषणं भारतस्य वा ॥

(क)　[स्याद्] एनपा द्वितीया[ऽद्रेरुत्तरेण वनं यतः] ।

एनपायुक्ते द्वितीया [षष्ठी] (२।३।३१) ।

१८४ ।　विना धनं नाथ जनेन यौवनात्
सुखं पृथङ्मन्यत एष धर्म्मात् ।
धिया न नाना खलु मुग्धया ततो
यतस्ततोऽन्यन्ननु दुःखमेकलम् ॥

(क)　[स्यात्] पृथग्विनानानाभिस्तृतीयान्यतरस्यां [भोः]।

पृथक्-विना-नानाभिः [योगे] तृतीया अन्यतरस्याम् (२।३।३२) ।

---

१८३ । 'हिमगिरिं' दक्षिणेन, 'उदन्वतः'—"एनपा द्वितीया"—उत्तरेण हि विन्ध्यः भारतस्य कटितटे भूषणं वा इव भाति ।

१८४ । विनेति । 'धनं' विना 'जनेन' विना अथवा 'यौवनात्' विना न सुखम् । एष तादृक्चिन्तनशीलो जनः मुग्धया धिया 'धर्म्मात्' पृथक् मन्यते सुखमिति शेषः । धनादिकं न हि सुखस्य कारणं किन्तु धर्म्मः, यतः सुखं न धर्म्मतो भिन्नम् तदेवाह—यतः 'ततः' धर्म्मात् न नाना—"पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्"—भिन्नम् सुखमिति शेषः । 'ततः' धर्म्मात् अन्यत् ननु एकलं केवलं दुःखम् ।

१८५। कृच्छ्रेणायं विषयकलुषादल्पतो नैव मुक्तः
स्तोकाद्बद्धः स तु कतिपयान्मुक्त आसीन्नु पूर्व्वम्।
दूरं पापाद्विषमविमतेरन्तिकं धर्म्मनीते-
र्दूरेणातः क्षिपति विषयानन्तिकात् सज्जनस्य॥

(क) करणे च स्तोकाल्पकृच्छ्रकति-
पयस्यासत्त्ववचनस्य [बाल]।

स्तोका-ऽल्प-कृच्छ्र-कतिपयस्य असत्त्ववचनस्य करणे [कारके] तृतीया अन्यतरस्याम् (२।३।३३)।

---

१८५। कृच्छ्रेणेति। विषयकलुषात् अयं जनः नैव 'अल्पतः' मुक्तः 'कृच्छ्रेण' मुक्त इति शेषः। स तु साधकोऽन्यः 'स्तोकात्' बद्धः आसीत्, सुतरां पूर्व्वं 'कतिपयात्'—"करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य"—मुक्तः आसीत् नु। बन्धनस्याल्पत्वादल्पसाधनेनैव मुक्तोऽभवत्। 'विषमविमतेः' 'पापात्' दूरं, 'धर्म्मनीतेः' अन्तिकं, सुतराम् 'सज्जनस्य' अन्तिकात् 'अतः' दूरेण—"दूरान्तिकार्थैः षष्ठ्यन्यतरस्यां" "दूरान्तिकार्थेभ्यो द्वितीया च"—विषयान् क्षिपति। विमतिपापाभ्यां दूरं धर्म्मनीतेरन्तिकं सुतरां सज्जनस्य समीपे वसन् तादृशजनस्य हि सज्जनप्रकृतिः सम्भवति—अतः साधकात् दूरेण विषयान् क्षिपति तादृग्जन इति शेषः।

इति पञ्चमी।

(ख) दूरान्तिकार्थैः षष्ठ्यन्यतरस्या[मन्तिकं वनात्] ।

दूरान्तिकार्थैः [योगे] षष्ठी अन्यतरस्यां [पञ्चमी] (२।३।३४) ।

(ग) [बाल] दूरान्तिकार्थेभ्यो द्वितीया चा[न्तिकाद्मृगोः]।

दूरान्तिकार्थेभ्यो द्वितीया तृतीया पञ्चमी च (२।३।३५) ।

इति पञ्चमी ।

---

१८६ । आस्ते हृदीशः परमस्तदन्तिके
वासः प्रयासेन न साध्य ईप्सितम् ।
तस्मिन् समस्तं लभते नु मानव-
स्तस्मादृतेऽन्येषु कथं समादरः ॥

(क) सप्तम्यधिकरणे च [स्थाल्यां पचति स तिले तैलम्] ।

अधिकरणे [कारके] सप्तमी दूरान्तिकार्थेभ्यश्च (२।३।३६) ।

---

१८६ । आस्त इति । परमः ईशः 'हृदि' आस्ते । 'तदन्तिके' वासः न प्रयासेन साध्यः । तथाहि प्रह्लादः—"को नु प्रयासोऽसुरबालका हरेरुपासने स्वे हृदि छिद्रवत् सतः । स्वस्यात्मनः सख्युरशेषदेहिनां सामान्यतः किं विषयोपपादनैः ॥" मानवः 'तस्मिन्' समस्तम् ईप्सितं नु लभते । तथाच—"अनन्याश्चिन्तयन्तो मां ये नराः पर्य्युपासते । तेषां सततयुक्तानां योगक्षेमं वहाम्यहम् ।" तस्मात् परमेश्वरात् ऋते कथम् 'अन्येषु'—"सप्तम्यधिकरणे च"—समादरः । "सामान्यतः किं विषयोपपादनै"रित्येष पाद इममेवार्थं भङ्ग्यन्तरेण व्यनक्ति ।

१८७। नाधीती व्याकरणे प्रशस्यते दैवते ह्यसाधुश्चेत् ।
सत्सु तरत्सु विमूढ़ा आसत इह परमेशविमुखाः॥
तिष्ठत्स्वसत्सु सन्तस्तरन्ति ते पुनरिह सत्सु तिष्ठत्सु ।
द्वीपिनमिह हन्ति हि यच्चर्म्मणि तज्जनशान्तयेऽपि॥

क्तस्येन्विषयस्य कर्म्मण्युपसंख्यानम् । * ।
साध्वसाधुप्रयोगे चोपसंख्यानम् । * ।
कारकार्हाणां कारकार्हत्वेऽकारकार्हाणां चाकारकत्वे तद्विपर्य्यासे च सप्तमी । * ।
निमित्तात् कर्म्मयोगे वक्तव्या । * ।

---

१८७। नाधीतीति। 'व्याकरणे'—"क्तस्येन्विषयस्य कर्म्मण्युपसंख्यानम् । * ।"—अधीती अधीतम् अनेनेति अधीती न प्रशस्यते, चेत् यदि 'दैवते' ईश्वरे—"साध्वसाधुप्रयोगे चोपसंख्यानम् । * ।"—हि असाधुः। 'सत्सु' तरत्सु परमेशविमुखाः विमूढ़ाः इह आसते। सन्तो हि तरणक्रियार्हा तेऽत्र तरणकर्त्तारः। यदा ते भवसागरोत्तीर्णा भवन्ति तदा ह्यसन्त आसते तरणानर्हत्वात्। 'असत्सु' तिष्ठत्सु सन्तः तरन्ति। असन्तः तरणक्रियानर्हाः तेषां तरणक्रियायामकर्तृत्वात् ते तिष्ठन्ति सन्तस्तरन्ति। 'सत्सु'—"कारकार्हाणां कारकार्हत्वेऽकारकार्हाणां चाकारकार्हत्वे तद्विपर्य्यासे च सप्तमी । * ।"—तिष्ठत्सु इह इहलोके ते असन्तः तरन्ति नद्यादीनिति शेषः। यद्यपि पारलौकिकतरणक्रियायां तरणक्रियार्हाः सन्त एव तरन्ति, इहलोके नद्यादितरणक्रियायां यद्यपि सन्त एव तरणार्हास्तथापि निर्द्धनत्वात्ते ह्युपेक्षिताः, सुतरां तरणक्रियायां तेषामकर्त्तृत्वम् अनर्हाणामसतान्तु तत्र कर्त्तृत्वम्। इह द्वीपिनं व्याघ्रं यत् 'चर्म्मणि'—"निमित्तात् कर्म्मयोगे वक्तव्या । * ।"—व्याघ्रशरीरसंयुक्तचर्म्मनिमित्तं तं हन्ति, तत् जनशान्तयेऽपि भवति।

१८८ । गतेषु दुःखेषु मनः प्रसीदति
रुदत्सु चात्मीयजनेषु सोऽव्रजत् ।
स्वकृत्यहेतो रुदतां पुरा पुन-
र्जनः प्रवव्राज विरक्तमानसः ॥

(क) [बाल] यस्य च भावेन भावलक्षण[मिष्यते] ।

यस्य च भावेन [क्रियया] भावलक्षणं [क्रियान्तरं लक्ष्यते] ततः सप्तमी (२।३।३७)।

(ख) षष्ठी चानादरे [सोऽयं प्राव्राजीद्रुदतामहो] ।

अनादरे [अनादराधिक्ये भावलक्षणे] षष्ठी सप्तमी च (२।३।३८)।

१८९ । स्वामीश्वरोऽस्माकमहो जनेषु
सर्व्वेष्वसौ चाधिपतिः परेशः ।
अस्मिन्न दायाद ऋतेषु साक्षी
कस्मिन् प्रसूतः प्रतिभूर्न चास्मिन् ॥

---

१८८ । गतेष्विति । दुःखेषु 'गतेषु'—"यस्य च भावेन भावलक्षणम्"—मनः प्रसीदति । आत्मीयजनेषु 'रुदत्सु' स्वकृत्यहेतोः सः अव्रजत्, पुरा पुनः विरक्तमानसः जनः 'रुदतां'—"षष्ठी चानादरे"—रुदत आत्मीयजनाननादृत्य प्रवव्राज । वर्त्तमान-समये प्रव्रजनं नैकान्तं किन्तर्हि कार्य्यसाधनार्थं सामयिकम्, पुरा तु विरक्तः सन् चिराय प्रवव्राज ।

१८९ । स्वामीति । असौ ईश्वरः 'अस्माकं' स्वामी, अहो सर्व्वेषु 'जनेषु' असौ परेशः परमेश्वरः च अधिपतिः, 'अस्मिन्' ईश्वरे न दायादः तदैश्वर्य्यभागी अद्वितीय-प्रतिमाविरहितत्वात्, असौ 'ऋतेषु' सदनुष्ठानेषु साक्षी । असौ परमेश्वरः 'कस्मिन्' प्रसूतः अजत्वात् न कस्मिन्नपि, 'अस्मिन्'—"स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च"—परमेश्वरे न च प्रतिभूः तत्स्थानीयोऽन्यः ।

(क) स्वामीश्वराधिपतिदायाद-
साक्षिप्रतिभूप्रसूतैश्च [भोः] ।

स्वामी-श्वरा-धिपति-दायाद-साक्षि-प्रतिभू-प्रसूतैश्च [योगे] षष्ठीसप्तम्यौ (२।३।३९)।

१९० । आयुक्त एषोऽनुगतौ हरेश्चेत्
सर्व्वत्र नित्यं कुशलः किल स्यात् ।
लोकेषु च श्रेष्ठतमो जनानां
श्रेष्ठोऽयमुद्युक्ततरोऽपरेभ्यः ॥

(क) [बालका]ऽऽयुक्तकुशलाभ्याञ्चा-
सेवायां [स कुशलो हि वचने] ।

आयुक्तकुशलाभ्यां च आसेवायां [गम्यमानायां] षष्ठीसप्तम्यौ (२।३।४०)।

(ख) यतश्च निर्द्धारणं [स श्रेष्ठो ज्ञानेन तेषु च] ।

यतः निर्द्धारणं ततः षष्ठीसप्तम्यौ (२।३।४१) ।

(ग) [स्यात्] पञ्चमी विभक्ते[ऽसौ तस्माच्छ्रेष्ठतरो गुणैः] ।

विभक्ते [निर्द्धारणाश्रये] पञ्चमी (२।३।४२) ।

---

१९० । आयुक्त इति । एष चेत् यदि हरेः 'अनुगतौ' आयुक्तः तत्परः, किल निश्चितं नित्यं 'सर्व्वत्र'—"आयुक्तकुशलाभ्यां चासेवायाम्"—कुशलः स्यात् । भगवति नियुक्तचित्तस्य सर्व्वत्र कुशलत्वम् । एष जनः 'लोकेषु' श्रेष्ठतमः, 'जनानां'—"यतश्च निर्द्धारणम्"—श्रेष्ठः प्रियतमः । अयम् 'अपरेभ्यः'—"पञ्चमी विभक्ते"—उद्युक्ततरः नियतं कर्म्मण्युत्साहपरः । "यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्व्वैर्गुणैस्तत्र समासते सुराः" इति तत्त्वम् ।

१९१ । साधुर्मातरि नित्यं स निपुणोऽध्ययनेषु च ।
धन्यः साधुरयं भृत्यो राज्ञः साधुर्जनं प्रति ॥

(क) [निपुणो मातरि] साधुनिपुणाभ्या-
मर्च्चायां सप्तम्यप्रतेः [स्यात्] ।

साधु-निपुणाभ्यां [योगे] अर्च्चायां [गम्यमानायां] अप्रतेः [प्रतेरप्रयोगे] सप्तमी (२।३।४३) ।

१९२ । स तमनु साधुर्नित्यं तां परि जीवितमस्य फलवत्।
पूज्योऽसाधुर्न पुनर्लोकेऽस्मिन् परजीवनेऽपि ॥

अप्रत्यादिभिरिति वक्तव्यम । * ।

१९३ । केशेषु प्रसितो वेशैरुत्सुकश्चात्महा खलु ।
पुष्ये संयतचित्तः स्या मघाभिर्ब्रह्मवान् भवेः ॥

---

१९१ । साधुरिति । नित्यं स 'मातरि' साधुः 'अध्ययनेषु' च निपुणः । अयं भृत्यः 'राज्ञः' साधुः । 'जनं' प्रति—"साधुनिपुणाभ्यामर्च्चायां सप्तम्यप्रतेः"—साधुः धन्यः ।

१९२ । स तमिति । 'त'मनु 'तां' परि—"अप्रत्यादिभिरिति वक्तव्यम् ।*।"—स नित्यं साधुः । अस्य जनस्य जीवितं फलवत् नरनारीषु साध्वाचारशीलत्वात् । असाधुः पुनः न अस्मिन् लोके परजीवनेऽपि पूज्यः ।

१९३ । केशेष्विति । 'केशेषु' प्रसितः आसक्तः 'वेशैः'—"प्रसितोत्सुकाभ्यां तृतीया च"—उत्सुकः खलु आत्महा केशादीन् प्रत्यासक्तत्वादात्मन्यनादरपरः, अतएवात्मघाती । 'पुष्ये' पुष्यनक्षत्रयुक्ते काले संयतचित्तः स्याः तत्र संयममनुतिष्ठ, 'मघाभिः'—"नक्षत्रे च लुपि"—मघानक्षत्रयुक्तकाले ब्रह्मवान् भवेः ब्रह्मोत्सवाय निर्द्दिष्टकालत्वात् ।

इति सप्तमी तदपवादश्च ।

—— ०:० ——

(क) [स्यात्]प्रसितोत्सुकाभ्यां तृतीया च [प्रसितो धनैः]।

प्रसितोत्सुकाभ्यां [योगे] तृतीया सप्तमी च (२।३।४४)।

(ख) नक्षत्रे च लुपि [चीरं पुष्ये मूलेन मूलकम्]।

लुपि च नक्षत्रे तृतीयासप्तम्यौ (२।३।४५)।

इति सप्तमी तदपवादश्च।



१८४। नरो वा नारी वा कमलममलं वाढ़कमहो
तथा नीचैरुच्चैरपि च बहवो द्वौ विमलधीः।
तथैको यो या यद्गुणभवन यौ या तदखिलं
व्यनक्ति व्यक्तीनां कतिपयदशां व्यक्तमिह भोः॥

(क) प्रातिपदिकार्थलिङ्गपरिमाण-
वचनमात्रे प्रथमा [कुमारी]।

प्रातिपदिकार्थमात्रे लिङ्गमात्रे परिमाणमात्रे वचनमात्रे प्रथमा (२।३।४६)।

---

१८४। नर इति। 'नरः' वा 'नारी' वा अमलं 'कमलं' वा अहो 'आढ़कम्' परिमाणविशेषः, तथा 'उच्चैः' 'नीचैः' अपि च 'बहवः' 'द्वौ' 'एकः' 'यः' 'या' 'यत्' 'यौ' 'ये'—"प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा"—तत् अखिलं हे 'विमलधीः' 'भो गुणभवन'—"सम्बोधने च" "सामन्त्रितम्" "एकवचनं सम्बुद्धिः"—व्यक्तीनां द्रव्याद्रव्याणां कतिपयदशां व्यक्तं स्फुटम् व्यनक्ति। नरत्वादिकावस्था अगण्या लिङ्गवचनपरिमाणघटिता या अत्र प्रोक्तास्ताः खलु कतिपयाः।

इति प्रथमा।

१८

(ख) सम्बोधने च [हे राम],—

सम्बोधने च प्रथमा (२।३।४७)।

(ग) सामन्त्रित[महो हरे]।

सम्बोधने या प्रथमा सा आमन्त्रितम् (२।३।४८)।

(घ) एकवचनं सम्बुद्धि[र्यथा हे राम माधव]।

आमन्त्रितप्रथमाया एकवचनं सम्बुद्धिः (२।३।४९)।

इति प्रथमा।

---

१९५। भोगस्य कामेन स वस्तुजाते
घृतस्य जानीत इव प्रवर्त्तते।
स्मरेद्धरेस्त्वेद्दयते स तस्य
चित्तस्य चेष्टे तमिमं त्वधीयात्॥

---

१९५। स इति। स 'भोगस्य'—"षष्ठी शेषे"—कामेन अभिलाषेण वस्तुजाते वस्तुसमूहे प्रवर्त्तते 'घृतस्य'—"ज्ञोऽविदर्थस्य करणे"—जानीत इव, यथा यो हि घृते रक्तो निवृत्तो वा भवति स चित्तभ्रान्त्या सर्व्वत्र घृतबोधेन प्रवर्त्तते, तथा भोगाभिलाषी जनः स्वचित्तविकारवशात् पुष्पादिष्वतिपवित्रवस्तुष्वपि कुत्सितभोगास्पदत्वेन प्रवर्त्तते, ततस्तेभ्योऽतिविशुद्धवस्तुभ्योऽपि तस्य चित्तविकार उपतिष्ठते। चेत् यदि स 'हरेः' स्मरेत्, स हरिः 'तस्य' दयते तमनुगृह्णाति, 'चित्तस्य' च ईष्टे यथेष्टं विनियुङ्क्ते। 'तमिमं' हरिं तु 'अधीयात्'—"अधीगर्थदयेशां कर्म्मणि"—"शेष इति च"—स्मरेत्। स्मरणेन हि चित्तविकारविनिवृत्तिः।

(क) षष्ठी शेषे [पशोः पादः पितुः पुत्त्रस्तदस्य च]।

शेषे [स्वस्वामिसम्बन्धादौ] षष्ठी (२।३।५०)।

(ख) ज्ञोऽविदर्थस्य करणे [जानीते सर्पिषो यथा]।

ज्ञः [जानातेः] अविदर्थस्य करणे षष्ठी (२।३।५१)।

(ग) अधीगर्थदयेशां कर्म्मणी[ष्टे मधुनो यथा]।

अधीगर्थ-दये-शां कर्म्मणि [कारके] षष्ठी [शेषत्वेन] (२।३।५२)।

१८६। एलां तथोपस्कुरुते लवङ्ग-
स्यैतस्य रोगी रुजति प्रवृत्ते।
अत्यन्नपाने पुनरामयश्च
तमामयत्यङ्ग कृतापचारम्॥

(क) [स्यात्] कृञः प्रतियत्ने[ऽन्यस्योपस्कर्त्तुं कृतश्रमः]।

कृञः [करोतेः] कर्म्मणि [शेषत्वेन] षष्ठी (२।३।५३)।

(ख) रुजार्थानां भाववचनानामज्वरेः [सुमते]।

रुजार्थानां [धातूनां] भाववचनानां [भावकर्तृकाणां] अज्वरेः कर्म्मणि [शेषत्वेन] षष्ठी।

---

१८६। एलामिति। 'एलां' तथा 'लवङ्गस्य'—"कृञः प्रतियत्ने" "शेष इति"—उपस्कुरुते, 'एतस्य' रोगी रुजति, एलां लवङ्गस्येत्युपलक्षणम् एलाद्युपस्कारयुक्तमाहार्य्यमतिगुरु अतएव ततो रोगोत्पत्तिः। पुनः अत्यन्नपाने प्रवृत्ते आमयश्च कृतापचारं 'तम्'—'रुजार्थानां भाववचनानामज्वरेः' "शेष इति"—अङ्ग हे बाल आमयति।

१८७। तापः सन्तापयति ज्वरो ज्वरयति हि परिद्वढः।
जनमजितलोभविधुरं नियमान् विलङ्घ्य भुङ्क्ते तं सः॥

अज्वरि-सन्ताप्योरिति वक्तव्यम्। *।

१८८। स नाथते यद्विषयस्य तस्य
पिनष्टि चोज्जासयति प्रहन्ति।
उन्नाटयन् क्राथयति प्रकामं
न तं विरक्तं प्रणिहन्ति कश्चित्॥

(क) [बालक]आशिषि नाथो[मधुनोऽसौ नाथते हि यथा]।

नाथः आशिषि [शेषत्वेन] षष्ठी (२।३।५५)।

(ख) [बाल] जासिनिप्रहणनाट-
क्राथपिषां हिंसायां [निहन्ति]।

जासि-निप्रहण-नाट-क्राथ-पिषां हिंसायां कर्म्मणि षष्ठी (२।३।५६)।

---

१८७। ताप इति। अजितलोभविधुरं 'जनं' परिद्वढः तापः सन्तापयति, ज्वरो ज्वरयति—"अज्वरि-सन्ताप्योरिति वक्तव्यम्। *।"—स लोभपरवशः नियमान् शारीरिकान् विलङ्घ्य तं ज्वरं तज्जनितसन्तापञ्च भुङ्क्ते।

१८८। स इति। स जनः यत् यस्मात् 'विषयस्य'—"आशिषि नाथः"—विषयो भोगस्य मे भूयादित्याशास्ते, तत् तस्मात् 'तस्य'—"जासिनिप्रहणनाटक्राथपिषां हिंसायाम्"—पिनष्टि उज्जासयति प्रकामम् उन्नाटयन् क्राथयति स विषय इति शेषः। 'तं'—"शेष इत्येव"—जनं विरक्तं विषयविमुखं न कश्चिद्विषयः प्रणिहन्ति। विषयानुराग एव विनाशनिमित्तं, विषयविरागो हि मुक्तिहेतुः।

१९९। शतानां कोटीनां व्यवहरति वा दीव्यति पुनः
स लक्षाणां नित्यं पणत इह वा तत्सममहो।
शतं लक्षं कोटिं व्यवहरति संदीव्यति मुहु-
रितीयं वृत्तिर्नो तमवति जनं संसृतिभयात्॥

(क) [शुभ स्मृता] व्यवहृपणोः समर्थयोः।

समर्थयोः [समानार्थयोः] व्यवहृपणोः कर्म्मणि षष्ठी (२।३।५७)।

(ख) दिवस्तदर्थस्य [यथा शतस्य दीव्यति प्रिय]।

तदर्थस्य [व्यवहृपणि-समानार्थस्य] दिवः कर्म्मणि षष्ठी (२।३।५८)।

(ग) [ज्ञेया] विभाषोपसर्गे [सहस्रं प्रतिदीव्यति]।

सोपसर्गस्य तदर्थस्य दिवः विभाषा कर्म्मणि षष्ठी (२।३।५९)।

२००। उपासतेऽह्नो ननु पञ्चकृत्वो
येऽहन्यहो द्विर्न कदाप्युपास्ते।

---

१९९। शतानामिति। 'शतानां' स व्यवहरति 'कोटीनां' वा पुनः दीव्यति, इह 'लक्षाणां' वा—"व्यवहृपणोः समर्थयोः" "दिवस्तदर्थस्य"—पणते, अहो तत्समम्। कथम्? मुहुः 'शतं' 'लक्षं' 'कोटिं' व्यवहरति संदीव्यति—"शेष इत्येव"—"विभाषोपसर्गे"—इति इयं वृत्तिः तं जनं संसृतिभयात् न अवति। न हि धनैः संसृति-भयवारणम् परमेशभजनेन तु।

२००। उपासत इति। ननु ये 'अह्नः'—"कृत्वोऽर्थप्रयोगे कालेऽधिकरणे"—पञ्चकृत्वः उपासते; अहो कदापि द्विः 'अहनि'—"शेष इत्येव"—न उपास्ते स एष

स एष तेषां यदि निन्दकः स्यात्
पाषण्डमध्ये खलु शायिकाऽस्य ॥

(क) [वाल] क्त्वोऽर्थप्रयोगे कालेऽधिकरणे [स्मृता] ।

क्त्वोऽर्थप्रयोगे कालेऽधिकरणे षष्ठी (२।३।६४) ।

(ख) [आसिकास्य पुरां भेत्ता स्यात्] कर्त्तृकर्म्मणोः कृति ।

कृति कर्त्तृकर्म्मणोः षष्ठी (२।३।६५) ।

२०१ । पानन्तु पयसां तेन साधु पुष्टिबलप्रदम् ।
भोजनं पललस्याङ्ग योगिनातिविगर्हितम् ॥

(क) उभयप्राप्तौ कर्म्मण्या[श्चर्य्यं दोहो गवाञ्च तैः] ।

उभयप्राप्तौ कृति कर्म्मणि षष्ठी (२।३।६६) ।

२०२ । चेत् भेदिकाऽस्य कुमतेः कुशलस्य च वा चिकीर्षाऽस्य ।
अनुशासनञ्च विवृतिः स्यादाचार्य्येणेशस्य च ॥

---

यदि 'तेषां' निन्दकः स्यात्, पाषण्डमध्ये खलु 'अस्य'—"कर्त्तृकर्म्मणोः कृति"—शायिका। स जनः पाषण्डमध्ये गण्यो भवति योऽसौ तादृशानुपासनासंरतान् निन्दति ।

२०१ । पानमिति । तेन साधु 'पयसां' पानं पुष्टिबलप्रदम् अङ्ग हे बाल योगिना 'पललस्य'—"उभयप्राप्तौ कर्म्मणि"—भोजनम् अतिविगर्हितम् हिंसाप्राधान्यात् भोगदोषदुष्टत्वाच्च ।

२०२ । चेदिति । चेत् यदि 'अस्य' 'कुमतेः' भेदिका 'अस्य' कुशलस्य' वा—"अकाकारयोः प्रतिषेधो नेति वक्तव्यम् । * ।"—चिकीर्षा 'आचार्य्येण' विवृतिः 'ईशस्य' च—"शेषे विभाषा । * ।"—अनुशासनं स्यात् । कुमतिच्छेदे प्रवृत्तो आचार्य्यस्य परमेशेच्छाविवृतौ प्रवृत्तिः, कुशले चित्तनिवेशे भगवतो निदेशागमो भवतीति पूर्व्वपरसम्बन्धः। विधृतिरिति पाठे आचार्य्येणानुशासनम्, विधृतिः ईशस्य, कुशलस्य मार्गे भगवता नित्यसंरक्षणम् ।

अकाकारयोः प्रतिषेधो नेति वक्तव्यम्। *।

शेषे विभाषा। *।

२०३। सर्व्वेषां पूजितः सोऽयं सतां सर्व्वत्र सम्मतः।
फलानां तृप्त एवासौ निर्वृतिं परमां गतः॥

(क) क्तस्य च वर्त्तमाने [स्यात् पूजितोऽसौ सतां यथा]।

क्तस्य च वर्त्तमाने षष्ठी भवति (२।३।६७)।

२०४। हसितं त्रिदोषविकृतिप्रपीड़ितस्य भयाय नित्यम्।
कल्मषविकारविकृतेर्नैतद्ध्वंसाय ननु तस्य॥

नपुंसके भाव उपसंख्यानम्। *।

शेषविज्ञानात् सिद्धम्। *।

२०५। उषितमिदमेवैषां हरिचरणपङ्कजम्।
नेता स्वर्गस्य लोकानां स तं नेता न चापरः॥

---

२०३। सर्व्वेषामिति। सोऽयं जनः 'सर्व्वेषां' पूजितः, सर्व्वत्र सर्व्वस्मिन् विषये 'सतां'—"क्तस्य च वर्त्तमाने"—सम्मतः। कथम्? 'फलानां' तृप्त एव असौ परमां निर्वृतिं गतः प्राप्तः।

२०४। हसितमिति। 'त्रिदोषविकृतिप्रपीड़ितस्य'—"नपुंसके भाव उपसंख्यानम्। *।"—हसितं नित्यं भयाय। 'कल्मषविकारविकृतेन' जनेन—"शेषविज्ञानात् सिद्धम्। *।"—एतत् हसितं ननु तस्य जनस्य ध्वंसाय। रोगजनितविकारोत्थित-हास्यं यद्यपि भयमुत्पादयेत्, न खलु तस्यात्मनो विनाशाय, पापकृतविकारेण तु विनाशः।

२०५। उषितमिति। इदं हरिचरणपङ्कजम् एव 'एषाम्'—"अधिकरणवाचिनश्च"—उषितम्। स हरिः 'लोकानां' 'स्वर्गस्य' नेता, न च अपरः 'लोकानां' तं स्वर्गं नेता। [द्विकर्म्मणां प्रयोगे कर्त्तरि कृति द्वयोरपि षष्ठी द्वितीयावत्। अन्ये प्रधाने कर्म्मण्याहुः]।

(क) अधिकरणवाचिनश्चो[षितमेतन्नित्यं सतां हि] ।

अधिकरणवाचिनश्च क्तस्य षष्ठी (२।३।६८) ।

२०६ । भजन्नीशं दिदृक्षुश्च यजमानोऽन्यमत्र किम् ।
मण्डयमान आत्मानं कर्त्ता कर्म्म न गर्हितम् ॥
अलङ्करिष्णुर्हृदयं न घातुकः
कृत्वा कुकार्य्यं कृतवान् स पुण्यम् ।
कृतञ्च यत्तेन न गर्व्वमाप्त-
स्ततस्तदीषत्करमेव तेन न ॥

(क) [अन्नं पचन्निह] न लोकाव्ययनिष्ठाखलर्थतृणाम् ।

लोका [ल उक]-ऽव्यय-निष्ठा-खलर्थ तृनां [प्रयोगे] न षष्ठी (२।३।६९) ।

२०७ । कामुक एष हि वित्तस्येह च वदिता जनापवादांश्चेत् ।
आत्मानं त्वाघ्नानो द्विषन् जनानां सतश्चैषः ॥

कमेरुकारान्तस्य भाषायां प्रतिषेधो नेति वक्तव्यम् । * ।

द्विषः शतुर्व्वा वचनम् । * ।

---

२०६ । भजन्निति । 'ईशं' भजन्, दिदृक्षुश्च तमिति शेषः 'अन्यं' परमेशव्यतिरिक्तं किमत्र यजमानः । इह 'आत्मानं' मण्डयमानः न गर्हितं 'कर्म्म' कर्त्ता भवति । 'हृदयम्' अलङ्करिष्णुः न घातुकः, 'कुकार्य्यं' कृत्वा स 'पुण्यं' कृतवान् 'तेन' यत् कृतं, ततः 'गर्व्वं' न आप्तः, 'तेन'—"न लोकाव्ययनिष्ठाखलर्थतृणाम्"—न तत् ईषत्करम् प्रयत्नसाध्यत्वात् ।

२०७ । कामुक इति । चेत् यदि इह एष हि 'वित्तस्य' कामुकः—"कमेरुकारान्तस्य भाषायां प्रतिषेधो वक्तव्यः । * ।"—जनापवादान् वदिता, 'जनानां' 'सतश्च' द्विषन्—"द्विषः शतुर्व्वा वचनम् । * ।"—आत्मानं तु आघ्नानो भवति । स जन आत्मघाती ।

२०८ । कारको व्रजति कृत्यमप्रियं
गामिनं सदसमस्य साधने ।
शास्तु सा सततमत्र वा शतं
दायिना सकृपमाचरत्वहो ॥

(क) [यात्यन्नं भोजको]ऽकेनोर्भविष्यदधमर्णयोः ।

अकेनोर्भविष्यदधमर्णयोः न षष्ठी (२।३।७०) ।

२०९ । कर्त्तव्यो भवता धर्म्मो नाधर्म्मो भवतः पुनः ।
स्तोत्राणां गेय एव स्याच्चाटूनां न भवान् क्वचित् ॥

(क) [स्यात्]कृत्यानां कर्त्तरि वा[मया सेव्योऽथवा मम] ।

कृत्यानां कर्त्तरि वा षष्ठी [न कर्म्मणि] (२।३।७१) ।

२१० । नेतव्या जनसदसं नीतिः शास्त्रविदा तु नियतम् ।
कष्टव्यः स कुवृत्तो जनमण्डल्या विचारसमितिं हि ॥

---

२०८ । कारक इति । अप्रियं 'कृत्यं' कर्म्म कारको व्रजति, अस्य अप्रियस्य कृत्यस्य साधने 'सदसं' गामिनं तं सा सदः सततं शास्तु । अत्र सदसि वा 'शतं'—"अकेनोर्भविष्यदधमर्णयोः"—दायिना सह षष्ठी सकृपम् आचरतु । यो हि समाजस्यामङ्गल-कर्म्मणि रतः स शासनार्हः, किन्तु ऋणे बद्धः न स तथेति पूर्व्वपरसम्बन्धः ।

२०९ । कर्त्तव्य इति । 'भवता' धर्म्मः कर्त्तव्यः, न पुनः 'भवतः'—"कृत्यानां कर्त्तरि वा"—अधर्म्मः कर्त्तव्यः । भवान् गेयः स्तोत्राणाम् एव स्यात् न क्वचित् चाटूनाम् । ईश्वरप्रशंसायां न तु जनविशेषसन्तोषसम्पादनार्थं वचनरचना कर्त्तव्या ।

२१० । नेतव्येति । 'शास्त्रविदा' तु नियतं 'नीतिः' 'जनसदसं' नेतव्या ; 'जन-मण्डल्या' स कुवृत्तः 'विचारसमितिं'—"उभयप्राप्तौ कृत्ये षष्ठ्याः प्रतिषेधो वक्तव्यः ।*।" —कष्टव्यः हि । "अत्याचारं भावकहस्तपिटं ददतं प्रति । गच्छे दक्षिणकं चान्यमुपेतेत्य-नुशाधि भोः ॥" इत्यनुशासनं जनपरं न मण्डलीपरमन्यथा विचारानुशासनं विरुध्येत ।

उभयप्राप्तौ कृति षष्ठ्याः प्रतिषेधो वक्तव्यः । * ।

२११ । तुल्यः साधोः परेणापरजन इह को दैवतं वोपमात्र
तस्यास्ते नो तुला वा त्रिभुवनविभवे तुच्छबोधः श्रितानाम् ।
भूयाद्भद्रं सुखं भोः कुशलमितरतेर्मद्रमायुष्यमस्य
शर्म्मार्थोऽस्मै हितं शं निखिलजनहिताशंसिने सुष्ठु भूयात् ॥

(क) [स्यात्] तुल्यार्थैरतुलोपमाभ्यां
तृतीयान्यतरस्यां [कल्याण] ।

अतुलोपमाभ्यां तुल्यार्थैः तृतीया अन्यतरस्यां [पक्षे षष्ठी] (२।३।७२) ।

(ख) [बाल] चतुर्थी चाशिष्यायुष्य-
मद्रभद्रकुशलसुखार्थहितैः ।

आशिषि [गम्यमानायाम्] आयुष्य-मद्र-भद्र-कुशल-सुखा-र्थ-हितैः चतुर्थी षष्ठी च (२।३।७३) ।

अत्रायुष्यादीनां पर्य्यायग्रहणं कर्त्तव्यम् । * ।

इति षष्ठी ।

इति दृष्टान्तसर्व्वस्वे दृष्टान्तानुगमने कारके विभक्ति-
निर्द्देशो नाम द्वितीयं प्रकरणम् । वृत् ।

---

२११ । तुल्य इति । 'साधोः' तुल्यः इह कः अपरजनः, 'परेण' तुल्यं दैवतं वा । अत्र 'तस्य' उपमा तुला वा—"तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्"—नो न आस्ते । कथम् ? श्रितानां भगवदाश्रितानां किन्तु भगवतः त्रिभुवनविभवे तुच्छबोधः । इतरतेः प्राप्तानुरागस्य तस्मिन् भगवतीति शेषः 'अस्य' भोः भद्रं सुखं कुशलं मद्रम् आयुष्यं शर्म्म भूयात् । निखिलहिताशंसिने 'अस्मै'—"चतुर्थी चाशिष्यायुष्यमद्रभद्र-कुशलसुखार्थहितैः"—सुष्ठु अर्थः हितं शं भूयात् ।

इति कारके दृष्टान्तव्याख्यायां द्वितीयं प्रकरणम् । वृत् ।

# समासप्रकरणम् ।

## अव्ययीभावः ।

२१२ । अधिगुणं निखिलेषु च सम्मति-
रुपजनं विनयः परिशोभते ।
सुमगधं खलु बुद्धपदेन दु-
र्यवनमित्यपवाद इहार्दनात् ॥
क्व ननु निर्मशकं खलु वर्त्तते
हिमगिरौ न तु जातु हि निर्हिमम् ।
अतिभयं विधिरेष उपागत-
इतिहरि प्रियनामपरेष्वहो ॥
अनुहरि प्रतिसाधु नतिः शुभा
सदनुरूपमिहास्य च कीर्त्तनम् ।

---

२१२ । अधिगुणमिति । 'अधिगुणं' गुणमधिकृत्य निखिलेषु च सम्मतिः सम्मानना । 'उपजनं' जनसमीपे विनयः परिशोभते । 'सुमगधं' मगधस्य समृद्धिः बुद्धपदेन माननीयेन बुद्धेन बुद्धविहारभूमित्वादस्य यथार्थसमृद्धिः । 'दुर्यवनं' यवनानामृद्धेरभावः इति इह अपवादः अर्द्दनात् परपीड़नात् । 'निर्मशकं' मशकानाम् अभावः खलु क्व ननु वर्त्तते । हिमगिरौ 'निर्हिमं' अतीतानि हिमानि हि जातु कदाचित् न तु । न ह्यत्र संसारे कुत्रापि विघ्नाभावः तस्य तत्स्वभाववलात् 'अतिभयं' भयं सम्प्रति न युज्यते । कथम् ? विधिः भगवद्विधानम् एष उपागतः, सम्प्रति प्रकटभगवल्लीलाकालो वर्त्तते, सुतरां नास्ति भयकारणम् । अहो प्रियनामपरेषु 'इतिहरि' हरिशब्दस्य प्रकाशः । 'अनुहरि' हरेः पश्चात् 'प्रतिसाधु' साधुं साधुं प्रति नतिः शुभा । 'अनुरूपं' अस्य हरेः

सहरि नो भजनञ्च यथाबल-
मनुगुणं प्रविशन्तु सभां जनाः ॥
सफलकं न च धेहि मृधन्त्वसत्
ससखि बाल गुणो नियतं नृणाम् ।
श्रुतविदां सविदं परमार्च्चनात्
सतुषमत्ति सकृत्यमधीतवान् ॥

(क) समर्थः पदविधिः [संवेदितव्योऽर्थपण्डितः] ।

पदविधिः [समासादिः] समर्थः [विग्रहवाक्यार्थाभिधानशक्तः] (२।१।१)।

(१) [स्यात्]सुबामन्त्रिते पराङ्गवत् स्वरे[चरन् मठे](२।१।२)।

(ख) प्राक् कड़ारात् समासो[ऽधिकृतं]—

कड़ारात् प्राक् समासः [विदितव्यः] (२।१।३)।

(ग) सह सुपा [त्रयम्] ।

सुबिति सहेति सुपेति च त्रयमधिकृतं वेदितव्यम् (२।१।४)।

---

सत्कीर्त्तनम्। 'सहरि' हरेः सादृश्यं नो न, 'यथाबलं' बलमनतिक्रम्य भजनं च। 'अनुगुणं' गुणस्यानुपूर्व्व्येण जनाः सभां प्रविशन्तु। 'सफलकं' शस्त्रैरन्यैः युगपत् फलकं न च धेहि धारय, कथम्? मृधं युद्धं तु असत्। हे बाल 'ससखि' सख्या सदृशः नृणां नियतं गुणः। यादृशः सखिगणस्तादृशो हि गुणसञ्चारः, सङ्गानुरूपगुणत्वात्। परमार्च्चनात् ईश्वरपूजनात् श्रुतविदां शास्त्रज्ञानां 'सविदं' ज्ञानानुरूपात्मभावः। 'सतुषं' तुषमप्यपरित्यज्य निःशेषेण अत्ति। 'सकृत्यं'—"अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु"—कृत्यान्तम् अधीतवान्। द्रुतविलम्बितमेतद्वृत्तम्। तल्लक्षणम्—"द्रुतविलम्बितमाह नभौ भरा"विति।

(घ) अव्ययीभाव[इत्येषा ज्ञातव्याधिकृतिः शिष्टैः](२।१।५)।

(ङ) अव्ययं विभक्तिसमीपसमृद्धि-
व्यृद्ध्यर्थाभावात्ययासम्प्रति-
शब्दप्रादुर्भावपश्चाद्यथा-
नुपूर्व्ययौगपद्यसादृश्य-
सम्पत्तिसाकल्यान्तवचनेषु ।

विभक्त्यादिष्वर्थेषु अव्ययं समर्थेन सुपा सह [समस्यते] अव्ययीभावः [च समासः] (२।१।६) ।

२१३। यथाश्रयं तान् परिभावयन्तो
महात्मनस्तेऽत्र यथा भवेयुः ।
तथा नरा यावदुपायमापदि
विधेहि यत्नान् किमतः फलप्रति ॥

(क) यथाऽसादृश्य [आमन्त्रय यथावृद्धं कुटुम्बिनः] ।

असादृश्ये [वर्त्तमानं] यथा सुपा सह [समस्यते]अव्ययीभावः [च समासः](२।१।७)

(ख) [यावदमन्त्रमामन्त्रय भो] यावदवधारणे ।

अवधारणे [वर्त्तमानं] यावत् सुपा सह [समस्यते] अव्ययीभावः [च समासः] (२।१।८) ।

---

२१३। यथेति । 'यथाश्रयम्'—"यथासादृश्ये"—ये ये आश्रयाः तान् प्रसिद्धान् महात्मनः परिभावयन्तः परिचिन्तयन्तः नराः, ते महात्मानः अत्र भूमौ यथा आसन्निति शेषः, तथा भवेयुः । महात्मनां चिन्तया तेषां गुणलाभो भवति । ते हि चिन्तनाश्रयाः । आपदि 'यावदुपायं'—"यावदवधारणे"—यावन्त उपायाः सम्भवन्ति तावतः यत्नान् विधेहि । अतः किं स्यात् ? 'फलप्रति'—"सुप् प्रतिना मात्रार्थे"—फलस्य लेशः । यद्यपि न सम्पूर्णसिद्धिस्तथापि लेशमात्रेणापि ।

(ग) [स्यात्] सुप् प्रतिना मात्रार्थे [सूपप्रति यथा शुभ]।

मात्रार्थे [वर्त्तमानेन] प्रतिना सुपा सह सुप् [समस्यते] अव्ययीभावः [च समासः] (२।१।९)।

२१४। शलाकापर्य्यक्षपरि त्रिपरीत्यजये जये।
भवोदासीन एवात्र द्यूतं सर्व्वं विगर्हितम्॥

(क) अक्षशलाकासंख्याः परिणा[ऽक्षपरि शलाकापरि]।

अक्ष-शलाका-संख्याः परिणा सह [समस्यन्ते]अव्ययीभावः[च समासः](२।१।१०)।

२१५। अपवङ्गादपराढ़ं वरेन्द्रात्परि वा वहिः।
पञ्चालात्प्राग्दाक्षिणात्यं नान्यत्रालोक एष किम्॥

(क) विभाषे [त्यधिकारोऽयं तेषां ये विहिता इह](२।१।११)।

(ख) अपपरिवहिरञ्चवः पञ्चम्या
[नृप त्रिगर्त्तं हि दृष्टो देवः]।

अप-परि-वहि-रञ्चवः पञ्चम्या सह विभाषा [समस्यन्ते] अव्ययीभावः [च समासः] (२।१।१२)।

---

२१४। शलाकेति। शलाकयेदं न तथा वृत्तं यथा पूर्व्वं जये 'शलाकापरि' 'अक्षपरि' 'त्रिपरि'—"अक्षशलाकासंख्याः परिणा"—इति अजये जये उदासीनः एव भव भव। कथम्? सर्व्वं द्यूतं विगर्हितम्।

२१५। अपेति। 'अपवङ्गात्' 'अपराढ़ं' 'वरेन्द्रात्' परि, 'पञ्चालात्' वहिः 'प्राग्दाक्षिणात्यं'—"विभाषा" "अपपरिवहिरञ्चवः पञ्चम्या"—अन्यत्र किम न एष आलोकः। सर्व्वेषां देशानां परस्परविवदमानानां साम्यमस्ति वैषम्यन्तु केवलं विषमदृष्टिवशादिति तत्त्वम्।

२१६। आकुमारमभितो यशोऽस्य-
माऽऽस्तेरपि च यत्र लक्ष्यते।
सोऽयमीशमभि याति चेत् पुनः
प्रत्यनिष्टमिह धावते न हि॥

(क) आङ्मर्य्यादाभिविध्यो [राकुमारं पाणिनेर्यशः]।

मर्य्यादाभिविध्योः [वर्त्तमान]आङ् पञ्चम्या सह विभाषा [समस्यते] अव्ययीभावः [च समासः] (२।१।१३)।

(ख) [स्याल्] लक्षणेनाभिप्रती आभिमुख्ये[ऽभिमारुतम्]।

लक्षणेन सुपा आभिमुख्ये [वर्त्तमानौ] अभिप्रती विभाषा [समस्येते] अव्ययीभावः [च समासः] (२।१।१४)।

२१७। अनुवनं नगरं न नु शोभते
तदनुगङ्गमहो हरते मनः।
क्षपक एष वहद्गु मुदे पुन-
र्न च तथा मुसलामुसलि प्रिय॥

---

२१६। आकुमारमिति। यत्र जने 'आकुमारम्' अभितो भृशं यशः। 'आस्तेः'—"आङ्मर्य्यादाभिविध्योः"—अपि च लक्ष्यते, सोऽयं जनः चेत् यदि पुनः 'ईशम् अभि' याति, इह 'प्रत्यनिष्टं'—"लक्षणेनाभिप्रती आभिमुख्ये"—पापं प्रति न हि धावते। न हि केवलं यशसा पापनिवृत्तिः, ईश्वराभिमुख्येन।

२१७। अनुवनमिति। 'अनुवनं'—"अनुर्यत्समया"—न नु नगरं शोभते ? शोभत एव। 'अनुगङ्गम्'—"यस्य चायामः"—गङ्गायामेन नगरायामो लक्ष्यते तादृशं तत् नगरं मनः हरते। 'वहद्गु' वहन्ति गावो यस्मिन् काले तस्मिन् एष क्षपकः पुनः मुदे हर्षाय। न तथा हे प्रिय 'मुसलामुसलि'—"तिष्ठद्गुप्रभृतीनि च"—अधर्म्मकरत्वात्।

(क) अनुर्यत्समया [सोऽनुवनं चरति बालक]।

यत्समया अनुः तेन लक्षणेन सह विभाषा [समस्यते] अव्ययीभावः [च समासः] (२।१।१५)।

(ख) यस्य चायाम [एषोऽनुगङ्गं देशो वृहत्तमः]।

अनुर्यस्य च आयामः [दैर्घ्यम्] तेन लक्षणेन सह विभाषा [समस्यते] अव्ययीभावः [च समासः] (२।१।१६)।

(ग) तिष्ठद्गुप्रभृतीनि च [तिष्ठद्गु आयतीगवम्]।

तिष्ठद्गुप्रभृतीनि निपात्यन्ते (२।१।१७)।

२१८। पारेगङ्गं वसति स मुनिः पारमन्योऽङ्ग सिन्धोः
मध्येगङ्गं तरणिनिचये सार्थवाहा वसन्ति।
शास्त्रस्यास्य त्रिमुनि मुनयः सप्तगोदावरञ्च
धन्या एते जनविभवदाः कृष्णगङ्गं कुतो वा॥

(क) [स्यात्] पारे मध्ये षष्ठ्या वा [गङ्गापारं तथा शुभ]।

पारे मध्ये षष्ठ्या सह विभाषा [समस्येते] अव्ययीभावः [च समासः] वा [षष्ठी-समासः] (२।१।१८)।

---

२१८। पार इति। स मुनिः 'पारेगङ्गं' वसति, अन्यः मुनिः पारं वसतीति शेषः। 'मध्येगङ्गं'—"पारे मध्ये षष्ठ्या वा"—गङ्गायाः मध्ये तरणिनिचये सार्थवाहाः वणिजः वसन्ति। अस्य शास्त्रस्य व्याकरणस्य 'त्रिमुनि'—"संख्या वंश्येन"—त्रयः मुनयः पाणिनिः कात्यायनः पतञ्जलिश्च वंश्याः। जनविभवदाः एते मुनयः धन्याः। 'सप्तगोदावरं'—"नदीभिश्च"—'कृष्णगङ्गम्'—"अन्यपदार्थे च संज्ञायाम्"—तन्नामकदेशः कुतः वा।

इत्यव्ययीभावः।

—०:०—

(ख) संख्या वंश्येन [त्रिमुनि व्याकरणस्य बालक] ।

वंश्येन सुपा सह संख्या [समस्यते] अव्ययीभावः [च समासः] (२।१।१९) ।

(ग) नदीभिश्च [पञ्चनदं सप्तगोदावरं यथा] ।

नदीभिः [शब्दैः] सह संख्या [समस्यते] अव्ययीभावः [च समासः] (२।१।२०) ।

(घ) [कल्याण]ऽन्यपदार्थे च संज्ञायां [कृष्णगङ्गमेत्] ।

नदीभिः सह अन्यपदार्थे [वर्त्तमानः] सुप् संज्ञायां [विषये समस्यते] अव्ययीभावः [च समासः] (२।१।२१) ।

इत्यव्ययीभावः ।

---

## तत्पुरुषः ।

२१९ । नरकपतितस्त्वाशातीतो हरिश्रित एष चे-
दतिशयसुखप्राप्तः सच्छ्रीगतः परिशोभते ।
विहरति भयात्यस्तो मृत्युं विजित्य निरन्तरं
परमपुरुषापन्नो मायां विहाय विराजते ॥

(क) तत्पुरुषो[ऽधिकारोऽयं संज्ञाविषयकः स्मृतः] (२।१।२२)।

(ख) द्विगुश्च [पञ्चराजी च द्रष्टः पञ्चगवं यथा] ।

द्विगुश्च [समासः] तत्पुरुषः (२।१।२३) ।

---

२१९ । नरकेति । 'नरकपतितः' तु 'आशातीतः' आशाम् अतिक्रान्तः आशाया अवस्थामतिक्रम्य स्थितः एवम्भूतः जनः चेत् 'हरिश्रितः' हरिम् आश्रितः 'अतिशयसुखप्राप्तः' 'सच्छ्रीगतः' परिशोभते । अतिशयपापनिरतोऽपि यदि भगवन्तं श्रयते सुखप्राप्तिः श्रीसम्पन्नतावश्यम्भाविनी । 'भयात्यस्तः' भयं व्यतिक्रान्तः मृत्युं विजित्य निरन्तरं विहरति, 'परमपुरुषापन्नः'—"द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः"—मायां विहाय विराजते । हरिणीवृत्तमेतत्—तल्लक्षणम्—"नसमरसलागः षड्वेदैर्हयैर्हरिणी मता" इति ।

(ग) [स्वाद्] द्वितीया श्रितातीतपतित-
गतात्यस्तप्राप्तापन्नैः [भोः] ।

श्रिता-तीत-पतित-गता-त्यस्त-प्राप्ता-पन्नैः सह द्वितीया [समस्यते] तत्पुरुषः [च समासः] (२।१।२४) ।

२२० । न खलु द्वितीयगामी परमेश्वर इति शब्दो जातु।
नितरां भवतु स तत्त्वजिज्ञासुरिति शुभाभिलाषः॥

गम्यादीनामुपसंख्यानम् । * ।

२२१ । स्वयम्भृतश्चेद्यश आधिनोति
खट्वाप्लुता नाशमहो व्रजन्ति ।
यत्सामिभुक्तं तदसद्यदि स्या-
त्याज्यं स मासप्रमितो विधुर्व्वा ॥

(क) स्वयं क्तेन [स्वयं धौतः स्वयं विलीनमेव तत्] ।

स्वयं क्तेन [समस्यते] तत्पुरुषः [च समासः] (२।१।२५) ।

---

२२० । न खल्विति । परमेश्वर इति शब्दः न खलु जातु 'द्वितीयगामी' । नितरां स 'तत्त्वजिज्ञासुः'—"गम्यादीनामुपसंख्यानम् । * ।"—भवतु इति शुभाभिलाषः ।

२२१ । स्वयमिति । चेत् यदि यशः 'स्वयम्भृतं'—"स्वयं क्तेन"—विना यशोलिप्सया स्वतः समुपस्थितम् आधिनोति सन्तोषमुत्पादयति तत्र विधातृहस्तदर्शनात् । 'खट्वाप्लुताः'—"खट्वा क्षेपे"—अपथप्रस्थिताः अहो नाशं व्रजन्ति । यत् 'सामिभुक्तं'—"सामि"—तत् यदि असत् स्यात्, त्याज्यम्, पूर्णमात्रया न भुक्तमिति अदृष्टकामत्वात् नाहं त्यक्ष्यामीति न निर्बन्धः कर्त्तव्यः । 'मासप्रमितः'—"कालाः"—विधुः वा प्रतिपच्चन्द्रमा इव स त्याज्य इति शेषः ।

(ख) खट्वा क्षेपे [खट्वारूढो जाल्मः सोऽयं तिष्ठत्यत्र] ।

क्षेपे [गम्यमाने] खट्वा द्वितीयान्ता क्तान्तेन सह [समस्यते] तत्पुरुषः [च समासः] (२।१।२६) ।

(ग) [सामिभुक्तं यथा] सामि ;—

सामि क्तान्तेन सह [समस्यते] तत्पुरुषः [च समासः] (२।१।२७) ।

(घ) कालाः [मासप्रमितो माः] ।

कालाः द्वितीयान्ताः क्तान्तेन सह [समस्यन्ते] तत्पुरुषः [च समासः] (२।१।२८) ।

२२२ । मुहूर्त्तसुखमापद्य कुत्सिते वर्त्तते यदि ।
पश्चाद्दुःखेन गच्छन्ति दिनानि तत्त्यजेत्सुधीः ॥

(क) [काला]ऽत्यन्तसंयोगे च [मुहूर्त्तं दुःखमुद्वह] ।

कालाः द्वितीयान्ताः अत्यन्तसंयोगे [गम्यमाने]सुपा सह [समस्यन्ते] तत्पुरुषः [च समासः] (२।१।२९) ।

इति द्वितीयातत्पुरुषः ।

---

२२२ । मुहूर्त्तेति । 'मुहूर्त्तसुखं'—"अत्यन्तसंयोगे च"—मुहूर्त्तकालव्यापि सुखम् आपद्य यदि कुत्सिते विषये वर्त्तते पश्चाद्दुःखेन दिनानि गच्छन्ति । तत् सुखं मुहूर्त्तकालव्यापि अनित्यमिति यावत् सुधीः त्यजेत् ।

इति द्वितीयातत्पुरुषः ।

२२३। अपांनिधितटे जनो गिरति शष्कुलाखण्डकं
धनार्थ इह चेद्वणिक्सदृश एष लोभार्द्दितः।
न चाब्दचयपूर्व्व इत्यमितसम्मतिभाजनं
न मातृसम एष भो यदपि पालने संरतः॥
धनीन इति किं गुणे भवति तत्र वा नादरो
न वाक्कलह ईहतां प्रतिघमिश्र एवानयः।
स वाङ्निपुण इत्यहो न पुनरीक्षणश्लक्ष्णकः
स धर्म्मविकलो जनः किमुत राजते संसदि॥

---

२२३। अपानिति। अपांनिधितटे समुद्रकूले पूगप्रधाने देशे जनः 'शष्कुलाखण्डकं' शष्कुलया खण्डः शष्कुलाखण्डः तं "लक्षणया तद्वति द्रव्ये वर्त्तते" शष्कुलाखण्डितपूगं गिरति भक्षयति। इह चेत् जनः 'धनार्थः'—"तृतीया तत्कृतार्थेन गुणवचनेन"—'वणिक्सदृशः' एव 'लोभार्द्दितः'। स जनो यदि वयसा वृद्धः स्यात्, तथापि न सम्मानपात्रमित्याह न च 'अब्दचयपूर्व्वः' वत्सरसमूहेन पूर्व्वः इति अमितसम्मतेः विपुलसम्मानस्य भाजनं पात्रम्। यदि स जनः तद्धनेन कमपि परिपालयति, तथापि न विशेषः। कथम्? यदपि एषः जनः पालने संरतः तथापि न 'मातृसमः' मात्रा समः। यदि पालनार्थं प्रशंसितव्यः तदा तत्र मातुस्तुला न विद्यते।

अधुना समादरहेतुमाह धनीन इति। 'धनीनः' धनेन जनः इति तत्र गुणे किं वा न आदरो भवति, अवश्यं भवत्येव। न 'वाक्कलहे' ईहतां चेष्टतां। कथम्? अनयः अनीतिः 'प्रतिघमिश्रः' क्रोधविमिश्र एव, तत्र क्रोधस्यावश्यसद्भावात्। सः 'वाङ्निपुणः' इति अहो न 'ईक्षणश्लक्ष्णकः'—"पूर्व्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः"—दर्शनमनोहरः सर्व्वतोभयसम्मेलनस्यासम्भवत्वात्। वाङ्निपुणोऽपि दर्शनमनोहरोऽपि यदि न धर्म्मसम्पन्नः न जनसंसदि शोभत इत्याह स 'धर्म्मविकलः' जनः किमुत संसदि राजते? कदापि न। पृथ्वीवृत्तम्—"जसौजसयलावसुग्रहयतिश्च पृथ्वी गुरु"रिति लक्षणात्।

(क) तृतीया तत्कृतार्थेन गुणवचनेन [प्रिय] ।

तत्कृतार्थेन गुणवचनेन तृतीया [समस्यते] तत्पुरुषः [च समासः] (२।१।३०) ।

(ख) [स्यात्] पूर्व्वसदृशसमोनार्थकलह-
निपुणमिश्रश्लक्ष्णै[स्तिलमिश्रः] ।

पूर्व्व-सदृश-समो-नार्थ-कलह-निपुण-मिश्र-श्लक्ष्णैः सह तृतीया [समस्यते] तत्पुरुषः [च समासः] (२।१।३१) ।

२२४ । मासावरो यदपि वा वर्षावर इह न गुणेन सः ।
अवरो वर एव पुनर्वयसा न श्रैष्ठ्यं धर्म्मेण ॥

पूर्व्वादिष्ववरस्योपसंख्यानम् । * ।

२२५ । हिंसाहतश्चेन्नखभिन्ननाल-
मिवायमात्मानमहो तयात्र ।
संलूनवान् कूप इव श्वलेह्य-
स्त्याज्यस्तृणच्छेद्य इवाल्पसारः ॥

(क) [स्यात्] कर्त्तृकरणे कृता बहुलं [सोऽहिसंहतः] ।

कर्त्तृकरणे तृतीयान्तेन कृता [समस्यन्ते] तत्पुरुषः [च समासः] (२।१।३२) ।

---

२२४ । मासेति । 'मासावरः' मासेन अवरः यदपि वा 'वर्षावरः'—पूर्व्वादिष्ववरस्योपसंख्यानम् । * ।—वर्षेण अवरः, इह न गुणेन अवरः । स एव पुनः वरः श्रेष्ठः । कथं ? वयसा न श्रैष्ठ्यम् । केन ? धर्म्मेण ।

२२५ । हिंसेति । चेत् यदि 'हिंसाहतः' हिंसया हतः, आत्मानं 'नखभिन्ननालम्'—"कर्त्तृकरणे कृता बहुलम्"—इव अहो तया हिंसया अत्र संलूनवान् । स जनः 'श्वलेह्यः' कूप इव त्याज्यः, 'तृणच्छेद्यः'—"कृत्यैरधिकार्थवचने" "कृत्यग्रहणे यण्ण्यतोर्ग्रहणं कर्त्तव्यम् । * ।"—इव अल्पसारः ।

(ख) [स्यात्]कृत्यैरधिकार्थवचने [वाच्यच्छेद्यं हि तत्] ।

अधिकार्थवचने [गम्यमाने] कर्त्तृकरणे कृत्यैः सह तृतीया [समस्यते] तत्पुरुषः [च समासः] (२।१।३३) ।

कृत्यग्रहणे यण्ण्यतोर्ग्रहणं कर्त्तव्यम् । ७ ।

२२६ । दध्योदनो वा गुड़सक्तुरुच्चैः
पूर्व्वैः प्रियत्वेन गृहीत आसीत् ।
नव्यास्तु मांसौदनमत्र मद्यं
निपीय संगीर्य्य पशुत्वमाप्ताः ॥

(क) अन्नेन व्यञ्जनं [दध्योदनः क्षीरोदनो यथा] ।

व्यञ्जनं तृतीयान्तम् अन्नेन सह [समस्यते] तत्पुरुषः [च समासः] (२।१।३४) ।

(ख) भक्ष्येण मिश्रीकरणं [गुड़धाना यथा प्रिय] ।

मिश्रीकरणं तृतीयान्तं भक्ष्येण सह [समस्यते] तत्पुरुषः [च समासः] (२।१।३५) ।

इति तृतीयातत्पुरुषः ।

---

२२६ । दध्योदन इति । 'दध्योदनः'—"अन्नेन व्यञ्जनम्"—दध्ना उपसिक्तः ओदनः, वा 'गुड़सक्तुः' गुडेन मिश्रः सक्तुः—"भक्ष्येण मिश्रीकरणम्"—उच्चैः प्रियत्वेन पूर्व्वैः गृहीत आसीत् । नव्याः तु अत्र मद्यं निपीय 'मांसौदनं' सङ्गीर्य्य पशुत्वम् आप्ताः ॥

इति तृतीयातत्पुरुषः ।

२२७। चेत् कुण्डलोज्ज्वलमिहास्य हरेन्मनोऽय-
मुन्माथिकामबलिरात्महितं न वृत्तम् ।
नायं पुनर्भवति लोकसुखं कदाचि-
त्तद्रचितं धनमहो न भवेत्तदर्थम् ॥

(क) [कल्याण] चतुर्थी तदर्थार्थ-
बलिहितसुखरचितैः[यूपदारु] ।

तदर्था-र्थ-बलि-हित-सुख-रचितैः सह चतुर्थी [समस्यते] तत्पुरुषः [च समासः] (२।१।३६) ।

अर्थेन नित्यसमासः सर्व्वलिङ्गता च वक्तव्या । * ।

इति चतुर्थीतत्पुरुषः ।

---

२२७। चेदिति । चेत् यदि 'कुण्डलोज्ज्वलं' कुण्डलाय उज्ज्वलं स्वर्णम् अस्य जनस्य मनः हरेत्, अयं जनः 'उन्माथिकामबलिः' उन्माथी उन्मथनकारी कामः तस्मै बलिः । स्वर्णेनापहृतचित्तः कामेष्वात्मोत्सर्गं करोति । तेन किं भवति ? 'आत्महितम्' आत्मने हितं न वृत्तं जातम् । न अयं पुनः कदाचित् 'लोकसुखं' लोकाय जनाय सुखं भवति आत्मसुखरतत्वात् । अधुना परोक्षभावेन धनलुब्धस्याकृतार्थतां दर्शयति । 'तद्रचितं' तस्मै रचितं धनं न 'तदर्थं'—"चतुर्थी तदर्थार्थबलिहितसुखरचितैः"—"अर्थेन नित्यसमासः सर्व्वलिङ्गता च वक्तव्या । * ।"—भवेत् । सञ्चितधनस्य परगामित्वात् । वसन्ततिलकावृत्तं तल्लक्षणं—"उक्ता वसन्ततिलका तभजा जगौ गः" इति ।

इति चतुर्थीतत्पुरुषः ।

—

२२८ । स वृजिनभीतिमावहति चेद्रमणीयगुणः
परिभवनिर्गतो मलिनकृत्यजुगुप्सुरसौ ।
छलकपटव्यपेतहृदयो रिपुमुक्त इह
विपदपोढ़भावनिचयो हरिसक्तमतिः ॥
प्रासादात्पतितः सोऽयं न स्वर्गपतितः पुनः ।
वासनालहरीलीलापत्रस्तो राजते सदा ॥

(क) [स्यात्] पञ्चमी भयेना[सौ वृकभीतो ययौ गृहम्]।

भयेन सह पञ्चमी [समस्यते] तत्पुरुषः [च समासः] (२।१।३७) ।

भय-भीत-भीति-भीभिरिति वक्तव्यम् । * ।

---

२२८। स इति। चेत् यदि रमणीयगुणः स 'वृजिनभीतिम्'—"पञ्चमी भयेन"—पापाद्भयम् आवहति परिभवनिर्गतः परिभवान्निर्गतः, न तस्य कदाचित् पराभवो भवति। मलिनकृत्यजुगुप्सुः असौ 'छलकपटव्यपेतहृदयः' 'रिपुमुक्तः'। इह स 'विपदपोढ़भावनिचयः' विपदतिक्रान्तः भावनिचयो यस्य तादृशः हरिसक्तमतिः हरौ आसक्तचित्तः। पापभयात् पापान्निवृत्तिः, मलिनक्रियासु जुगुप्सया छलकापट्यराहित्यम्, ततो रिपूणामाक्रमणाद्विमुक्तिः। रिपुजनितविघ्नापगमे भावोद्गमप्रतिबन्धनिवृत्तिः, भावोद्गमानन्तरं प्रेमेति निष्कर्षः। नर्कुटकं नर्दटकं वा वृत्तं तल्लक्षणम्—"हयदशभिर्नजौ भजजला गुरु नर्कुटकम्।"

प्रासादादिति। सोऽयं जन. प्रासादात् पतितः, न पुनः 'स्वर्गपतितः'। प्रासादात् पतनं दैववशात् सम्भवति, न ततः परमार्थहानिः। 'वासनालहरीलीलापत्रस्तः'—"अपेतापोढ़मुक्तपतितापत्रस्तैरल्पशः"—वासनालहरीलीलायाः अपत्रस्तः भीतः सदा निरन्तरं राजते। भयवशात्ततो निवृत्येति यावत्।

(ख) [कल्याण]पेतापोढ़मुक्त-
पतितापन्नस्तैरल्पशो[ऽङ्ग] ।

अपेता-पोढ़-मुक्त-पतिता-पन्नैः सह अल्पशः पञ्चमी [समस्यते] तत्पुरुषः [च समासः] (२।१।३८) ।

२२९ । स्तोकान्मुक्तः स विषयविषादन्तिकादागतोऽयं
मृत्योर्दूरादपसृत इह प्राणहृत्पापसंघात् ।
कृच्छ्राल्लब्धाद्विषयनिचयाच्चेत् स वीतस्पृहोऽन्ता-
भ्यासादाप्तो हरिपदसुखं विप्रकृष्टान्नतो न ॥

(क) [स्यात्] स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन [बालक] ।

स्तोका-न्तिक-दूरार्थ-कृच्छ्राणि पञ्चम्यन्तानि क्तेन सह [समस्यते] तत्पुरुषः [च समासः] (२।१।३९) ।

२३० । नियतं परस्सहस्रा परश्शता वीपाया इह ।
विफला हरिभजनस्मृते तेन हि कृतकृत्या हेलया ॥

शतसहस्रौ परेणेति वक्तव्यम् । * ।

इति पञ्चमीतत्पुरुषः ।

---

२२९ । स्तोकादिति । सोऽयं जनः विषयविषात् 'स्तोकान्मुक्तः' । ततः मृत्योः 'अन्तिकादागतः' ; इह प्राणहृत्पापसंघात् 'दूरादपसृतः' । चेत् यदि 'कृच्छ्राल्लब्धात्' विषयनिचयात् स वीतस्पृहः, अथ हरिपदसुखम् 'अभ्यासादाप्तः' न 'विप्रकृष्टान्नतः'— "स्तोकान्तिक-दूरार्थ-कृच्छ्राणि क्तेन"—ततो हरिचरणसुखादिति शेषः । पापसंस्रवं परिहाय वीतस्पृहस्य श्रीहरिचरणसंस्पर्शजनितं सुखं सन्निकर्षं भजते ।

२३० । नियतमिति । 'परस्सहस्राः' सहस्रात् परे 'परश्शताः'—"शतसहस्रौ परेणेति वक्तव्यम् । * ।"—शतात् परे वा उपाया इह हरिभजनम् ऋते विफलाः । तेन हरिभजनेन हि हेलया कृतकृत्याः ।

इति पञ्चमीतत्पुरुषः ।

२३१ । प्रेयान् नित्यं दानशौण्डो धरायां
छायाशुष्कं वाथ काम्पिल्यसिद्धम् ।
स्थालीपक्वं भेषजं रोगिसेव्यं
रम्यः किं वा चक्रबन्धो निबन्धः ॥

(क) सप्तमी शौण्डै[ऽक्षशौण्डः स शास्त्रकुशलो यथा] ।

शौण्डैः [शौण्डादिभिः] सप्तमी [समस्यते] तत्पुरुषः [च समासः] (२।१।४०) ।

(ख) सिद्धशुष्कपक्वबन्धैश्च[थाशुष्कमिन्धनन्तत्] ।

सिद्ध-शुष्क-पक्व-बन्धैः सह सप्तमी [समस्यते] तत्पुरुषः [च समासः] (२।१।४१) ।

२३२ । तीर्थध्वाङ्क्षः कुत्र विश्वासभूमि-
राधिः स्थाप्यो मासदेयेऽपि नित्यम् ।
सामस्तोत्रं प्रातरध्येयमत्रा-
रण्येमाषा जीवनीये गुणाढ्याः ॥

(क) [तीर्थध्वाङ्क्षा यथा] ध्वाङ्क्षेण क्षेपे [तीर्थवायसः] ।

क्षेपे [गम्यमाने] ध्वाङ्क्षेण सह सुप् [समस्यते] तत्पुरुषः [च समासः] (२।१।४२) ।

---

२३१ । प्रेयानिति । धरायां 'दानशौण्डः'—"सप्तमी शौण्डैः"—दानशीलः नित्यं प्रेयान् प्रीत्यास्पदम् । 'छायाशुष्कं' 'काम्पिल्यसिद्धं' 'स्थालीपक्वं' भेषजं रोगिसेव्यम् । 'चक्रबन्धः'—"सिद्धशुष्कपक्वबन्धैश्च"—निबन्धः किं वा रम्यः ? शालिनीवृत्तमिदम्—"शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकै"रिति लक्षणात् ।

२३२ । तीर्थेति । कुत्र 'तीर्थध्वाङ्क्षः'—"ध्वाङ्क्षेण क्षेपे"—अनवस्थितः विश्वासभूमिः । 'मासदेये' अपि आधिः बन्धः स्थाप्यः विनाबन्धमृणग्रहणं न कर्त्तव्यम् । अत्र नित्यं सामस्तोत्रं 'प्रातरध्येयम्'—"कृत्यैर्ऋणे"—'अरण्येमाषाः' जीवनीये गणे गुणाढ्याः ।

(ख) क्त्येनर्णे [मासदेयं त्र्यहदेयं यथा शुभ] ।

क्तणे [गम्यमाने] क्त्यैः सह सप्तमी [समस्यते] तत्पुरुषः [च समासः] (२।१।४३) ।

(ग) [स्यात्] संज्ञायां [वनेमाषा अरण्येतिलका यथा] ।

संज्ञायां सप्तमी सुपा सह [समस्यते] तत्पुरुषः [च समासः] (२।१।४४) ।

२३३ । पूर्व्वाह्णात्तं रात्रिवृत्तञ्च तत्र-
क्लिन्नं भक्तं बाल तोयेविशीर्णम् ।
गेहेशूरो गर्हणीयो नितान्तं
गोष्ठेक्ष्वेडी चेत् पुनः कार्य्यतः किम् ॥

(क) क्तेनाहोरात्रावयवाः [पूर्व्वरात्रकृतं यथा] ।

अहोरात्रावयवाः [सप्तम्यन्ताः] क्तेन सह [समस्यन्ते] तत्पुरुषः [च समासः] (२।१।४५) ।

(ख) [तत्रभुक्तं यथा] तत्र ;—

क्तेन तत्र [समस्यते] तत्पुरुषः [च समासः] (२।१।४६) ।

---

२३३ । पूर्व्वाह्णात्तमिति । 'पूर्व्वाह्णात्तं'—"क्तेनाहोरात्रावयवाः"—पूर्व्वाह्णकाले आत्तं गृहीतं, 'रात्रिवृत्तं'—"बहुलग्रहणात्" सिद्धम्—रात्रौ वृत्तं स्थितं, सुतरां 'तत्र-क्लिन्नं'—"तत्र"—भक्तम् अन्नं, हे बाल, 'तोयेविशीर्णम्'—"क्षेपे"—निष्फलत्वात् जले निःक्षेपयोग्यम् । 'गेहेशूरः' नितान्तं गर्हणीयः भीरुत्वात् । 'गोष्ठेक्ष्वेडी'—"पात्रेसमितादयश्च"—चेत् पुनः, कार्य्यतः किम् ? कार्य्यकाले वीरदर्पस्याभावात् ।

इति सप्तमीतत्पुरुषः ।

(ग) क्षेपे [प्रवाहेमूत्रितम्]।

क्षेपे [गम्यमाने] सप्तमी क्तेन सह [समस्यते] तत्पुरुषः [च समासः] (२।१।४७)।

(घ) [स्नुः] पात्रेसमितादयश्च [पात्रेबहुला यथा]।

क्षेपे [गम्यमाने] पात्रेसमितादयश्च [निपात्यन्ते] तत्पुरुषः [च समासः] (२।१।४८)।

इति सप्तमीतत्पुरुषः।

——०:०——

२३४। कृतप्रतिकृतं न तद्भवति दुःखमेकेश्वरो
जरत्प्रभवसञ्चयं प्रतिविधत्त एनो हरन्।
नवावसथमातनोत्यपि च सर्व्वदेवप्रभुः
स केवलसुखं भवे न तु पुराणवृत्तिः पुनः॥

(१) तत्पुरुषः समानाधिकरणः कर्म्मधारयः (१।२।४२)।

---

२३४। कृतेति। 'कृतप्रतिकृतं' पूर्व्वं कृतं पश्चात् प्रतिकृतं एवम्भूतम् तत् एनः पापं न दुःखं दुःखकरं भवति अनुतापानलेन दग्धत्वात्। एनः पापं हरन् 'एकेश्वरः' 'जरत्प्रभवसञ्चयं' पापेन क्षीणसामर्थ्यसमूहं प्रतिविधत्ते। अपि च 'सर्व्वदेवप्रभुः' 'नवावसथम्' नवीनावासम् आतनोति, न केवलं क्षयप्राप्तसामर्थ्यसमूहानां प्रतिविधानं भक्तानां सहवासलाभात् नवसद्मलाभोऽपि स्वर्गस्य तादृशत्वात्। भवे संसारे स ईश्वरः 'केवलसुखं' न तु पुनः 'पुराणवृत्तिः'—"तत्पुरुषः समानाधिकरणः कर्म्मधारयः" "पूर्व्वकालैकसर्व्वजरत्पुराणनवकेवलाः समानाधिकरणेन"—प्राचीनवृत्तिः जीविकानिर्व्वाहप्रणाली।

(क) पूर्व्वकालैकसर्व्वजरत्पुराणनवकेवलाः समानाधिकरणेन [स्नातानुलिप्त एव सः]।

पूर्व्वकालै-क-सर्व्व-जरत्-पुराण-नव-केवलाः सुपः समानाधिकरणेन सुपा सह [समस्यन्ते] तत्पुरुषः [च समासः] (२।१।४९)।

२३५। पुरोत्तरकुरावासीत् कामाचारो विगर्हितः।
सप्तर्षयो नभःस्थास्ते ज्योतींषि ऋषिसंज्ञिताः॥

(क) [स्याद्] दिक्संख्ये संज्ञायां[भो पञ्चाम्रास्तत् सप्तर्षित्वम्]।

संज्ञायां दिक्संख्ये समानाधिकरणेन सुपा सह [समस्येते] तत्पुरुषः [च समासः] (२।१।५०)।

२३६। स्वास्थ्यं दाक्षिणशालमित्यनुदिनं नो पूर्वशालाप्रियो
यज्ञः पाञ्चकपाल एष न खलु स्यान्मुक्तये कस्यचित्।
सोऽयं पञ्चगवर्द्धिरापदि पुनर्भिक्षाशनः किन्ततः
सेयं पञ्चफली कषायमधुरा तिक्ता न सेव्याः किमु॥

---

२३५। पुरेति। पुरा 'उत्तरकुरौ' विगर्हितः कामाचारः आसीत् विवाहबन्धन-शैथिल्यरूपः। 'सप्तर्षयः'—"दिक्संख्ये संज्ञायां"—ते नभःस्थाः ऋषिसंज्ञिताः ज्योतींषि।

२३६। स्वास्थ्यमिति। स्वास्थ्यं 'दाक्षिणशालं' दक्षिणस्यां शालायां भवम् इति दाक्षिणशालम्। दक्षिणस्यां शालायां संस्थितौ स्वास्थ्यवर्द्धनं भवतीति प्रसिद्धिमवलम्ब्योक्तम्। सोऽयं जनः नो न 'पूर्व्वशालाप्रियः' पूर्व्वा शाला प्रिया यस्येति स तथा। एष 'पाञ्चकपालः' पञ्चसु कपालेषु निष्पन्नो यज्ञः न खलु कस्यचित् मुक्तये स्यात् "अविद्यया बहुधा वर्त्तमाना" इत्याद्याभिः श्रुतिभिस्तस्य निरर्थकत्वात्। सोऽयं जनः 'पञ्चगवर्द्धिः' पञ्च गावः ऋद्धिः सम्पत् यस्य स तथा, आपदि पुनः भिक्षाशनः, ततः किम्? न किमपि ततो मानहानिः मानापमानयोरुपरि विद्यमानत्वात्। सेयं 'पञ्चफली'—"तद्धितार्थोत्तरपदसमाहारे च" "संख्यापूर्व्वो द्विगुः"—पञ्चानां फलानां समाहारः कषायमधुरा, तिक्ताः दशमूलीप्रभृतयः किमु न सेव्याः? रोगनाशायावश्यसेव्या एव।

(क) तद्धितार्थोत्तरपदसमाहारे च [बालक] ।

तद्धितार्थोत्तरपद-समाहारे च [अभिधेये] दिक्संख्ये समानाधिकरणेन सुपा सह [समस्येते] तत्पुरुषः [च समासः] (२।१।५१) ।

(ख) संख्यापूर्व्वो द्विगुः [पञ्चकपालः षट्कुमारि च](२।१।५२)।

२३७। दूरेऽस्तु मीमांसकदुर्द्दुरूटः
पापाङ्गविद्वाणककाव्यदक्षः ।
चित्तं पुनः शङ्खविपाण्डरञ्चे-
द्योगेन विद्वान् पुरुषर्षभोऽयम् ॥

(क) [याज्ञिककितवः सोऽयं स्यात्]कुत्सितानि कुत्सनैः ।

कुत्सितानि [सुबन्तानि] कुत्सनैः [सुबन्तैः] सह [समस्यन्ते] तत्पुरुषः [च समासः] (२।१।५३) ।

(ख) पापाणके कुत्सितैः [स पापनापित आगमत्] ।

पापाणके कुत्सितैः सह [समस्येते] तत्पुरुषः [च समासः] (२।१।५४) ।

---

२३७। दूर इति। 'मीमांसकदुर्द्दुरूटः'—"कुत्सितानि कुत्सनैः"—नास्तिकः दूरे अस्तु तत्संसर्गस्य विषवत्परित्याज्यत्वात् । 'पापाङ्गवित्' 'अणककाव्यदक्षः' वा—"पापाणके कुत्सितै"—"कु-पूय-कुत्सितावद्य खेट-गर्ह्याणकाः समा" इत्यमरः दूरे अस्तु । गर्ह्यकर्म्मत्वात् गणिते काव्ये वा दक्षता न परिगणनीया । योगेन चेत् यदि चित्तं पुनः 'शङ्खविपाण्डरम्'—"उपमानानि सामान्यवचनैः"—शङ्ख इव विपाण्डरं विशिष्टश्वेतं निर्म्मलमिति यावत्, अयं विद्वान् ज्ञानसम्पन्नः 'पुरुषर्षभः'—"उपमितं व्याघ्रादिभिः सामान्याप्रयोगे"—पुरुषश्रेष्ठः । ज्ञानयोगयोरेकत्र निवेश एव श्रेष्ठत्वे हेतुः । योगे चित्तनैर्म्मल्यमवश्यम्भावि ।

(ग) उपमानानि सामान्यवचनैः [हंसगद्गदा] ।

उपमानानि सामान्यवचनैः सह [समस्यन्ते] तत्पुरुषः [च समासः] (२।१।५५) ।

(घ) उपमितं व्याघ्रादिभिः सामान्याप्रयोगे [शुभ] ।

सामान्याप्रयोगे उपमितं व्याघ्रादिभिः सह [समस्यते] तत्पुरुषः [च समासः] (२।१।५६) ।

२३८ । नीलोत्पलं कृष्णसर्पो द्वयोरत्रान्तरं महत् ।
जामदग्न्यो यथा रामो रामो दाशरथिः पुनः ॥

(ङ) विशेषणं विशेष्येण बहुलं [नीलपङ्कजम्] ।

विशेषणं विशेष्येण सह बहुलं [समस्यते] तत्पुरुषः [च समासः] (२।१।५७) ।

२३९ । ऋषयः पूर्व्वपुरुषा भक्ताश्चापरपूरुषाः ।
निवृत्तियोगिनो मध्यपुरुषाश्च विवेकिनः ॥
इच्छायोगिन एषां हि ज्ञेया मध्यमपूरुषाः ।

---

२३८ । नीलोत्पलमिति । 'नीलोत्पलं' कृष्णसर्पः'—"विशेषणं विशेष्येण बहुलम्"—द्वयोः अत्र महत् अन्तरं पार्थक्यम् । वर्णे कथञ्चित्साम्येऽपि एकस्य नयनमनस्तुष्टिकरत्वादपरस्य पुनः प्राणहरत्वात् महत्पार्थक्यम्, यथा 'जामदग्न्यो रामः' जमदग्नेरपत्यं रामः 'दाशरथिः रामः'—"बहुलवचनात्"—दशरथस्यापत्यं रामः पुनः, एको मातृहन्ता क्षत्रियकुलक्षयकारी, अपरः सौम्यगुणसम्पन्नः ।

२३९ । ऋषय इति । अत्र विधौ नवे वंशविनिर्णयः, यथा ऋषयः 'पूर्व्वपुरुषाः' भक्ताः 'अपरपूरुषाः' ऋषयो हि योगनिरताः भक्ता हि पौराणिकसमयोत्पन्नाः, निवृत्तियोगिनः निर्व्वाणगतिपरायणाः बौद्धाः 'मध्यपुरुषाः' च योगभक्त्योर्मध्यपथगामित्वात्, निवृत्त्यनन्तरं हि प्रवृत्तियोगस्ततो हि भक्तेरभ्युदयः । एषां नवविधानानुसारिणां 'मध्यम-

प्रथमपुरुषाश्चैकेश्वरवादपरायणाः ॥
चरमपुरुषाश्चान्त्ययोगिनोऽवनचारिणः।
जघन्यपुरुषाः सर्व्वैर्मिलिता वीरपूरुषाः ॥
समानपुरुषाश्चात्र विधौ वंशविनिर्णयः ॥

(क) पूर्व्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च।

पूर्व्वा-पर-प्रथम-चरम-जघन्य-समान-मध्य-मध्यम-वीराश्च सुपः सुपा समस्यन्ते तत्पुरुषः [च समासः] (२।१।५८)।

२४०। योगादयश्चैकक्कता हि तेनो-
दीतानुदीतं निखिलं नवे विधौ।
क्रोड़ीकृतं पूगक्कतानि सत्या-
न्यत्र प्रभान्ति प्रचये क्कताक्कतम् ॥

---

पूरुषाः' 'प्रथमपुरुषा'श्च विवेकिनः मोक्षमार्गानुगामिनः इच्छायोगिनः ऐश्वासाश्च। एकेश्वरवादपरायणाः ऐश्वलामाः 'चरमपुरुषाः' सर्व्वैः एतैः मिलिताः 'वीरपूरुषाः' जगज्जयकारिणः। अत्र विधौ नवे 'समानपुरुषाः'—"पूर्व्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च"—यद्यप्यत्र बहुवंशाः सम्मिलिताः तथापि समानपुरुषाः वैषम्यविरहितत्वात्।

२४०। योगादय इति। तेन नवविधिना हि योगादयः च 'एकक्कताः'—"श्रेण्यादयः क्कतादिभिः"—अनेकाः एकाः क्कताः। पूर्व्वं पृथक् आसन् सुतरां बहुत्वेनाभान्, अधुना पुनरेकत्वमाप्ताः। नवे विधौ 'उदीतानुदीतं' निखिलं क्रोड़ीक्कतं तदन्तर्भूतत्वेन सर्व्वं प्रतिभाति। कथम्? अत्र सत्यानि 'पूगक्कतानि' प्रभान्ति। न खलु यदत्र उदीतम् अनुदीतञ्च तत्सर्व्वं प्रतिभातीति वक्तुमुचितमनुदीतस्याज्ञेयत्वात् तस्मादाह प्रचये 'क्कताक्कतम्'—"क्तेन नञ् विशिष्टेनानञ्"—एकत्र बहूनां सम्मेलनात् क्कतञ्च तत् अक्कतम् च, एकदेशकरणात् क्कतम् एकदेशान्तरस्याकरणात् अक्कतम्। अयं भावः; बीजभूते विधाने यद्व्यक्तं तस्मिन् यदव्यक्तं तत् तिष्ठति, सुतरां व्यक्तं क्कतवत् अव्यक्तम् अक्कतवत् प्रतिभाति प्रचये क्रमाभिव्यक्तौ तदुभयं युगपदस्तीति सत्यम्।

(क) [श्रेणिकृता एककृताः] श्रेण्यादयः कृतादिभिः ।

श्रेण्यादयः सुपः कृतादिभिः [समानाधिकरणैः] सह समस्यन्ते, तत्पुरुषः [च समासः] (२।१।५९)।

श्रेण्यादिषु च्व्यर्थवचनम् । * ।

(ख) [स्यात्] क्तेन नञ्विशिष्टेनानञ् [कृताकृतमेव तत्] ।

नञ्विशिष्टेन क्तेन सह अनञ् क्तान्तं [समस्यते] तत्पुरुषः [च समासः] (२।१।६०)।

२४१। स कृतापकृतं सर्व्वं दहति ज्ञानाग्निना फलाफलिकाम्।
शाकैस्तेऽतिप्रसिद्धा जगति पुनः शाकपार्थिवा हि ॥

कृतापकृतादीनामुपसंख्यानम् । * ।

शाकपार्थिवादीनां समानाधिकरणसमास उत्तरपदलोपश्चेति वक्तव्यम् । * ।

२४२। स सत्पुरुषसङ्गमे वसति चेन्महापूरुष-
न्तथा परमपूरुषं श्रयति धीरवृन्दारकः ।

---

२४१। स इति। स ज्ञानाग्निना सर्व्वं 'कृतापकृतं' 'फलाफलिकां'—"कृतापकृतादीनामुपसंख्यानम् । * ।" फलञ्च तत्फलिका चेति फलाल्पफलयोः समुदायं—दहति। 'शाकपार्थिवाः'—"शाकपार्थिवादीनां समानाधिकरणसमास उत्तरपदलोपश्चेति वक्तव्यम । * ।"—हि ते शाकैः अतिप्रसिद्धाः। शाकप्रियाः पार्थिवाः अथवा शाकप्रधानाः पार्थिवाः भूमिपाः व्याकरणशास्त्रे प्रसिद्धाः शाकैरेव। न हि भूमिपानां शाकप्रियत्वं दृश्यते भोगरतत्वात्, यदि तेषु केचित् वैराग्यप्रधानजीवनत्वात् शाकप्रिया भवन्ति तेऽतिप्रसिद्धिं लभन्ते।

२४२। स इति। चेत् यदि सः 'सत्पुरुषसङ्गमे' वसति तथा 'महापूरुषं' महाजनं 'परमपूरुषं' परमेश्वरं श्रयति 'धीरवृन्दारकः' धीरश्रेष्ठः। किञ्च फलं भवति?

स चोत्तमजनो भवेज्जयति काममुत्कृष्टधी-
र्विभाति कविकुञ्जरो नमति लोकनागश्च तम् ॥

(क) सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः [शुभ] ।

सत्-महत्-परमो-त्तमो त्कृष्टाः पूज्यमानैः सह [समस्यन्ते] तत्पुरुष[श्च समासः] (२।१।६१) ।

(ख) [स्याद्] वृन्दारकनागकुञ्जरैः
पूज्यमान[मश्ववृन्दारकः] ।

वृन्दारक-नाग-कुञ्जरैः सह पूज्यमानं [समस्यते] तत्पुरुषः [च समासः](२।१।६२) ।

२४३ । कतमव्यासः कतरनारदः पृच्छतामिति ।
तत्तद्भावेनावतारोऽद्यापि नायुक्तता ततः ॥

(क) कतरकतमौ जातिपरिप्रश्ने [भवत्यहो] ।

जातिपरिप्रश्ने[वर्त्तमानौ] कतरकतमौ सुपा सह [समस्येते]तत्पुरुषः [च समासः] (२।१।६३) ।

---

स च 'उत्तमजनः' 'उत्कृष्टधीः' भवेत्, कामं जयति । स 'कविकुञ्जरो' विभाति, 'लोकनाग'श्च—"सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः" "वृन्दारकनागकुञ्जरैः पूज्यमानम्"—तं जनं नमति भक्तिभाजनत्वात् ।

२४३ । कतमेति । 'कतमव्यासः' 'कतरनारदः'—"कतरकतमौ जातिपरिप्रश्ने" —इति पृच्छतां ततः न अयुक्तता यतः अद्यापि तत्तद्भावावतारः । "आविर्भूय मनोवृत्तौ व्रजन्ति तत्स्वरूपताम्" 'तदाविर्भावेषु भेदग्राही निन्द्यते" इत्यादिभिर्युक्तिभिः भावक्रियासाम्येन तत्तन्नाम्ना प्रसिद्धिः । पुराणेषु व्याससंख्या अष्टाविंशतिः, नारदस्यापि दासीपुत्रत्वं ब्रह्मपुत्रत्वमित्यादिकभेदेन भिन्नकालगतत्वं दृश्यते ।

२४४ । स किंगुरुर्यः परिपूजनार्थी
स किंसखा यो हरतेऽस्य धर्म्मम् ।
स किंनृपालः स्वविभूतिलुब्धः
स किंजनो नो नयवान् य एषः ॥

(क) किं क्षेपे [किंसखा बाल किंराजा यो न रक्षति] ।

क्षेपे [गम्यमाने] किं सुपा सह [समस्यते] तत्पुरुषः [च समासः] (२।१।६४) ।

२४५ । अग्निस्तोकैरघकतिपयैर्दह्यते स्वप्रतिष्ठा
कालापाध्यापक इह कठश्रोत्रियः काण्वधूर्त्तः ।
धिक् चेद्धृष्टाः शठकठप्रवक्तॄंश्च रम्येभपोटा
गोगृष्टिः सा द्विरदयुवतिर्नादृता गोवशात्र ॥
गोवेहद्गोवष्कयणी त्यक्तेयं गोमतल्लिका ।
गोप्रकाण्डञ्च गोधेनुरादृता गोमचर्चिका ॥

---

२४४ । स इति । स 'किंगुरुः' यः परिपूजनार्थी, "परिचर्य्यायशोवित्तलिप्सुः शिष्याद्गुरुर्नहि ।" स 'किंसखा' यः अस्य धर्म्मं हरते, स 'किंनृपालः' यः स्वविभूतिलुब्धः, स 'किंजनः'—"किं क्षेपे"—यः एष नो न नयवान् । सर्व्वे एते धिक्कृताः ।

२४५ । अग्निस्तोकैरिति । 'अग्निस्तोकैः' 'अघकतिपयैः' स्वप्रतिष्ठा एकतः गृहम् अन्यतः स्वाश्रयः दह्यते । पापतः परेशाद्वियोगः ततः स्वस्थानाद्भ्रंशः । इह 'कालापाध्यापकः' 'कठश्रोत्रियः' 'काण्वधूर्त्तः' चेत् यदि धृष्टाः 'शठकठप्रवक्तॄंश्च' धिक् । सा 'इभपोटा' पोटा पुरुषलक्षणा स्त्री, 'गोगृष्टिः' सकृत्प्रसूता गौः, 'द्विरदयुवतिः' रम्या, 'गोवशा' वन्ध्या गौः अत्र न आदृता । 'गोवेहत्' गर्भोपघातिनी गौः 'गोवष्कयणी' चिरप्रसूता गौः त्यक्ता, 'गोधेनुः'—"पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणी-प्रवक्तृश्रोत्रियाध्यापकधूर्त्तैर्जातिः"—'गोमतल्लिका' 'गोप्रकाण्डं' 'गोमचर्चिका'—"प्रशंसा वचनैश्च"—आदृता ।

(क) [स्यात्] पोटायुवतिस्तोककतिपय-
गृष्टिधेनुवशावेहद्वष्क-
यणीप्रवक्तृश्रोत्रियाध्यापक-
धूर्त्तैर्जाति[र्गौवष्कयणी] ।

पोटा-युवति-स्तोक-कतिपय-गृष्टि-धेनु-वशा-वेहद्-वष्कयणी-प्रवक्तृ-श्रोत्रियाध्यापक-धूर्त्तैः सह जातिः [समस्यते] तत्पुरुषः [च समासः] (२।१।६५) ।

(ख) प्रशंसावचनैश्चा[ऽसौ गोप्रकाण्डं यथा शिशो] ।

जातिः प्रशंसावचनैः सह [समस्यते] तत्पुरुषः [च समासः] (२।१।६६) ।

२४६ । प्रवीणतां युवखलतिः प्रयाति स
मुमूर्षुतां युवखलती सुदुर्भगा ।
वयोगतो युवपलितो विभाति चे-
दनादृता युवपलिता विषादभूः ॥
विषण्णधीर्युववलिनो निरुद्यमः
सुदीनतां युववलिना भजत्यहो ।

---

२४६ । प्रवीणतामिति । 'युवखलतिः' युवा खलतिः इन्द्रलुप्तरोगविशिष्टः स प्रवीणतां प्रयाति, केशपाते न तस्योपहासयोग्यता प्रत्युत प्रवीणत्वं जातमिति सम्मानः । 'युवखलती' युवतिः खलती सुदुर्भगा मुमूर्षुतां प्रयाति, केशश्रीविलोपादनादृता । चेत् यदि वयोगतः 'युवपलितः' युवा पलितः विभाति, अनादृता 'युवपलिता युवतिः पलिता विषादभूः । 'विषण्णधीः 'युववलिनः' युवा वलिनः जरया शिथिलचर्म्मवान् निरुद्यमः, अहो 'युववलिना' युवतिः वलिना सुदीनतां भजति । जनः

क्षपां जनो युवजरते प्रयच्छति
कथं न तां युवजरती लभेत वा ॥

(क) [युवबलिन इह खलु विलसति] युवा
खलतिपलितवलिनजरतीभि[र्] ।

खलति-पलित-वलिन-जरतीभिः सह युवा [समस्यते] तत्पुरुषः [च समासः] (२।१।६७) ।

२४७ । पानीयशीतन्तु प्रियं न कस्य
स तुल्यकृष्णोऽञ्जनपर्व्वतोऽघैः ।
सितासितः पापविपुण्ययोगा-
न्नित्यं कुमारश्रमणास्तु साध्वी ॥

(क) [भोज्योष्ण'] कृत्यतुलाख्या अजात्या [परिकीर्त्त्यते] ।

कृत्य-तुल्याख्याः सुपः अजात्या [समस्यन्ते] तत्पुरुषः [च समासः] (२।१।६८) ।

---

'युवजरते' क्षपां प्रयच्छति, कथं न तां क्षपां 'युवजरती'—"युवा खलतिपलितवलिनजरतीभिः"—वा लभेत । नरनार्य्योः समानाधिकारित्वं यद्यपि तात्त्विकं तथापि नास्मिन् संसारे विषयविदूषिते वैषम्यविरहः ।

२४७ । पानीयेति । 'पानीयशीतं' तु द्रव्यं न कस्य प्रियम् ? अघैः पापैः स अञ्जनपर्व्वतः 'तुल्यकृष्णः'—"कृत्यतुल्याख्या अजात्या"—पापपुण्ययोगात् 'सितासितः' ।—"वर्णोवर्णेन"—'कुमारश्रमणा'—"कुमारश्रमणादिभिः"—कुमारी सन्यासव्रतधारिणी साध्वी अस्तु । अव्यभिचारित्वेनैव कृतार्थत्वात्, न तु केवलं सन्यासव्रतधारणेन ।

(ख) वर्णो वर्णेन [कल्याण कृष्णसारङ्गमीक्षताम्] ।

वर्णो वर्णेन सुपा समानाधिकरणेन सह [समस्यते] तत्पुरुषः [च समासः] (२।१।६९) ।

(ग) [कुमारश्रमणा सेषा] कुमारः श्रमणादिभिः ।

कुमारः श्रमणादिभिः सह [समस्यते] तत्पुरुषः [च समासः] (२।१।७०) ।

२४८ । गोगर्भिण्यां गृहस्थानामश्नीतपिबतादरात् ।
उच्चावचेषु भूतेषु न च्छात्रव्यंसको धृतः ॥

(क) [गोगर्भिणी] चतुष्पादो गर्भिण्या [बालकोत्तम] ।

गर्भिण्या सह चतुष्पादः [समस्यन्ते] तत्पुरुषः [च समासः] (२।१।७१) ।

(ख) मयूरव्यंसकादयश्च [हस्तिगृह्य एव सः] ।

मयूरव्यंसकादयश्च तत्पुरुषसंज्ञाः (२।१।७२) ।

इति कर्म्मधारयसंज्ञस्तत्पुरुषः ।

———०:०———

---

२४८ । गोगर्भिण्यामिति । 'गोगर्भिण्यां'—''चतुष्पादो गर्भिण्या''—गृहस्थानाम् आदरात् 'अश्नीतपिबता' अश्नीत पिबतेति सततमभिधानम् । 'उच्चावचेषु' असमानधर्म्मसु भूतेषु न 'छात्रव्यंसकः'—''मयूरव्यंसकादयश्च''—छात्रो व्यंसकः धूर्त्तः धृतः, अतीवहेयत्वात् ।

इति कर्म्मधारयसंज्ञकस्तत्पुरुषः ।

———

२४९ । विनयभरविनम्रपूर्व्वकायो
रुचिरतरोऽपरकाय एष लीनः ।
नियतमधरकाय आदधातु
सुवसनमुत्तरकाय ईहतां भोः ॥

(क) [बालक] पूर्व्वापराधरोत्तर-
मेकदेशिनैकाधिकरणे[ऽङ्क] ।

एकदेशिना एकाधिकरणे पूर्व्वा-परा-धरो-त्तरं समस्यते तत्पुरुषः [च समासः] (२।२।१) ।

२५० । कफजगदहरार्द्धपिप्पलीयं
विभवतृतीयमसौ चतुर्थग्रस्यम् ।
स समलभत चेद्द्वितीयलाभं
न भवतु गृध्नुरगात्तुरीयभिक्षाम् ॥

---

२४९ । विनयेति । विनयभरविनम्र'पूर्व्वकायः' रुचिरतरः एषः 'अपरकायः' लीनः प्रच्छन्नः । नियतम् 'अधरकायः' सुवसनम् आदधातु, 'उत्तरकायः'—"पूर्व्वा-पराधरोत्तरमेकदेशिनैकाधिकरणे"—ईहतां चेष्टतां भोः ।

२५० । कफजेति । इयम् 'अर्द्धपिप्पली'—"अर्द्धं नपुंसकम्"—कफजगदहरा । असौ 'विभवतृतीय' विभवस्य तृतीयम्, स 'चतुर्थग्रस्यम्' चतुर्थश्चासौ ग्रस्यश्चेति ग्रस्यस्य चतुर्थं भागं समलभत । चेत् यदि 'द्वितीयलाभं' समलभत न गृध्नुः भवतु लाभाधिक्यात् । कथं न गृध्नुः भवेत् ? 'तुरीयभिक्षाम्'—"द्वितीयतृतीयचतुर्थतुर्य्याण्यन्यतरस्याम्"—अगात् प्राप्तवान् । पूर्व्वं भिक्षायाश्चतुर्थभागमात्रं लब्धवान् अधुना तु लाभस्य द्वितीयं भागं, तथापि गृध्नुत्वमतीवहेयमिति दर्शयति । सर्व्वथा लोभः परिहार्य्य इति भावः । पुष्पिताग्रावृत्तमेतत्, तल्लक्षणम्—" अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा ।"

(क) अर्द्धं नपुंसकं [बाल स्यादर्द्धपिप्पली यथा]।

एकदेशिना एकाधिकरणे नपुंसकम् अर्द्धं [समस्यते] तत्पुरुषः [च समासः] (२।२।२)।

(ख) द्वितीयतृतीयचतुर्थतुर्य्या-
ण्यन्यतरस्यां [तृतीयभिक्षा]।

एकदेशिना एकाधिकरणे द्वितीय-तृतीय-चतुर्थ-तुर्य्याणि अन्यतरस्यां [समस्यन्ते] तत्पुरुषः [च समासः] (२।२।३)।

२५१। आपन्नविद्यः खलु प्राप्तसम्मतिः
स वर्षजातस्य शिशोः समो न चेत्।
स्फुटान्त्यजोऽब्राह्मण एष निश्चयं
पशोः पुनः केवलमीषदुन्नतः॥

---

२५१। आपन्नविद्य इति। 'आपन्नविद्यः' विद्याम् आपन्नः जनः खलु 'प्राप्तसम्मतिः'—"प्राप्तापन्ने च द्वितीयया"—सम्मतिं सम्मानं प्राप्तः। स आपन्नविद्यो जनः चेत् यदि स्फुटा 'वर्षजातस्य'—"कालाः परिमाणिना"—यस्य जननादूर्द्धं वर्षो गतः तादृशस्य शिशोः समः न, स एव अन्त्यजः 'अब्राह्मणः'—"नञ्"—"सम्मानाद्ब्राह्मणो नित्यमुद्विजेत विषादिव" "वृद्धो बालकवत् क्रीड़न्" इत्यादि स्मरणात् तस्य अब्राह्मणत्वम्; ब्राह्मणत्वं हि ब्रह्मणि स्थितौ। निश्चयं केवलं पुनः पशोः 'ईषदुन्नतः'—"ईषदकृता" "ईषद्गुणवचनेनेति वक्तव्यम्। *।"—मनुष्यरूपेण जातत्वात् ईषदुन्नतपशुरेव सः।

इति षष्ठीसमासापवादादयो योगाः।

---

(क) [स्याद्वाल] ग्रामापन्नेन द्वितीयया [ग्रजीविकः] ।

ग्रामापन्नेन द्वितीयया [समस्यते] तत्पुरुषः [च समासः] (२।२।४) ।

(ख) [मासजाती यथा वाल स्यात्]कालाः परिमाणिना ।

परिमाणिना कालाः [समस्यन्ते] तत्पुरुषः[च समासः] (२।२।५) ।

(ग) नञ् [बालाऽब्राह्मणोऽवैश्यः] ;—

नञ् सुपा [समस्यते] तत्पुरुषः [च समासः] (२।२।६) ।

(घ) [स्याद्] ईषदक्तता [शुभ्र] ।

ईषत् अक्तता सुपा [समस्यते] तत्पुरुषः [च समासः] (२।२।७) ।

ईषद्गुणवचनेनेति वक्तव्यम् । * ।

इति षष्ठीसमासापवादादयो योगाः ।

---

२५२ । रसज्ञा न चेत् स्यात् कुतो वाक्यशक्तिः ।
रसज्ञाः कुतः स्मः कुतः काव्यसूक्ती ॥

(क) षष्ठ्य[यं राजपुरुषस्तथा ब्राह्मणकम्बलः] ।

षष्ठी सुपा [समस्यते] तत्पुरुषः [च समासः] (२।२।८) ।

---

२५२ । रसज्ञेति । चेत् यदि रसज्ञा रसना न स्यात् कुतः 'वाक्यशक्तिः'—"षष्ठी"—वाक्यस्य शक्तिः । कुतः रसज्ञाः स्मः भवामः, कुतः वाक्यसूक्ती । मृत्युन्मुखदेहनिर्णयस्थः श्लोकोऽयम् । वृत्तमिदं—प्रिया सोमराजी ।

२५३ । द्रुमप्रवरस्वनतो न पुरुषकारः पलाग्रपातनतः ।
पातय रिपुतरुमूलं यद्यस्ति तव प्रभूतवीर्य्यमहो ॥

क्तयोगा च षष्ठी समस्यत इति वक्तव्यम् । * ।

२५४ । श्रुताध्यापकोऽयं मलोत्पादकश्चेत् ।
जगद्भर्त्तुरेष प्रियः सेवको हि ॥

(क) [स्याद्] याजकादिभिश्च[यं यथा क्षत्रिययाजकः] ।

याजकादिभिः सह षष्ठी [समस्यते] तत्पुरुषः [च समासः] (२।२।९) ।

२५५ । चन्दनगन्धो हरते मनः स्वनिष्ठगुणेन जनस्य ।
निखिलमहान् पुरुषोऽयं ह्यात्मत्यागेन वाल सर्व्वेषाम् ॥

तत्स्थैश्च गुणैः षष्ठी समस्यत इति वक्तव्यम् । * ।

गुणोत्तरेण तरलोपश्चेति वक्तव्यम् । * ।

---

२५३ । द्रुमेति । 'द्रुमप्रवरस्वनतः' 'पलाग्रपातनतः'—"क्तयोगा च षष्ठी समस्यत इति वक्तव्यम् । * ।"—न पुरुषकारः । अहो यदि तव प्रभूतवीर्य्यम् अस्ति, रिपुतरुमूलं पातय ।

२५४ । श्रुतेति । अयं 'श्रुताध्यापकः' चेत् यदि 'मलोत्पादकः', एष 'जगद्भर्त्तुः'—"याजकादिभिश्च"—जगत्पतेः हि निश्चितं प्रियः सेवकः ।

२५५ । चन्दनेति । स्वनिष्ठगुणेन 'चन्दनगन्धः'—"तत्स्थैश्च गुणैः षष्ठी समस्यत इति वक्तव्यम् । * ।"—जनस्य मनः हरते । 'निखिलमहान्'—"गुणोत्तरेण तरलोपश्चेति वक्तव्यम् । * ।"—निखिलानां महत्तरः अयं पुरुषः आत्मत्यागेन हि सर्व्वेषां मनो हरत इति शेषः ।

२५६। मनुष्याणां शूरतमः क्षत्रियो यदि गीयते।
वृको यथात्र सत्त्वानां तथा नान्यत्र शूरता॥

(क) न निर्द्धारणे [एहि त्वं सतां सत्तम एव हि]।

निर्द्धारणे षष्ठी न [समस्यते] (२।२।१०)।

२५७। ज्ञानं मधुनो दृष्टं विषमविषमये संसारेऽत्र।
मरणाय तन्नराणां भवति विफलता जीवनस्य च॥

प्रतिपदविधाना च षष्ठी न समस्यत इति वक्तव्यम्। *।

२५८। भ्रातॄणां पञ्चमोऽयं सुचरितविषये शौक्ल्यमस्यास्ति साधु
तृप्तो नित्यं फलानां हरिचरणजुषां ब्राह्मणानां नितान्तम्।
कुर्व्वाणः स्वस्य कृत्वा निखिलजनहितन्त्वस्य कर्त्तव्यमीशो
ध्येयोऽयं पाणिनेः सूत्रकृत इह कृतेर्नित्यमध्यापकोऽपि॥

---

२५६। मनुष्याणामिति। क्षत्रियः 'मनुष्याणां शूरतमः'—"न निर्द्धारणे"—यदि गीयते, यथा अत्र वृकः सत्त्वानां शूरतम इति शेषः तथा न अन्यत्र कामादौ शूरता वीरत्वम्।

२५७। ज्ञानमिति। विषमविषमयेऽत्र संसारे 'मधुनो ज्ञानम्'—"प्रतिपदविधाना च षष्ठी न समस्यत इति वक्तव्यम्। *।"—चित्तभ्रान्त्या सर्व्वमेव तदात्मना दृश्यते सुतरां तत् ज्ञानं नराणां मरणाय भवति विषयविशेषहतत्वात्। जीवनस्य च विफलता भवति।

२५८। भ्रातॄणामिति। अयं जनः 'भ्रातॄणां पञ्चमः' सुचरितविषये 'अस्य शौक्ल्यं' साधु अस्ति, नित्यं 'फलानां तृप्तः,' नितान्तं हरिचरणजुषां 'ब्राह्मणानां कुर्व्वाणः' किङ्करः, 'स्वस्य कृत्वा' स्वसम्बन्धिनी या क्रिया तदनन्तरं निखिलजनहितं तु 'अस्य कर्त्तव्यम्', ईशः ध्येयः अस्येति शेषः। अयं 'पाणिनेः सूत्रकृतः'—"पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन"—कृतेः नित्यम् अध्यापकोऽपि। अध्यात्मतत्त्वप्रविष्टोऽपि नाध्ययनाध्यापने शिथिलयत्न इति भावः।

(क) पूरणगुणसुहितार्थसदव्यय-
तव्यसमानाधिकरणेन [भोः] ।

पूरण-गुण-सुहितार्थ-सद-व्यय-तव्य-समानाधिकरणेन षष्ठी न [समस्यते](२।२।११)।

२५८। सतां मतोऽसद्वसितं न मन्यते
तदस्य यातं लभतेऽमृतं यतः ।
चिरा नु सूत्रस्य कृतिः पुरातनी
दाक्षीसुतेनाङ्ग भवास्य वेदकः ॥
सतां विभर्त्ता महतां प्रपालकः
परस्ततः पापकृतां प्रमोचिका ।
कुतोऽधुनोद्दालकपुष्पभञ्जिका
गतादरः सम्प्रति पुस्तलेखकः ॥

---

२५८। सतामिति। 'सतां मतः'—"क्तेन च पूजायाम्"—जनः असत् हसितं न मन्यते, न हि असद्भिर्धर्षितोऽपि स्वकृत्याद्विरमति। तत् 'अस्य यातं'—"अधिकरण-वाचिना च"—गम्यस्थानं यतः अमृतं लभते, चिरा नु पुरातनी 'सूत्रस्य कृतिः दाक्षीसुतेन'—"कर्म्मणि च"—पाणिनिना। अङ्ग हे बालक 'अस्य वेदकः'—अस्य पाणिनेः वेदकः भव। परः परमेश्वरः सतां विभर्त्ता 'महतां प्रपालकः'—"तृजकाभ्यां कर्त्तरि"—ततः परमेश्वरात् 'पापकृतां प्रमोचिका'—"कर्त्तरि च"—प्रमोचनम्। अधुना 'उद्दालकपुष्पभञ्जिका' क्रीड़ाविशेषः कुतः? सम्प्रति 'पुस्तलेखकः'—"नित्यं क्रीड़ाजीविकयोः"—गतादरः मुद्राङ्कनस्य प्रादुर्भावात्।

इति षष्ठीतत्पुरुषः।

(क) [राज्ञां बुद्धो महतां बुद्धः] क्तेन च पूजायां [ह] ।

पूजायां क्तेन सह षष्ठी न [समस्यते] (२।२।१२)।

(ख) [इदमेषां यातं भो बाला]ऽधिकरणवाचिना च ।

अधिकरणवाचिना च क्तेन षष्ठी न [समस्यते] (२।२।१३)।

(ग) कर्म्मणि च [गवां दोहः शिशुना गोपालकेन बाल]।

कर्म्मणि च षष्ठी न [समस्यते] (२।२।१४)।

(घ) तृजकाभ्यां कर्त्तरि[ह भवतः स्तावको यथा]।

कर्त्तरि षष्ठी तृजकाभ्यां न [समस्यते] (२।२।१५)।

(ङ) [आसिका भवतो बाल यथा] कर्त्तरि च [प्रिय]।

कर्त्तरि षष्ठी अकेन न [समस्यते] (२।२।१६)।

(च) नित्यं क्रीड़ाजीविकयो[र्यथासौ नखलेखकः]।

क्रीड़ाजीविकयोः नित्यं षष्ठी [समस्यते] (२।२।१७)।

इति षष्ठीतत्पुरुषः।

---

२६०। कुपुरुषविहितेहां किं स जरीकरोति
सुपुरुष इह वासद्दुष्क्रियां तत्कदुष्णाम्।
पिबति जलनिवासः स्तन्यमुत्सृज्य कोष्ण-
मसृगतिगुणसम्पद्दुर्ब्बलेऽम्भः कवोष्णम्॥

---

२६०। कुपुरुषेति। इह किं स 'सुपुरुषः' 'कुपुरुषविहितेहां' 'असद्दुष्क्रियां' वा 'जरीकरोति'—"कुगतिप्रादयः"—जलनिवासः जलौकाः 'कदुष्णं' तत् स्तन्यम् उत्सृज्य 'कोष्णम्' असृक् शोणितं पिबति, 'दुर्बले' जने 'कवोष्णम्' अम्भः अतिगुणसम्पत् अतीवगुणकारि। मालिनीवृत्तमेतत् तदुक्तम्—"ननमयययुतेयं मालिनी भोगिलोकैः"।

(क) कुगतिप्रादयः [कोष्णं दुष्कुलं चोररीकृतम्] ।

कु-गति-प्रादयः सुपा [समस्यते] तत्पुरुषः [च समासः] (२।२।१८) ।

(१) प्राग्रीश्वरान्निपाताः [स्युः] (१।४।५६)—

(२) चादयः सत्त्व [एव हि] (१।४।५७) ।

(३) प्रादयः [प्र परा निर्दुर्वि न्यधुरुत्सं परि प्रति ।

अपान्ववाङ् प्रिय बालाप्यति स्वभ्युप तद्गणः]॥(१।४।५८)

(४) उपसर्गाः क्रियायोगे (१।४।५९) ।

(५) गतिश्च [प्रकृतं यथा] (१।४।६०) ।

(६) ऊर्य्यादिच्विडाचश्च [स्यात् ।

तालीकृत्योरीकृत्यासम्] (१।४।६१) ।

२६१ । प्रान्तेवासी चेन्नात्यूहोऽवक्रीड़ एवायम् ।

पर्य्यध्ययनो भाति निर्व्वाराणसिरिह वसन्नपि ॥

प्रादयो, गताद्यर्थे प्रथमया, अत्यादयः क्रान्ताद्यर्थे द्वितीयया, अवादयः क्रुष्टाद्यर्थे तृतीयया, पर्य्यादयो ग्लानाद्यर्थे चतुर्थ्या, निरादयः क्रान्ताद्यर्थे पञ्चम्या इति वक्तव्यम् ।*।

---

२६१ । प्रान्तेवासीति । 'प्रान्तेवासी'—"प्रादयो गताद्यर्थे प्रथमया । * ।"—चेत् यदि न 'अत्यूहः'—"अत्यादयः क्रान्ताद्यर्थे द्वितीयया । * ।"—ऊहम् अतिक्रान्तः । 'अवक्रीतः'—"अवादयः क्रुष्टाद्यर्थे तृतीयया । * ।"—क्रीड़या अवक्रुष्टः । कथमेवं व्यवह्रियते ? 'पर्य्यध्ययनः'—"पर्य्यादयो ग्लानाद्यर्थे चतुर्थ्या । * ।"—परिग्लानोऽध्ययनाय । इह वाराणस्यां वसन् अपि 'निर्व्वाराणसिः'—"निरादयः क्रान्ताद्यर्थे पञ्चम्या । * ।"—निष्क्रान्तो वाराणस्याः । वाराणसीवासस्याफलतया ह्यविद्यावत्स्थानवासिवत् प्रतिभाति ।

(१) [बालका]र्थवदधातुरप्रत्ययः
प्रातिपदिक[मिह कपित्थो बाल] (१।२।४५) ।

(२) कृत्तद्धितसमासाश्च [कारको द्विजकम्बलः] (१।२।४६) ।

(३) ह्रस्वो नपुंसके प्रातिपदिकस्या[तिरि प्रिय](१।२।४७) ।

(४) [स्याद्] गोस्त्रियोरुपसर्ज्जनस्या[सौ चित्रगुर्यथा] (१।२।४८)।

अनुवृत्त्यनुरोधात्———

(५) लुक् तद्धितलुकि [त्रियः पञ्चेन्द्रो वकुलं यथा] (१।२।४९) ।

(६) इद्गोण्याः [पञ्चगोणिश्च दशगोणिर्यथा शुभ] (१।२।५०) ।

२६२ । वागर्थाविव युक्तौ शुद्धिप्रेमाणौ विभातः ।
साधुगुणाननु भक्तिः समुदेति यतोऽसौ पुण्यभुवि ॥

इवेन सह समासो विभक्त्यलोपः पूर्व्वपदप्रकृतिस्वरत्वञ्च वक्तव्यम् । * ।

प्रादिप्रसङ्गे कर्म्मप्रवचनीयानां प्रतिषेधो वक्तव्यः । * ।

---

२६२ । वागर्थाविति । 'वागर्थाविव'—"इवेन सह समासः विभक्त्यलोपः पूर्व्वपदप्रकृतिस्वरत्वञ्च वक्तव्यम् । * ।'—युक्तौ शुद्धिप्रेमाणौ विभातः । यत्र शुद्धिः तत्र प्रेमा यत्र प्रेमा तत्र शुद्धिः स्वार्थानुसन्धानेन चित्तस्यानैर्म्मल्यम् तद्विरहे प्रेम्णोऽभ्युदयः । प्रेम्णा स्वार्थत्यागस्ततः शुद्धिः । अतस्तौ नित्ययुक्तौ । 'साधुगुणान् अनु'—"प्रादिप्रसङ्गे कर्म्मप्रवचनीयानां प्रतिषेधो वक्तव्यः । * ।"—भक्तिः समुदेति । यतः असौ भक्तिः पुण्यभुवि उदेतीति शेषः । पुण्यं विना न भक्तेरभ्युदयः ।

२६२ । पूज्यो नित्यं सूत्रकारो नितान्तं
स्वादुङ्कारं भुङ्क्त एषोऽन्नमुक्त्वा ।
उच्चैःकारं मूलकेनोपदंशं
खाट्कृत्यासौ ष्ठीवतीति ह्यनिष्टम् ॥

(क) उपपदमतिङ् [कुम्भकारः सुरापः] ।

अतिङ् उपपदं सुपा सह [समस्यते] नित्यं तत्पुरुषः [च समासः] (२।२।१९) ।

(ख) [स्वाद]ऽमैवाव्ययेना[सौ लवणङ्कारमाश तत्] ।

अव्ययेन अमैव [नान्येन समस्यते] (२।२।२०) ।

(ग) तृतीया प्रभृतीन्यन्यतरस्यां [बाल निस्विनु] ।

तृतीयाप्रभृतीनि अमैव अव्ययेन [समस्यन्ते] तत्पुरुषः [च समासः] (२।२।२१) ।

(घ) क्त्वा चो[च्चैःकृत्य बालालं कृत्वालंकृत्य शोभसे] ।

क्त्वा च तृतीयाप्रभृतीनि अन्यतरस्यां [समस्यन्ते] तत्पुरुषः [च समासः] (२।२।२२) ।

(ङ) [बाल स्याद]नुकरणञ्चानिति पर[मेष खाट्करोत्यङ्ग] ।

अनिति परम् अनुकरणं क्रियायोगे गतिः (१।४।६२) ।

---

२६२ । पूज्य इति । नित्यम् 'सूत्रकारः'—"उपपदमतिङ्"—नितान्तं पूज्यः । एष अत्र 'उच्चैःकारम्' उक्त्वा सम्भाष्य 'मूलकेनोपदंशं'—'स्वादुङ्कारं'—"अमैवाव्ययेन" "तृतीयाप्रभृतीन्यन्यतरस्याम्"—अन्नं भुङ्क्ते । असौ 'खाट्कृत्य'—"क्त्वा च"—ष्ठीवतीति हि अनिष्टम् सभ्यजनोचितव्यवहारविरुद्धत्वात् ।

२६४ । सत्कृत्य तं तस्य च यद्यसत्कृतं
स्वं स ह्यलङ्कृत्य पराभवन्नु ।
कामान् पुनर्योगबलेन चान्त-
र्हत्याच्च तेजोविभवेन राजते ॥

(क) [वाला]ऽऽदरानादरयोः सदसती[ह सत्कृतम्] ।

आदरानादरयोः सदसती क्रियायोगे गती (१।४।६३)।

(ख) भूषणेऽल[मलङ्कृत्य]—

भूषणे अलं गतिः (१।४।६४)।

(ग) [स्याद]न्तरपरिग्रहे ।

अपरिग्रहे अन्तः गतिः (१।४।६५)।

२६५ । अन्तर्द्धा भावस्यान्तर्द्धिः भ्रान्तेर्न तं सुखयतीह ।
अन्तर्णयति स ईशं श्रयते य इह विधिमस्य पुनः॥

अन्तःशब्दस्याङ् किविधिणत्वेषूपसंख्यानम् । * ।

---

२६४ । सदिति । स हि तं 'सत्कृत्य' तस्य यत् 'असत्कृतं'—"आदरानादरयोः सदसती"—तत्पराभवत् नु ? किं कृत्वा ? स्वम् आत्मानं हि 'अलङ्कृत्य'—"भूषणेऽलम्"—सद्गुणेनेति शेषः। योगबलेन पुनः कामान् भोगाभिलाषान् 'अन्तर्हत्य'—"अन्तरपरिग्रहे"—अन्तर्नियम्य च तेजोविभवेन राजते ।

२६५ । अन्तर्द्धेति । भावस्य 'अन्तर्द्धा' तिरोधानम् भ्रान्तेः 'अन्तर्द्धिः' न तम् इह सुखयति । को वास्य प्रतिप्रसवः ? स जनः ईशम् 'अन्तर्णयति'—"अन्तःशब्दस्याङ्-किविधि-णत्वेषूपसंख्यानम् । * ।"—यः इह अस्य ईशस्य विधिं पुनः श्रयते ।

२६६ । कणेहत्य सुखं भुक्त्वा मनोहत्य धनं चयन् ।
सुखी न स्वं पुरस्कृत्य कामानस्तंगमय्य तु ॥

(क) [स कणेहत्यात्ति] कणेमनसी श्रद्धाप्रतिघाते [ऽङ्ग]।

श्रद्धाप्रतिघाते कणेमनसी गती (१।४।६६) ।

(ख) पुरोऽव्ययं [पुरस्कृत्य]—

अव्ययं पुरस् क्रियायोगे गतिः (१।४।६७) ।

(ग) अस्तं चा[गत एव सः] ।

अस्तं च गतिः (१।४।६८) ।

२६७ । अच्छगत्य तमच्छोद्य तेनादःकृत्य तु स्वयम् ।
हितं स्यादिति निर्णेता तिरोभूय रिपोः सुखी॥

(क) [स्याद]च्छगत्यर्थवदेष्व[च्छोद्याच्छगतं यथा] ।

गत्यर्थवदेपु अच्छ गतिः (१।४।६९) ।

---

२६६ । कणेहत्येति । 'कणेहत्य' अत्यन्तमभिलष्य तन्निवृत्तिपर्य्यन्तं सुखं भुक्त्वा 'मनोहत्य'—"कणेमनसी श्रद्धाप्रतिघाते"—अभिलाषनिवृत्तिपर्य्यन्तं धनं चयन् सञ्चितं कुर्व्वन् न सुखी । स्वम् आत्मानम् 'पुरस्कृत्य'—"पुरोऽव्ययम्"—धनादिभ्यः सर्व्वाणि विगणय्य कामान् तु 'अस्तंगमय्य'—"अस्तं च"—सुखीति शेषः ।

२६७ । अच्छगत्येति । 'अच्छगत्य' अभिमुखं गत्वा तम् 'अच्छोद्य'—"अच्छगत्यर्थवदेषु"—उक्त्वा तेन सह स्वयं तु 'अदःकृत्य'—"अदोऽनुपदेशे"—पर्य्यालोच्य हितं स्यादिति निर्णेता रिपोः कामात् 'तिरोभूय'—"तिरोऽन्तर्द्धौ"—सुखी । अन्यैः सम्भाषयतः स्वयं हितं पर्य्यालोचयतो वा न सुखसम्भावना । सुखन्तु कामत्यागेनेति फलितार्थः ।

(ख) [बाला]ऽदोऽनुपदेशे ;—

अनुपदेशे अदस् गतिः (१।४।७०)।

(ग) [स तिरोभूतः] तिरोऽन्तर्द्धौ।

अन्तर्द्धौ तिरस् गतिः (१।४।७१)।

२६८। तिरस्कृत्वा कामानलमिह हि तिरस्कृत्य विषया-
नुपाजेकृत्यालं हृदयमनुयन् साधुनिचयम्।
तथान्वाजेकृत्वा भजनसुखतः स्वेष्टचरणं
स साक्षात्कृत्यास्त्रं विसृजति नमस्कृत्य मुदितः॥

(क) विभाषा कृञि [विज्ञेयं तिरस्कृत्य तिरस्कृतम्]।

तिरस् कृञि गतिः विभाषा (१।४।७२)।

(ख) उपाजेऽन्वाजे [एहि त्वमुपाजेकृत्य तं खलु]।

उपाजे अन्वाजे कृञि गतौ विभाषा (१।४।७३)।

(ग) साक्षात्प्रभृतीनि च [ओ मिथ्याकृत्य सुखं कुतः]।

साक्षात्प्रभृतीनि कृञि गतौ विभाषा (१।४।७४)।

साक्षात्प्रभृतिषु च्व्यर्थवचनम्। *।

---

२६८। तिरस्कृत्वेति। इह हि कामान् अलं 'तिरस्कृत्वा' विषयान् 'तिरस्कृत्य'—"विभाषा कृञि"—हृदयम् अलम् 'उपाजेकृत्य' बलिष्ठं कृत्वा साधुनिचयम् अनुयन् अनुगच्छन् भजनसुखतः 'अन्वाजेकृत्वा'—"उपाजेऽन्वाजे"—स्वंबलाधिष्ठितं कृत्वा स्वेष्टचरणं 'साक्षात्कृत्वा' 'नमस्कृत्य' —"साक्षात्प्रभृतीनि च"—मुदितः सन् अस्त्रम् अश्रु विसृजति।

२६९ । उरसिकृत्य हितं न च तत्त्यजे-
न्मनसिकृत्य विधिं तमुपाश्रयेत् ।
निरलसं सरसं भजनं हरे-
र्हरति दुःखमशेषमुभे ततः ॥

(क) अनत्याधान उरसिमनसी [गतिसंज्ञिते] ।

अनत्याध्याने उरसिमनसी कृञि गती विभाषा (१।४।७५) ।

२७० । मध्येकृत्वा जनं रक्षेत् पदेकृत्य रिपून् क्षिपेत् ।
वसेन्निवचनेकृत्य चलां तां रसनां जयेत् ॥

(क) [बाल निवचनेकृत्य स सुखी] मध्ये पदे निवचने च ।

अनत्याध्याने मध्ये-पदे-निवचने च कृञि गतयः विभाषा (१।४।७६) ।

२७१ । पाणौकृत्य वहेद्भारं हस्तेकृत्य वशी भवेत् ।
प्राध्वंकृत्येन्द्रियग्रामं संसृतौ स सुखी वसेत् ॥

---

२६९ । उरसिकृत्येति । हितम् 'उरसिकृत्य' अभ्युपगम्य न च तत् त्यजेत् विधिं 'मनसिकृत्य'—"अनत्याधान उरसिमनसी"—निश्चित्य तम् उपाश्रयेत् । निरलसं सरसं यथा स्यात् तथा हरेः भजनम् अशेषं दुःखं हरति । ततः भजनतः उभे हितापरित्यागः विधिसमाश्रयणञ्च भवत इति शेषः ।

२७० । मध्येकृत्वेति । जनं 'मध्येकृत्वा' रक्षेत्, रिपून् कामादीन् 'पदेकृत्य' क्षिपेत् । 'निवचनेकृत्य'—"मध्ये पदे निवचने च"—वाचं नियम्य वदेत्, तां रसनां जयेत् ।

२७१ । पाणौकृत्येति । 'पाणौकृत्य' दारकर्म्म कृत्वा भारं वहेत्, 'हस्तेकृत्य'—"नित्यं हस्तेपाणावुपयमने"—वशी संयतेन्द्रियो भवेत्, नहि दारकर्म्म यथेच्छेन्द्रियचरितार्थत्वाय । इन्द्रियग्रामं 'प्राध्वंकृत्य—"प्राध्वं बन्धने"—बन्धनेनानुकूलं कृत्वा स संसृतौ सुखी वसेत् ।

(क) नित्यं हस्तेपाणावुपयमने [पाणौकृत्याप]।

उपयमने हस्तेपाणौ नित्यं गती (१।४।७७)।

(ख) [स्यात्] प्राध्वं बन्धने [बाल प्राध्वंकृत्य रिपून्सुखी]।

प्राध्वं कृञि नित्यं गतिः (१।४।७८)।

२७२। जीविकाकृत्य सत्सेवां प्रेरणां हृदयोत्थिताम्।
ईश्वरानुग्रहाद्भद्रोपनिषत्कृत्य राजसे॥

(क) जीविकोपनिषदावौपम्ये [तौ गतिसंज्ञितौ]।

औपम्ये विषये जीविकोपनिषदौ गती (१।४।७९)।

(ख) ते प्राग्धातो[र्ज्ञेयास्तथा हि समुदाहृतास्त्वग्रे]।

ते [गत्युपसर्गसंज्ञकाः] धातोः प्राक् [प्रयोक्तव्याः] (१।४।८०)।

इत्यव्यययोगेन तत्पुरुषः।

—

२७२। जीविकाकृत्येति। सत्सेवां 'जीविकाकृत्य' जीविकामिव कृत्वा, हे भद्र, ईश्वरानुग्रहात् हृदयोत्थितां प्रेरणाम् 'उपनिषत्कृत्य'—"जीविकोपनिषदावौपम्ये" "ते प्राग्धातोः"—उपनिषदमिव कृत्वा राजसे। सेतुरेवेश्वरवाणीश्रवणस्य कृतार्थता-मूलम्।

इत्यव्यययोगेन तत्पुरुषः।

—

२७३ । हृतकीर्त्तिरसौ कृताप्रियो
हृतसम्पद्गरदानसाधनः ।
क्षमयारिरकारि येन हि
प्रणतः प्रेमभरैः कृती स तु ॥

(क) [ज्ञेयः] शेषो बहुव्रीहि[र्विनयावनताननः] ।

शेषः [प्रोक्तादन्यः] बहुव्रीहिः (२।२।२३) ।

(ख) अनेकमन्यपदार्थे [ग्रामः प्राप्तोदको यथा] ।

अनेकम् [सुबन्तं] अन्यपदार्थे [वर्त्तमानं समस्यते] बहुव्रीहिः[च समासः](२।२।२४)।

२७४ । नाम्ना जितोऽस्य साक्षादजितस्य पुनः स संसारः ।
नीचैर्मुख इह तिष्ठ मा भव खरमुख उरसिहारः ॥

समानाधिकरणानां बहुव्रीहिर्वक्तव्यः । * ।

अव्ययानाञ्च बहुव्रीहिर्वक्तव्यः । * ।

सप्तम्युपमानपूर्व्वपदस्य बहुव्रीहिरुत्तरपदलोपश्च वक्तव्यः । * ।

---

२७३ । हृतकीर्त्तिरिति । 'हृतकीर्त्तिः' हृता कीर्त्तिः येन 'कृताप्रियः' कृतम् अप्रियं येन 'हृतसम्पत्' हृता अपहृता सम्पत् येन 'गरदानसाधनः' गरदानं विषदानं साधनं बधोपायः यस्य एवम्भूतः असौ—"शेषो बहुव्रीहिः" "अनेकमन्यपदार्थे"—अरिः येन हि क्षमया प्रेमभरैश्च प्रणतः अकारि स तु कृती कृतार्थः । वृत्तमेतत् सुन्दरीनाम तल्लक्षणम्—"अयुजोर्यदि सौ जगौ युजोः सभरालगौ यदि सुन्दरी तदा ।"

२७४ । नाम्नेति । स संसारः पुनः साक्षात् नाम्ना जितः अस्य अजितस्य—"समानाधिकरणानां बहुव्रीहिर्वक्तव्यः । * ।"—नाम्ना खलु अजितः यती न संसारी जितः । इह 'नीचैर्मुखः' "अव्ययानाञ्च बहुव्रीहिर्वक्तव्यः । * ।"—तिष्ठ मा 'खरमुखः' खरस्य मुखमिव मुखं यस्य कर्कशभाषित्वात् कुत्सितमुखत्वाच्च तथोक्तम् "उरसिहारः"—"सप्तम्युपमानपूर्व्वपदस्य बहुव्रीहिरुत्तरपदलोपश्च वक्तव्यः । * ।"—भव ।

२७५ । स्वर्णालङ्कारोऽयं कुन्तलचूड़श्चेदविद्यः ।
वृक्ष इव प्रपलाशः पथिकैस्त्याज्योऽस्त्रिचीरा न ॥

समुदायविकारषष्ठ्याश्च बहुव्रीहिरुत्तरपदलोपश्चेति वक्तव्यम् । * ।
नञोऽस्त्यर्थानां च बहुव्रीहिरुत्तरपदस्य च लोपो वक्तव्यः । * ।
प्रादिभ्यो धातुजस्य बहुव्रीहेरुत्तरपदस्य च वा लोपो वक्तव्यः । * ।
सुबधिकारेऽस्त्रिचीरादीनां बहुव्रीहिर्वक्तव्यः । * ।

२७६ । उपदशास्तथासन्नविंशा वा द्विदशाः पुनः ।
स्युरदूरदशाः पक्षेऽधिकविंशा न ते बलम् ॥

(क) [स्यात्शुभ] संख्ययाव्ययासन्ना-
दूराधिकसंख्याः संख्येये ।

संख्येये [वर्त्तमानया] संख्यया अव्ययासन्नदूराधिकसंख्याः [समस्यन्ते] बहुव्रीहिश्च समासः] (२।२।२५) ।

---

२७५ । स्वर्णेति । अयं 'स्वर्णालङ्कारः' सुवर्णस्य विकारोऽलङ्कारोऽस्य 'कुन्तलचूड़ः' —"समुदायविकारषष्ठ्याश्च बहुव्रीहिरुत्तरपदलोपश्चेति वक्तव्यम् । * ।"—कुन्तलसंघातः चूड़ा अस्य चेत् यदि 'अविद्यः'—"नञोऽस्त्यर्थानां बहुव्रीहिरुत्तरपदस्य च लोपो वक्तव्यः ।*."—'प्रपलाशः'—"प्रादिभ्यो धातुजस्य बहुव्रीहेरुत्तरपदस्य च वा लोपो वक्तव्यः ।*। —प्रपतितः पलाशः पर्णम् अस्य वृक्षः पथिकैः इव त्याज्यः, न कोऽपि तमाद्रियते, 'अस्त्रिचीरा'—"सुबधिकारेऽस्त्रिचीरादीनां बहुव्रीहिर्वक्तव्यः । * ।"—न त्याज्येति शेषः दुग्धसम्पद्विधानात्वात् न गवादिकं कोऽपि त्यजति, तथा विद्यया जन आदरभाजनम् इति भावः ।

२७६ । उपदशा इति । पक्षे 'उपदशाः' उपगता दश एषां नव एकादश वा, तथा 'आसन्नविंशाः' आसन्ना विंशतिरेषाम् ऊनविंशतिः 'द्विदशाः' द्विर्दश संख्या एषां-विंशतिः वा पुनः जना स्युः भवन्तु । 'अदूरदशाः' 'अधिकविंशाः'—"संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये"—ते न बलम् । न हि बलं जनसंख्यया किन्तु धर्मशक्त्या ।

२७७। पूर्व्वोत्तरा दिक् खलु योगहेतो-
रासीदिह व्यर्थमहो कचाकचि ।
नापेक्ष्यते तत्र तु सा विशेषा
सश्रिष्य एकां श्रयते स्थिरस्थितेः ॥

(क) दिङ्नामान्यन्तराले [स्यात्प्राप्तः पूर्व्वोत्तरां दिशम्] ।

अन्तराले [वाची] दिङ्नामानि [समस्यन्ते] बहुव्रीहिः [च समासः] (२।२।२६)। सर्व्वनाम्नो वृत्तिमात्रे पूर्व्वपदस्य पुंवद्भावः । * ।

(ख) [स्यात्] तत्र तेनेदमिति सरूपे[ऽत्र कचाकचि] ।

तत्र [सप्तम्यन्ते] तेन [तृतीयान्तेन] इदम् इति [अर्थे समस्यते] बहुव्रीहिः [च समासः] (२।२।२७)।

(ग) [कल्याण] तेन सहेति तुल्ययोगे [समात्मकः] ।

तुल्ययोगे [वर्त्तमानं] सह तेन [इति तृतीयान्तेन] [समस्यते] बहुव्रीहिः [च समासः] (२।२।२८)।

इति बहुव्रीहिः ।

——o——

२७७। पूर्व्वोत्तरेति । 'पूर्व्वोत्तरा'—"दिङ्नामान्यन्तराले"—पूर्व्वस्याय उत्तरस्याय दिशोर्यदन्तरालं सा पूर्व्वोत्तरा दिक् खलु योगहेतोः आसीत्, इह अहो 'कचाकचि' —"तत्र तेनेदमिति सरूपे"—कचेषु कचेषु च गृहीत्वा इदं युद्धं प्रवृत्तं कचाकचि व्यर्थम्, न तत्र वाक्कलहेन किञ्चित् फलम्। कथम्? तत्र योगे सा विशेषा दिक् तु न अपेक्ष्यते। ततः कथम् योगाय दिग्विशेषग्रहणोपदेशः? स्थिरस्थितेः स्थैर्य्यप्रधानयोगे निरन्तरं परिवर्त्तनस्यास्थैर्य्यकरत्वात् स्थिरस्थितिनिमित्तम् योगी 'सश्रिष्यः' —"तेन सहेति तुल्ययोगे"—एकां निर्द्दिष्टां दिशं श्रयते । सश्रिष्य इति विशेषणशक्त्या सम्प्रदायपरम्परया तथा व्यवहार आसीदिति ध्वन्यते ।

इति बहुव्रीहिः ।

२७८। हरिहरौ शुभकरौ न मनुजौ यदि पुनः।
मलहरौ चिदमलौ निवसतां हृदि सदा॥

(क) चार्थे द्वन्द्वो [यथा प्लक्षन्यग्रोधौ वाक्त्वचं यथा]।

चार्थे [वर्त्तमानं] अनेकं [समस्यते] द्वन्द्वः [च समासः] (२।२।२९)।

इति द्वन्द्वः।

---

२७९। नयवान् यदि वाक्पटुर्न तु
किमु तेनास्य न खिन्नवासितैः।
मृदुशुभ्रविलेपनैर्धृति-
रिभवाह्याद्विभवात् सुखं कुतः॥

---

२७८। हरिहराविति। मनुजौ 'हरिहरौ'—"चार्थे द्वन्द्वः"—न शुभकरौ, न ताभ्यां शुभं तस्य न मनुजाधीनत्वात्। यदि पुनः मलहरौ चिदमलौ चिद्रूपेण निर्म्मलौ सदा हृदि निवसताम्। पापहरत्वं केवलमीश्वरस्य अतः भेदसूचनं केवलं नाम्ना। वृत्तमेतत् गजगतिर्नाम "नभलगा गजगतिः।"

इति द्वन्द्वः।

---

२७९। नयवानिति। नयवान् यदि तु न 'वाक्पटुः'—"उपसर्ज्जनं पूर्व्वम्"—तेन अस्य नयवतः किमुत? न कापि क्षतिः। न 'खिन्नवासितैः'—"राजदन्तादिषु परम्"—'मृदुशुभ्रविलेपनैः'—"द्वन्द्वे घि"—धृतिः सन्तोषः। 'इभवाह्यात्'—"अल्पाच्तरम्"—इभस्य वाह्य इभवाह्यम् तस्मात् विभवात् सुखं कुतः। न हस्त्यश्वादिविभवः सुखाय।

(क) [बालो]पसर्ज्जनं पूर्व्वं [वृकभीतोऽपपण्डित:] ।

उपसर्ज्जनं [समासे] पूर्व्वं [प्रयोक्तव्यम्] (२।२।३०) ।

(१) [भवेत्] प्रथमानिर्द्दिष्टं समास उपसर्ज्जनम्(१।२।४३)।

(२) एकविभक्तिचापूर्व्वनिपाते [निर्वृहद्गुह:] (१।२।४४)।

निरादय: क्रान्ताद्यर्थे पञ्चम्या इत्युक्तम् ।

(ख) राजदन्तादिषु परं [सिक्तसंदृष्टमेव तत्] ।

राजदन्तादिषु उपसर्ज्जनं परं [प्रयोक्तव्यम्] (२।२।३१) ।

(ग) द्वन्द्वे घि [पटुशुक्लौ तौ] ;—

द्वन्द्वे घि पूर्व्वं [प्रयोक्तव्यम्] (२।२।३२) ।

(घ) अजाद्यदन्त[मुत्तम]

अजाद्यदन्तं पूर्व्वं [प्रयोक्तव्यम्] (२।२।३३) ।

२८० । पटुशुक्लस्दव इभतुरगानड्वाहोऽजाखरौ च ।
करभाश्वे विभवोऽस्य न चेनवायू कस्यापि च ॥

बह्वष्वनियम: । * ।

द्वन्द्वे घ्यजाद्यदन्तं विप्रतिषेधेन । * ।

---

२८० । पटुशुक्लेति । 'पटुशुक्लस्दव:' 'इभतुरगानड्वाह:'—"बह्वष्वनियम:"—'अजाखरौ' 'करभाश्वे'—अदिति तपरकरणात्—अस्य जनस्य विभव:, 'इनवायू'—"द्वन्द्वे घ्यजाद्यदन्तं विप्रतिषेधेन । * ।"—सूर्य्यानिलौ कस्यापि च न विभव:, सर्व्वजनस्य सुलभत्वात् ।

२८१ । भृङ्गमाधवयोर्योगो मधुसञ्चयहेतुकः ।
पत्रकुसुमप्रस्थानां क्रमोद्भेदेन सन्ततम् ॥

(क) अल्पाच्तरं [यथा प्लक्षन्यग्रोधौ ग्रग्रभल्लकौ] ।

द्वन्द्वे अल्पाच्तरं पूर्व्वं [प्रयोक्तव्यम्] (२।२।३४) ।

२८२ । प्रबलशिशिरसुरभय इह पर्य्यायेणायान्ति नायुः ।
चित्रास्वाती भातो घनान्तघनकालौ प्रस्थाय ॥

ऋतुनक्षत्राणामानुपूर्व्व्येण समानाक्षराणामिति वक्तव्यम् । * ।

२८३ । धनधान्यं यदि दीक्षातपसी हरतीह मानवानां धिक् ।
चेद्ब्राह्मणक्षत्रियविट्शूद्रा इत्यनुरूपगुणैस्तु ॥

लघ्वक्षरं पूर्व्वमिति वक्तव्यम् । * ।

---

२८१ । भृङ्गेति । 'भृङ्गमाधवयोः'—"अल्पाच्तरम्"—भृङ्गवसन्तयोः योगः मधुसञ्चयहेतुकः वसन्ते पुष्पे मधुसञ्चयो भवति तन्निमित्तं भृङ्गेण तस्य योगः । 'पत्र-कुसुमप्रस्थानां'—"बहुष्वनियमः । * ।"—योगः सन्ततं नियतं क्रमोद्भेदेन । पत्रात् कुसुमानि कुसुमेभ्यः फलानीति वैज्ञानिकं तत्त्वम् ।

२८२ । प्रबलेति । इह 'प्रबलशिशिरसुरभयः'—"ऋतुनक्षत्राणामानुपूर्व्व्येण समानाक्षराणामिति वक्तव्यम् । * ।"—'हेमन्तशिशिरवसन्ताः'—"हेमन्तः प्रबलो रौद्रः" इति हेमचन्द्रः—पर्य्यायेण आयान्ति न आयुः । 'चित्रास्वाती' भातः 'घनान्तघनकालौ'—असमानाक्षरत्वात् नानुपूर्व्व्येण—शरत्तपात्ययौ प्रस्थाय भवत इति शेषः ।

२८३ । धनधान्यमिति । यदि 'धनधान्यं'—"लघ्वक्षरं पूर्व्वमिति वक्तव्यम् । * ।"—इह मानवानां 'दीक्षातपसी' "सर्व्वतोऽभ्यर्हितं पूर्व्वमिति वक्तव्यम् । * ।"—हरति, धिक् । 'ब्राह्मणक्षत्रियविट्शूद्राः'—"वर्णानामानुपूर्व्व्येण पूर्व्वनिपातो वक्तव्यः । * ।—इति चेत् अनुरूपगुणैः तु तपःस्वाध्यायादितत्तद्वर्णव्यञ्जकगुणैः ।

सर्व्वतोऽभ्यर्हितं पूर्व्वमिति वक्तव्यम् । * ।

वर्णानामानुपूर्व्व्येण पूर्व्वनिपातो वक्तव्यः । * ।

२८४ । सौभ्रात्रं पूर्व्वेषां सहजं नु युधिष्ठिरार्ज्जुनौ पश्य ।
राघवसौमित्री च द्वित्रानपि नेह पश्यामः ॥

भ्रातुश्च ज्यायसः पूर्व्वनिपातः । * ।

संख्याया अल्पीयस्याः पूर्व्वनिपातः । * ।

२८५ । कण्ठेहारो लम्बशाटश्चित्रगुर्न हि शोभते ।
मूर्खश्चेद्धीनवृत्तोऽयं दरिद्रो वृत्ततो धनी ॥

(क) [कण्ठेकालः स] सप्तमीविशेषणे बहुव्रीहौ ।

बहुव्रीहौ सप्तमीविशेषणे पूर्व्वं [प्रयोक्तव्ये] (२।२।३५)।

(१) [स्यादृ] एच इग्घ्रस्वादेशे[कुलन्तदतिरि प्रिय]१।१।४८।

२८६ । सर्व्वश्वेतः स द्विकृष्णो वा द्व्यन्धो वा नेह ।
विचार्य्यं प्रियवृत्तो हरिप्रियो गड़ुकण्ठोऽर्थ्योऽत्र ॥

---

२८४ । सौभ्रात्रमिति । पूर्व्वेषां सौभ्रात्रं सहजं नु ? 'युधिष्ठिरार्ज्जुनौ' 'राघवसौमित्री' च—"भ्रातुश्च ज्यायसः पूर्व्वनिपातः । * ।"—पश्य । इह 'द्वित्रान्'—"संख्यायां अल्पीयस्याः पूर्व्वनिपातः । * ।"—अपि तत्सदृशान् भ्रातॄन् न पश्यामः । अधुना पाश्चात्यशिक्षावैगुण्यात् न तादृशं सौभ्रात्रं दृश्यते ।

२८५ । कण्ठेहार इति । 'कण्ठेहारः' 'लम्बशाटः' 'चित्रगुः'—"सप्तमीविशेषणे बहुव्रीहौ"—चेत् यदि अयं मूर्खः हीनवृत्तः न हि शोभते, वृत्ततः चरित्रतः दरिद्रः धनी ।

२८६ । सर्व्वश्वेत इति । स 'सर्व्वश्वेतः' 'द्विकृष्णः' वा 'द्व्यन्धः'—"बहुव्रीहौ सर्व्वनामसंख्ययोरुपसंख्यानम् । * ।"—द्वौ अन्धौ यस्मात् अपरविषयलक्षणाक्रान्तौ वा इह

बहुव्रीहौ सर्व्वनामसंख्यायोरुपसंख्यानम् ।*।

संख्यासर्व्वनाम्नोर्बहुव्रीहौ परत्वात् संख्यायाः । * ।

वा प्रियस्योपसंख्यानम् । * । ;——

गड्वादिभ्यः परा सप्तमी वाच्या । * ।

२८७ । मुक्तोपानत्क एषोऽनुयाति सङ्कीर्त्तनं हरेः ।
कृतकटोऽयमुत्कृष्टं शिल्पं किं न्वस्य निन्द्यते ॥

(क) निष्ठा [ऽवमुक्तोपानत्क आहूतब्राह्मणो यथा] ।

बहुव्रीहौ निष्ठा पूर्व्वं [प्रयोक्तव्या] (२।२।३६) ।

२८८ । सुखदूषणजग्धीह प्रोद्वेगाय हि मासजाता ।
न तथौषधहेतोर्यत् सुखभुक्ते स्यात् कटाक्षपातोऽत्र ॥

जातिकालसुखादिभ्यः परा निष्ठेति वाच्यम् । * ।

---

न विचार्य्यम्, 'प्रियव्रतः' 'हरिप्रियः'—"वा प्रियस्योपसंख्यानम् । * ।"—'गडुकण्ठः'—"गड्वादिभ्यः परा सप्तमी वाच्या । * ।"—कण्ठे स्थितो गडुरस्येति अत्र अयं वन्द्यः । प्रियचरित्रत्वात् हर्य्यनुरक्तचित्तत्वात् गलगण्डकृतकुत्सिततनुरपि वन्दनीयः ।

२८७ । मुक्तेति । एष 'मुक्तोपानत्कः' हरेः सङ्कीर्त्तनम् अनुयाति । अयं 'कृतकटः'—"निष्ठा"—अस्य किं नु उत्कृष्टं शिल्पं निन्द्यते । हरिसङ्कीर्त्तनपरायणस्य शिल्पेन जीवनयात्रानिर्व्वाहो न निन्दनीय इति पूर्व्वापरसम्बन्धः ।

२८८ । सुखदूषणेति । 'सुखदूषणजग्धी' जग्धं सुखदूषणं पलाण्डुर्यया सा इह हि प्रोद्वेगाय । 'मासजाता' औषधहेतोः न तथा प्रोद्वेगाय न तस्याः पलाण्डुकृतमुखदुर्गन्धः कस्याप्युद्वेगं जनयति । कथम् ? यत् यस्मात् अत्र 'सुखभुक्ते'—"जातिकालसुखादिभ्यः परा निष्ठेति वाच्यम् । * ।"—सुखं भुक्तं येन तस्मिन् कटाक्षपातः स्यात् । सुखमिति बुद्ध्या ताद्वग्घेयवस्तुभोजने निन्दा भवति न त्वौषधार्थम् ।

२८९। असुद्यतोद्यतगदान् शास्तु तु नित्यं दण्डपाणिः।
क्षमा वशीकृतिरस्मिन् लोके प्रेमा तु देवत्वम्॥

प्रहरणादिभ्यश्च परे निष्ठासप्तम्याविति वक्तव्यम्। *।

२९०। अग्न्याहितोऽग्निं यदि जातपुत्रो
यजेदुपास्ते न कथं तमीशम्।
तत्रोत्सवे पिङ्गलकेशभारै-
र्जटाकडाराभिरहो यतिर्न॥

(क) वाहिताग्न्यादिषु [घृतपीतोऽग्न्याहित एव सः]।

वाहिताग्न्यादिषु निष्ठा पूर्व्वं वा [प्रयोक्तव्या] (२।२।३७)।

---

२८९। असुद्यतेति। 'असुद्यतोद्यतगदान्' जनान् तु 'दण्डपाणिः'—"प्रहरणादिभ्यश्च परे निष्ठासप्तम्याविति वक्तव्यम्। *।"—नित्यं शास्तु, अस्मिन् लोके क्षमा वशीकृतिः प्रेमा तु देवत्वम्। अक्रोधस्य न क्षमा सम्भवति, प्रेमा तु अक्रोधस्यापीति देवप्रकृतिद्योतकत्वं प्रेम्णः।

२९०। अग्न्याहित इति। 'अग्न्याहितः' आहिताग्निः यदि 'जातपुत्रः' पुत्रजातः अग्निं यजेत् तज्जन्ययज्ञविशेषं कुर्य्यात्, न कथं तम् ईशं परमेशम् तत्र उत्सवे सन्तानजन्मजन्ये उपास्ते? तस्य सर्व्वफलदातृत्वात्। 'पिङ्गलकेशभारैः' 'जटाकडाराभिः' अहो न यतिः।

इति परपूर्व्वनिपातप्रकरणम्।

इति दृष्टान्तव्याख्यायां समासे प्रथमं प्रकरणम्।

—

(ख) [कड़ारजैमिनिः सोऽयं] कड़ाराः कर्म्मधारये।

कड़ाराः कर्म्मधारये पूर्व्वं [प्रयोक्तव्या] (२।२।३८)।

इति परपूर्व्वनिपातप्रकरणम्।

इति दृष्टान्तसर्व्वस्वे दृष्टान्तानुगमने समासे आकड़ारादेका-
संज्ञेत्यनेनाधिकृतसमासचतुष्टयकथनं नाम
प्रथमोऽध्यायः।

---

२९१। रोगध्वंसकरणदक्षपञ्चमूली
मूर्द्धग्रीवमवनमत्त्विहेशपादे।
वीणावादकपरिवादकन्तु नाम
गायत्वस्य रथिकवाहवारमार्द्रम्॥

(क) [स्याद्] द्विगुरेकवचनं [दशमूलीह शोभना]।

द्विगुः एकवचनं [एकवत्] (२।४।१)।

(ख) [स्याद्] द्वन्द्वश्च प्राणितूर्य्यसेनाङ्गानां [शिरोमुखम्]।

प्राणि-तूर्य्य-सेनाङ्गानां द्वन्द्वः एकवत् (२।४।२)।

---

२९१। रोगेति। 'रोगध्वंसकरणदक्षपञ्चमूली'—"द्विगुरेकवचनम्"—पञ्चानां शालपर्ण्यादीनां विल्वानां वा मूलानां समाहारः पञ्चमूली, रोगविनाशकार्य्ये दक्षा साहि ज्वरादौ संयोगवियोगादतीव हितकरी। इह ईशपादे भगवच्चरणे 'मूर्द्धग्रीवम्' अवनमतु 'वीणावादकपरिवादकं' तु अस्य ईशस्य नाम गायतु, 'रथिकवाहवारं'—"द्वन्द्वश्च प्राणि-तूर्य्यसेनाङ्गानाम्"—रथिकाश्वारोहम् आर्द्रं भवतु। तूर्य्याङ्गानां युद्धे शीतसाहदानं निवारयन् परमेशनामगानं विहितत्वेन प्रतिपादयति सेनाङ्गानान्तु चित्तकार्कश्यपरिहारं नामगानश्रवणे चित्तार्द्रतास्त्विति तत्त्वम्। प्रहर्षणीवृत्तमेतत्—तल्लक्षणम्—"म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षणीयम्" म्नौ जौ ग्रस्त्रिभिर्म-न-ज-र-गाः प्रहर्षणीयम्"।

२९२। उदगात् कठकालापं प्रत्यष्ठात् कठकौथुमम् ।
को वानुवदतीत्यर्काश्वमेधं क्व नु सम्प्रति ॥

(क) अनुवादे चरणानां [प्रत्यष्ठात् कठकौथुममङ्] ।

अनुवादे [गम्यमाने] चरणानां [शाखाध्येतॄणाम्] द्वन्द्वः एकवत् (२।४।३)।
स्थेणोर्लुङिति वक्तव्यम् । * ।

(ख) अध्वर्य्युक्रतुरनपुंसकं [सुबुद्धे] ।

अध्वर्य्युक्रतुः अनपुंसकं द्वन्द्वः एकवत् (२।४।४)।

२९३। पदकक्रमकं गर्व्वैः कथं क्रमकवार्त्तिकम् ।
परस्परन्तु वीच्चेतारामश्वि शिल्पिसाधनम् ॥

---

२९२। उदगादिति। 'कठकालापम्' उदगात् 'कठकौथुमं' प्रत्यष्ठात्—"अनुवादे चरणानां" "स्थेणोर्लुङिति वक्तव्यम्। * ।"—कठेन प्रोक्तं छन्दोऽधीयते कठाः कलापिना प्रोक्तं छन्दोऽधीयते कालापाः कठेषु कालापेषु उदितेषु तत्र गन्तव्यमिति संवादं कृत्वा विप्रत्यावस्थितं प्रत्यन्यो वदति कठकालापमुदगात् । कठकालापमुदगादिति एवं को वा अनुवदति न कोऽपि । एवं कठकौथुममित्यत्र ज्ञेयम् । कुथुमिना प्रोक्तं छन्दोऽधीयते कौथुमाः । 'अर्काश्वमेधं'—"अध्वर्य्युक्रतुरनपुंसकम्"—यजुर्व्विहितयागद्वयं सम्प्रति क्व नु ? न कुत्रापि । सम्प्रति वेदाध्ययनतद्विहितयागानुष्ठानयोरभावात् परब्रह्मनिष्ठान् प्रति तयोस्तुच्छत्वादेवमुक्तम् ।

२९३। पदकेति। 'पदकक्रमकं' 'क्रमकवार्त्तिकं'—"अध्ययनतोऽविप्रकृष्टाख्यानाम्"—पदान्यधीते पदकः क्रममधीते क्रमकः, पदान्यधीत्य क्रममधीते ऽतस्तयोरध्येत्रोः प्रत्यासत्तिः । एवं क्रमकवार्त्तिकमित्यत्रापि ज्ञेयम् । कथं गर्व्वैः परस्परं वीच्चेत, न किमपि गर्व्वकारणमिति भावः । 'आरामश्वि'—"जातिरप्राणिनाम्"—शिल्पिसाधनम् ।

(क) [स्याद्]ऽध्ययनतोऽविप्रकृष्टाख्यानां [सुमङ्गल] ।

अध्ययनत: अविप्रकृष्टाख्यानां द्वन्द्व: एकवत् (२।४।५) ।

(ख) जातिरप्राणिना[माराशस्त्रि धानाशष्कुलि] ।

अप्राणिनां जाति: द्वन्द्व: एकवत् (२।४।६) ।

२९४ । गङ्गाशोणं सेतुशोभि ते कुरुकुरुजाङ्गलम् ।
पथिका: सुखिनोऽद्यत्वे भ्रमन्तु लौहवर्त्मना ॥

(क) [स्याद्वाल] विशिष्टलिङ्गो नदी-
देशोऽग्रामा: [कुरुकुरुजाङ्गलम्] ।

विशिष्टलिङ्ग: [भिन्नलिङ्ग:] नदीदेश: द्वन्द्व एकवत् अग्रामा: (२।४।७) ।

२९५ । मथुरापाटलिपुत्त्रं विख्यातन्त्वितिवृत्ते सत: ।
कैलासगन्धमादन द्र सौर्य्यकेतवते कुत्र वा ॥

ग्रामप्रतिषेधे नगरप्रतिषेधो वक्तव्य: । * ।

उभयतश्च ग्रामाणां प्रतिषेधो वक्तव्य: । * ।

२९६ । यूकालिक्षं रोगधर्म्मो विरोधि
काकोलूकं श्वश्वधूर्त्तं स्वभावात् ।

---

२९४ । गङ्गेति । 'गङ्गाशोणं सेतुशोभि । अद्यत्वे अधुना ते पथिका: सुखिन: सन्त: 'कुरुकुरुजाङ्गलं'—"विशिष्टलिङ्गो नदीदेशोऽग्रामा:"—लौहवर्त्मना वाष्पयान-गमनवर्त्मना भ्रमन्तु । नाधुना दुर्गमत्वं तत्तद्देशानां नदनदीनां वा ।

२९५ । मथुरेति । 'मथुरापाटलिपुत्त्रं'—"ग्रामप्रतिषेधे नगरप्रतिषेधो वक्तव्य: ।*।" —इतिवृत्ते इतिहासे तु विख्यातं प्रसिद्धम् । 'कैलासगन्धमादने' सत: द्र अहो 'सौर्य्यकेतवतं'—"उभयतश्च ग्रामाणां प्रतिषेधो वक्तव्य: । * ।"—सौर्य्यञ्च नगरं केतवता च ग्राम: कुत्र वा नाद्यत्वे कुत्रापि ।

२९६ । यूकेति । 'यूकालिक्षं'—"क्षुद्रजन्तव:"—रोगधर्म्म: केशत्वग्गता यूका-लिक्षा हि रोगजन्या । 'काकोलूकं' 'श्वश्वधूर्त्तं'—"येषाञ्च विरोध: शाश्वतिक:"—स्व-

तक्षायस्कारं वसत्वत्र सख्ये
दासीदासं मन्यतां नो गवाश्वम्॥

(क) [भो] क्षुद्रजन्तवो [यूकालिक्षञ्च दंशपीलकम्]।

क्षुद्रजन्तवः द्वन्द्वे एकवत् (२।४।८)।

(ख) [भवति बाल] येषाञ्च विरोधः
शाश्वतिको [ऽहिनकुलमश्वमहिषम्]।

येषाञ्च शाश्वतिकः [नित्यः] विरोधः तेषां द्वन्द्वः एकवत् (२।४।९)।

(ग) [सुबुद्धे] शूद्राणामनिरवसितानां [तक्षरजकम्]*।

अनिरवसितानां [पात्रादवहिष्कृतानां] शूद्राणां द्वन्द्वः एकवत् (२।४।१०)।

(घ) [गवाश्वं पुत्त्रपौत्त्रञ्च] गवाश्वप्रभृतीनि च।

गवाश्वप्रभृतीनि द्वन्द्वे एकवत् (२।४।११)।

२९७। शालकपीतनं प्लक्षन्यग्रोधा रुरुरोहितम्।
कुरङ्गशम्बरा व्रीहियवञ्च नलताण्डवाः॥
कुशकाशं माषमुद्गाः शाकसूपं मनोहरम्।

---

शृगालं स्वभावात् विरोधि। अत्र तक्षायस्कारं'—"शूद्राणामनिरवसितानाम्"—सखेऽत्र वसतु 'दासीदासं' कर्म्म 'गवाश्वं'—"गवाश्वप्रभृतीनि च"—भो न मन्यतां जन इति शेषः। "पृथ्व्याश्च दिव्यधाम्नश्च सेवते प्रभुरप्यसौ" इति न्यायेन दासदासीनाम्मानार्हत्वम्।

२९७। शालकपीतनमिति। 'शालकपीतनं' 'प्लक्षन्यग्रोधाः' 'रुरुरोहितम्' 'कुरङ्गशम्बराः' 'कुशकाशं' 'नलताण्डवाः' 'व्रीहियवं' 'माषमुद्गाः' मनोहरं 'शाकसूपम्'

---

* वृत्तमेतत् सुधानाम—तल्लक्षणम्—"सुधा तर्कैस्तर्कैर्भवति ऋतुभिर्यो मो नसतसाः।"

दधिघृते गोमहिषं द्विपद्विकक्कुदस्तथा॥
कपोतनीलकण्ठश्चाच तित्तिरकपिञ्जला:।
रम्याश्ववडवौ कालं पूर्व्वापरमसाधका:॥
धृते: कति भजन्त्येते दग्रास्तैरधरोत्तरा:॥

(क) विभाषा वृक्षमृगतृणधान्य-
व्यञ्जनपशुशकुन्यश्ववडव-
पूर्व्वापराधरोत्तराणां [द्व]।

वृक्ष मृग-तृण-धान्य-व्यञ्जन-पशु-शकुन्य-श्व वडव-पूर्व्वा परा-धरो-त्तराणां विभाषा द्वन्द्व: एकवत् (२ ४।१२)।

२९८। वदरामलके रथिकाश्वारोहौ शालशिरीषौ च।
करुपृषती कोकसर:काकौ व्रीहियवौ न हिंस्यौ॥
यूकालिक्षे त्याज्ये कुशकाशावौषधायाच॥

फलसेनावनस्पति[मृगशकुनि]क्षुद्रजन्तुधान्यतृणानां द्वन्द्वो विभाषा चैकवद्भवति बहुप्रकृतिरिति वाच्यम्। *।

---

'दधिघृतं' 'गोमहिषं' तथा 'द्विपद्विकक्कुदा:' 'कपोतनीलकण्ठ' च 'तित्तिरकपिञ्जला:' रम्याश्ववडवौ' एते 'पूर्व्वापरं' कालं धृते: सन्तोषस्य असाधका: न तै: सन्तोष आयाति, कथम्? 'कति अधरोत्तरा:'—"विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्व्वापराधरोत्तराणाम्"—दग्रा: तै: भजन्ति जना इति शेष:।

२९८। वदरेति। 'वदरामलकौ' 'रथिकाश्वारोहौ' 'शालशिरीषौ' 'करुपृषतौ' 'कोकसर:काकौ' 'व्रीहियवौ' न हिंस्यौ। कथं फलादिष्वपि हिंसाभाव:, विना कारणं तेषां हिंसनमप्यपराधकरम्। 'यूकालिक्षे' त्याज्ये अनुपहिंस्य परिहार्य्ये। 'कुशकाशौ'—"फलसेनावनस्पति[मृगशकुनि]क्षुद्रजन्तुधान्यतृणानां द्वन्द्वो विभाषा चैकवद्भवति बहुप्रकृतिरिति वाच्यम्। *।"—अत्र औषधाय। एतेन कारणे विद्यमाने छेदनं शस्तमिति ध्वनितम्।

२९९। जनान्नो शीतोष्णं न खलु सुखदुःखे च रुजतः
मनो हेतुस्तस्याङ्ग दधिपयसी किं सुखयतः।
न चेच्छ्रद्धामेधे यदि वदनजिह्वा उपदशा
दश ग्राम्ये तुण्डोष्ठमुपदशमैन्नेशभणने ॥

(क) [बाल भवति] विप्रतिषिद्धञ्चा-
नधिकरणवाचि [सुखदुःखन्तत्] ।

अनधिकरणवाचि विप्रतिषिद्धं च द्वन्द्वे एकवत् (२।४।१३) ।

(ख) न दधिपयआदीन्य[चाद्यावसाने कल्याण भोः] ।*

दधिपयआदीनि न एकवत् (२।४।१४) ।

---

२९९। जनानिति। न 'शीतोष्णे' न खलु 'सुखदुःखे' च—"विप्रतिषिद्धं चानधिकरणवाचि"—जनान् रुजतः। कथम्? तस्य क्लेशस्य मनो हेतुः। अङ्ग हे बाल किं 'दधिपयसी' सुखयतः? चेत् यदि न 'श्रद्धामेधे'—"न दधिपयआदीनि"—'उपदशाः' 'वदनजिह्वाः'—"अधिकरणैतावत्त्वे च'—ग्राम्ये ग्राम्यविषये यदि दश, ईशभणने परमेशगुणकथने 'तुण्डोष्ठं' न 'उपदशम्'—"विभाषा समीपे"—ऐत् प्राप्नवत्। ग्राम्यविषये नवानां जनानां दश दश सुखानि भवन्ति न तथा परमेशगुणकथने इति खेदः। शिखरिणीवृत्तमेतत्—तल्लक्षणं यथा—"रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणी।"

इति समाहारेतरेतरयोर्विषयविभागार्थं
प्रकरणम् ।

---

* हरिणीवृत्तम् ।

(ग) अधिकरणैतावत्त्वे च [द्वौ करनखौ दश पुंनर्दन्तौष्ठाः]।

अधिकरणैतावत्त्वे [गम्यमाने] द्वन्द्वः न एकवत् (२।४।१५)।

(घ) [बालौपदशं दन्तौष्ठं भो] विभाषा समीप [इष्यतेऽत्र]।

अधिकरणैतावत्त्वस्य समीपे विभाषा द्वन्द्वः एकवत् (२।४।१६)।

इति समाहारेतरेतरयोगयोर्विषयविभागार्थं
प्रकरणम् ।

---

३००। पाणिपादमभवत् पटुकर्म्मा-
सीदमुष्य ननु पञ्चगवञ्च।
तूर्णमाप्त इह चेद्धनराशिः
शान्तिरस्य तु हृता खलु तेन ॥

(क) [पाणिपादं शिरोग्रीवं] स नपुंसक[मुत्तम] ।

स [एकवद्भावः द्वन्द्वः द्विगुश्च] नपुंसकम् (२।४।१७)।

---

३००। पाणिपादमिति। अमुष्य जनस्य 'पाणिपादं' पटुकर्म्म अभवत्, ननु ''पञ्चगवं' च—"स नपुंसकम्"—आसीत्। अमुना चेत् यदि तूर्णं धनराशिः आप्तः, तेन धनराशिना अस्य तु शान्तिः हृता। कर्म्मपटुत्वं यदि जना जनहितसाधनायानियोज्य स्वार्थप्रेरिता धनसञ्चये नियुञ्जते तूर्णं शान्तिशून्या भवन्ति। स्वागतावृत्तमिदम्, तल्लक्षणं यथा, "स्वागता र-न-भ-गैर्गुरुणा च।"

२०१ । सा शोभते दशरथी दशखट्वस्याथ दशशालम् ।
दशभर्म्मं च दशतक्षी दशपात्रमकिञ्चने त्रिभुवनन्तु ॥

अकारान्तोत्तरपदो द्विगुः स्त्रियां वाऽऽबन्त इति वक्तव्यम् । * ।

अनो नलोपश्च वा च स्त्रियामिति वक्तव्यम् । * ।

पात्रादिभ्यः प्रतिषेधो वक्तव्यः । * ।

२०२ । अधिस्त्रि त्वं मातृभावं नित्यं हृदि विभावय ।
उन्मत्तगङ्गं देशोऽयं गङ्गावेगविभावनात् ॥

(क) [लोहितगङ्गमत्राङ्गा]ऽव्ययीभावस्य [बालक] ।

अव्ययीभावश्च नपुंसकम् (२।४।१८) ।

२०३ । पुण्याहं सुदिनाहं हरिगुणभणनेन त्रिपथमत्र ।
विपथं परिहर नित्यं मुक्तौ ते यद्यभिलाषोऽस्ति ॥

पुण्यसुदिनाभ्यामह्नो नपुंसकत्वं वक्तव्यम् ।* ।

---

२०१ । सेति । अस्य जनस्य सा 'दशरथी' 'दशखट्वी' अथ 'दशशालम्'—"अकारान्तोत्तरपदो द्विगुः स्त्रियां वाऽऽबन्त इति वक्तव्यम् ।* ।"—'दशभर्म्मं' 'दशतक्षी' च—"अनो नलोपश्च वा च स्त्रियामिति वक्तव्यम् । * ।"—'दशपात्रम्'—"पात्रादिभ्यः प्रतिषेधो वक्तव्यः । * ।"—शोभते, अकिञ्चने तु त्रिभुवनम् अस्तीति शेषः । "अनन्तं बत मे वित्तं यस्य मे नास्ति किञ्चने"ति न्यायात् ।

२०२ । अधिस्त्रीति । त्वं नित्यं हृदि 'अधिस्त्रि' मातृभावं विभावय । 'उन्मत्तगङ्गं'—"अव्ययीभावश्च"—नाम अयं देशः गङ्गावेगविभावनात् । तत्रत्यगङ्गावेगदर्शनात् तादृशं नामधेयमित्यनुमानम् ।

२०३ । पुण्याहमिति । 'पुण्याहं' 'सुदिनाहं'—"पुण्यसुदिनाभ्यामह्नो नपुंसकत्वं वक्तव्यम् । * ।"—हरिगुणभणनेन । नात्र 'त्रिपथम्' त्रयाणां पन्थाः, त्रयाणां त्रिविधः पन्थाः इति भावः, 'विपथं'—"पथः संख्याव्ययादेरिति वक्तव्यम् । * ।"—विरूपं पन्थानं 'नित्यं'—"क्रियाविशेषणानाञ्च क्लीवतेष्यते"—परिहर, यदि मुक्तौ ते अभिलाषः अस्ति ।

पथः संख्याव्ययादेरिति वक्तव्यम्। *।

क्रियाविशेषणानाञ्च क्लीवतेष्यते। *।

३०४। सेव्यं सौषमिकन्यमत्र किमु वा वैराग्यचिज्ञाय नो
वेदोपज्ञमहो किमत्र निखिलो धर्म्मो हृदि प्रेरणाम्।
नापेक्ष्यैतदुपक्रमं नु विविधो वेदागमः सेव्यतां
सेक्षुच्छायमपास्य बोधिविटपिच्छाया यथा ह्यध्वगैः॥

(क) तत्पुरुषोऽनञ् कर्म्मधारयो[भवतीत्येतदधिकृतं वेद्यम्]।

अनञ् कर्म्मधारयः तत्पुरुषः नपुंसकम् [इत्यधिकारः] (२।४।१९)।

(ख) [सौषमिकन्यं स्यात्] संज्ञायां कन्योशीनरेषु।

संज्ञायां कन्या उशीनरेषु तत्पुरुषोनपुंसकम् (२।४।२०)।

---

३०४। सेव्यमिति। वैराग्यचिज्ञाय किमु अत्र नः अस्माकं 'सौषमिकन्यं'—"संज्ञायां कन्योशीनरेषु"—सुषमस्यापत्यानि सौषमयः तेषां कन्या सौषमिकन्यं उशीनरदेशोत्पन्ना कन्या सेव्यम्? कन्यादिधारणं विफलमिति भावः। हृदि प्रेरणाम् न अपेक्ष्य किमत्र अहो निखिलः धर्म्मः 'वेदोपज्ञम्' वेदेन आदौ उपज्ञायते। "वेदोऽखिलो धर्म्ममूलम्" इति हृष्टा भ्रान्तिबुद्धिः, "तेने ब्रह्म हृदा य आदिकवये" इत्यादिषु तु तत्त्वम्। 'एतदुपक्रमं'—"उपज्ञोपक्रमं तदाद्याचिख्यासायाम्"—एतया प्रेरणया आदौ उपक्रम्यते; एतदुपक्रमं विविधः वेदागमः नु? सा प्रेरणा सेव्यताम्। एतेन प्रेरणाधीनः सन् तानपि सेवत इति ध्वन्यते। 'इक्षुच्छायम्'—"छाया बाहुल्ये"—इक्षूणां छायाम् अपास्य यथा अध्वगैः बोधिविटपिच्छाया वटवृक्षस्य छाया सेव्यते। बहूनागमान् परित्यज्य एका प्रेरणाश्रयणीया यथा बहूनामिक्षूणां छायां परिहाय एकस्य वटवृक्षस्य छायाश्रयणे न पथिकस्य कृतार्थता। शार्दूलविक्रीड़ितम् वृत्तम्—"सूर्य्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीड़ितम्।"

(ग) [बालो]पज्ञोपक्रमं तदाद्याचिख्यासाया[म्गुपज्ञं] ।

उपज्ञोपक्रमं तत्पुरुषो नपुंसकम् तदाद्याचिख्यासायाम् (२।४।२१) ।

(घ) छाया बाहुल्ये[ऽत्र शलभच्छायं यथा बाल] ।

बाहुल्ये [गम्यमाने] छाया नपुंसकं तत्पुरुषः (२।४।२२) ।

२०५ । नरपतिसभं न्यायैर्हीनं पिशाचसभं ननु
परिकरसभं त्यक्तप्रेम प्रमाथि न शोभते ।
अरिसभमिदं राज्ञां तच्छत्रुसेनमिवाप्रियं
त्यज यवसुरां चित्ताच्छायञ्च मृत्युसहायकम् ॥
तां निशां श्वनिशां मन्ये गता या पापचिन्तया ।
विकर्म्मणः सा श्वनिशं गोशालमस्य यद्गृहम् ॥

(क) [स्याद्वाल] सभा राजामनुष्यपूर्व्वा [पिशाचसभमेतत्] ।

राजामनुष्यपूर्व्वा सभा तत्पुरुषो नपुंसकम् (२।४।२३) ।

(ख) अशाला च [दासीसभं तद्विशङ्कम्] ।

अशाला च सभा तत्पुरुषो नपुंसकम् (२।४।२४) ।

(ग) विभाषा सेनासुराच्छायाशालानिशानां[यवसुरं भोः] ।

सेना-सुरा-छाया-शाला निशानां विभाषा तत्पुरुषो नपुंसकम् (२।४।२५) ।

---

२०५ । नरपतीति । न्यायैः हीनं 'नरपतिसभं' ननु 'पिशाचसभम्'—"सभा राजामनुष्यपूर्व्वा"—'परिकरसभं' परिवारसमूहः चेत् यदि त्यक्तप्रेम प्रमाथि न शोभते, केवलं न शोभत इति न, इदं परिकरसभम् 'अरिसभम्'—"अशाला च"—किमिव ? राज्ञा अप्रियम् तत् 'शत्रुसेनम्' इव । 'यवसुरां' मृत्युसहायकं चित्ताच्छायं च त्यज ।

तामिति । या निशा पापचिन्तया गता तां निशां 'श्वनिशां' मन्ये । कथमेवं मन्यसे ? सा विकर्म्मणः दुष्कर्मवशात् 'श्वनिशम्' । अस्य दुष्कर्मशीलस्य यत् गृहं तत् गोशालम्'—"विभाषा सेनासुराच्छायाशालानिशानाम् ।"

२०६। मयूरीकुक्कुटौ भक्ष्यौ श्वेताङ्गानामहो समम्।
अर्द्धकोषातकी श्रेष्ठा तस्मात् पापकरी न यत्॥

(क) [कल्याण भवति] परवल्लिङ्गं द्वन्द्वतत्पुरुषयो[रर्द्धजया]।

द्वन्द्वतत्पुरुषयोः लिङ्गं परवत् (२।४।२६)।

२०७। पञ्चकपालो भातु ग्रन्थे प्राप्तेच्छ्वापन्नफलो यत्।
अलंजीविको विभवोऽस्य पुनर्निर्वाराणसिरेतु पुण्याय॥

द्विगुप्राप्तापन्नालं पूर्व्वगतिसमासेषु प्रतिषेधो वक्तव्यः। *।

२०८। पश्वाश्ववडवांस्तस्य न सुखाय द्व्यहस्त्र्यहः।
अहोरात्रः पराह्णो वा तैः सुखेन न गच्छति॥

(क) पूर्व्ववदश्ववडवौ [सुमतेऽश्ववडवैर्वाश्ववडवांस्तथा तान्]।

अश्ववडवयोः लिङ्गं पूर्व्ववत् (२।४।२७)।

---

२०६। मयूरीति। अहो श्वेताङ्गानां पाश्चात्यानां 'मयूरीकुक्कुटौ' समं भक्ष्यौ। तस्मादभक्ष्यभक्षणात् 'अर्द्धकोषातकी'—"परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः"—श्रेष्ठा, यत् यस्मात् न पापकरी।

२०७। पञ्चेति। 'पञ्चकपालः' ग्रन्थे भातु, न त्वनुष्ठाने, कथम्? यत् यस्मात् 'प्राप्तेच्छः' प्राप्तः इच्छां तत्त्वदर्शनं प्राप्तेच्छः; 'आपन्नफलः'च, ब्रह्मतत्त्वलाभाद्धि सर्व्वं संफलम्। अस्य जनस्य विभवः पुनः 'अलंजीविकः' जीविकायै अलम्, सुतरां 'निर्व्वाराणसिः'—"द्विगुप्राप्तापन्नालंपूर्व्वगतिसमासेषु प्रतिषेधो वक्तव्यः। *।"—वाराणस्याः निष्क्रान्तः पुण्याय एतु आगच्छतु तत्रेति शेषः। जीविकार्थी वाराणसीं गच्छति, तन्न शोभनम्, यदि सत्सङ्गेन पुण्यसञ्चयस्तस्य लक्ष्यं गमनं कर्त्तव्यमेव।

२०८। पश्वेति। 'अश्ववडवान्'—"पूर्व्ववदश्ववडवौ"—पश्व न सुखाय। 'द्व्यहः' 'त्र्यहः' 'अहोरात्रः' 'पराह्णः' वा—"रात्राह्नाहाः पुंसि"—तैः सुखेन न गच्छति।

(ख) रात्राह्नाहाः पुंसि [पूर्व्वाह्णेऽयं यथा बाल ] ।

रात्राह्नाहाः पुंसि [भाष्यन्ते] (२।४।२९) ।

३०९ । अभीक्ष्णमपथं गच्छन् तमो विशति सच्छ्रयम् ।
गृहं श्रय गृहान् हित्वा देशांस्तानपथान् यथा ॥

(क) अपथं नपुंसकं [स्यादपथानि स गाहतेऽतिसंमूढ़ः]।

अपथं नपुंसकम् (२।४।३०) ।

(ख) अर्द्धर्चाः पुंसि चा[ऽर्द्धर्चौऽर्द्धर्चं वेणुश्च वेणु च] ।

अर्द्धर्चादयः पुंसि नपुंसके च (२।४।३१) ।

इति समाप्तो लिङ्गविनिर्णयः ।

इति दृष्टान्तसर्व्वस्वे दृष्टान्तानुगमने समासे एकवद्भाव-
लिङ्गविनिर्णयो नाम द्वितीयं प्रकरणम् ।

——०——

---

द्विरात्रः द्विरात्र इति यद्यपि वृत्तिग्रन्थे व्याकरणान्तरेऽपि पुंलिङ्गान्तो दृश्यते तथापि "संख्यापूर्व्वा रात्रिः" इति लिङ्गानुशासनसूत्रस्य पुंस्त्वापवादत्वेन गृहीत्वा क्लीवे स्यादिति व्याख्यानात् न पुंस्त्वे परिगृहीतः ।

३०९ । अभीक्ष्णमिति । अभीक्ष्णम् 'अपथं'—"अपथं नपुंसकम्"—गच्छन् तमो विशति । यथा अपथान् देशान् तथा 'गृहान्' असत्कलुषितान् हित्वा सच्छ्रयं साध्वाश्रयं 'गृहं'—"अर्द्धर्चाः पुंसि च"—श्रय ।

इति समाप्ता द्वितीयप्रकरणव्याख्या ।

——

२१० । शूद्रस्य तु विप्रो नित्यं वरणीयः ।
चेत्ते पुनरत्र युक्ताः खलु सन्तु ॥

(क) जात्याख्यायामेकस्मिन् बहु-
वचनमन्यतरस्यां [कल्याण] ।

जात्याख्यायाम् एकस्मिन् [वचने प्राप्ते] अन्यतरस्यां बहुवचनम् (१।२।५८) ।

२११ । एको हि यथा व्रीहिः सम्पन्नः कुरुते सुभक्ष्यम् ।
एकः खलु परमेष्ठे निविष्टचित्तः पराभवति निखिलम् ॥

संख्याप्रयोगे प्रतिषेधो वक्तव्यः । * ।

२१२ । अहं ब्रवीमि नित्यशो न जातु नो हृदि स्पृहा ।
कुकाव्यवाक्यसञ्चये भणाम सोऽस्तु नावयोः ॥

---

२१० । शूद्रस्येति । चेत् यदि नित्यं 'विप्रः' 'शूद्रस्य' वरणीयः, 'ते' विप्राः—"जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्"—पुनः अत्र खलु युक्ताः योगसम्पन्नाः सन्तु भवन्तु । विप्राणां योगयुक्तत्वाद्धि सम्मानः । वृत्तमेतत् तनुमध्या—"त्यौ चेत्तनुमध्या ।"

२११ । एक इति । 'एकः' हि 'व्रीहिः'—"संख्याप्रयोगे प्रतिषेधो वक्तव्यः ।*।"—सम्पन्नः यथा सुभक्ष्यं कुरुते, तथा एकः परमेष्ठे निविष्टचित्तः जनः खलु निखिलं पराभवति । सर्व्वोपरि साम्राज्यं करोति ।

२१२ । अहमिति । नित्यशः 'अहं ब्रवीमि' न जातु 'नः' अस्माकं हृदि कुकाव्यवाक्यसञ्चये स्पृहा अस्तु । भणाम 'वयम्' इति शेषः 'आवयोः'—"अस्मदो द्वयोश्च"—स कुकाव्यवाक्यसञ्चयः न अस्तु, न तत्र स्पृहा न तत्कर्त्तृकत्वमिति पूर्व्वापरभेदः । प्रमाणिका नाम वृत्तम्—"प्रमाणिका जरौ लगौ ।"

(क) [स्यात्] अस्मदो द्वयोश्चा[हं ब्रवीमि ब्रूम एव वा]।

अस्मदः एकस्मिन् द्वयोः च बहुवचनम् अन्यतरस्याम् (१।२।५९)।

२१३। त्वं मे मान्यो नित्यं भगवति खलु ते निष्ठा जाता।
नाहं सम्पन्नोऽत्र भक्ता यूयं भवत सहायाः॥

अस्मदः सविशेषणस्य प्रतिषेधो वक्तव्यः।*।

२१४। नक्षत्राणां स्थानगताच्चेदिह भेदा-
द्भेदो भाग्यस्यापरमार्थो ननु यत्नः।
द्वे ते फल्गुन्यौ नितरां प्रोष्ठपदाश्च
पुष्यादित्यौ भान्ति यथाकालमनन्ते॥

(क) [पूर्व्वे फल्गुन्यौ हि] फल्गुनी-
प्रोष्ठपदानाञ्च नक्षत्रे[ऽङ्ग]।

फल्गुनीप्रोष्ठपदानाञ्च नक्षत्रे द्वयोः बहुवचनम् अन्यतरस्याम् (१।२।६०)।

(ख) तिष्यपुनर्व्वस्वोर्नक्षत्रद्वन्द्वे
बहुवचनस्य द्विवचनं नित्यं [बाल]।

तिष्य-पुनर्व्वस्वोः नक्षत्रद्वन्द्वे बहुवचनस्य नित्यं द्विवचनम् (१।२।६३)।

---

२१३। त्वमिति। 'त्वं' मे नित्यं मान्यः। कथम्? भगवति ते तव खलु निष्ठा जाता। न 'अहम्' अत्र सम्पन्नः; 'यूयं'—"अस्मदः सविशेषणस्य प्रतिषेधो वक्तव्यः।*।"—भक्ताः सहायाः भवत।

२१४। नक्षत्राणामिति। चेत् यदि इह नक्षत्राणां स्थानगतात् भेदात् भाग्यस्य भेदः, ननु यत्नः पुरुषार्थः अपरमार्थः याथार्थ्यविरहितः। यत्नो विफल इति भावः। परमार्थमाह—यथाकालम् अनन्ते काले द्वे ते 'फल्गुन्यौ' 'प्रोष्ठपदाश्च'—"फल्गुनीप्रोष्ठ-

२१५। वेष्टन्ते नगरं सुरक्षणविधौ वप्रा न रक्षा ततो
गार्ग्यौ क्वच गतौ चलौ पुनरिमौ वात्स्यौ तथा ब्राह्मणौ।
लब्ध्वाऽसंपतितौ न सम्प्रतियुतौ पुत्रौ सदा भ्रातरौ
स्निग्धौ मोदयते विधुः सरसिजं हंसी च शुक्लानि यत्॥

(क) सरूपाणामेकशेष एकविभक्तौ च [बालक]।

सरूपाणाम् एकविभक्तौ एकशेषः (१।२।६४)।

विरूपाणामपि समानार्थानाम्। *।

(ख) वृद्धो यूना तल्लक्षणश्चेदेव विशेषः [स्मृतः]।

यूना [सहवचने] वृद्धः शिष्यते तल्लक्षणः [वृद्धयूनोर्निर्देशः] चेत् एव विशेषः (१।२।६५)।

---

पदानाञ्च नक्षत्रे"—'पुष्यादित्यौ'—"तिष्यपुनर्व्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम्"—पुष्यपुनर्व्वसू "पुनर्व्वसू तु यामकौ। आदित्यौ च" इति हेमचन्द्रः। एतानि नितरां भान्ति। फल्गुन्यादिकान्युक्तान्युपलक्षणानि सर्व्वाणि नक्षत्राणि कालवशादुद्यन्ति चास्तं गच्छन्ति। वृत्तमेतन्मत्तमयूरो नाम—"वेदैरन्ध्रैर्म्तौ यसगा मत्तमयूरः।"

२१५। वेष्टन्त इति। सुरक्षणविधौ 'वप्राः'—"सरूपाणामेकशेष एकविभक्तौ" ("विरूपाणामपि समानार्थानाम्। *।")—नगरं वेष्टन्ते, न ततः रक्षा। 'गार्ग्यौ'—"वृद्धो यूना तल्लक्षणश्चेदेव विशेषः"—गार्ग्यश्च गार्ग्यायणश्च क्वच गतौ न तौ सम्प्रति विद्येते, इमौ पुनः 'वात्स्यौ'—"स्त्री पुंवच्च"—वात्सी च वात्स्यायनश्च चलौ अस्थायित्वात्, तथा 'ब्राह्मणौ'—"पुमान् स्त्रिया"—ब्राह्मणश्च ब्राह्मणी च लब्ध्वात् योगधर्म्मात् सम्पतितौ न सम्प्रतियुतौ सम्मानयुक्तौ। 'पुत्रौ' पुत्रश्च दुहिता च 'भ्रातरौ' भ्राता च स्वसा च—"भ्रातृपुत्रौ स्वसृदुहितृभ्याम्"—स्निग्धौ प्रीतिभाजने। विधुः सरसिजं हंसी च प्रत्येकं मोदयते, यत् यस्मात् 'शुक्लानि'—"नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्"—शुक्लश्च शुक्ला च शुक्लञ्च तानीमानि शुक्लानि।

(ग) स्त्री पुंवच्च [यथा गार्ग्यौ] ;—

स्त्री वृद्धा यूना [सहवचने] शिष्यते तल्लक्षणश्चेदेव विशेषः पुंवच्च (१।२।६६)।

(घ) [कुक्कुटौ तौ] पुमान् स्त्रिया।

स्त्रिया [सहवचने] पुमान् शिष्यते स्त्रीपुंसलक्षणश्चेदेव विशेषः (१।२।६७)।

(ङ) भ्रातृपुत्रौ स्वसृदुहितृभ्यां [तौ भ्रातरौ यथा]।

स्वसृदुहितृभ्यां [सहवचने] भ्रातृपुत्रौ शिष्येते (१।२।६८)।

(च) [स्यान्] नपुंसकमनपुंसकेनै-
कवच्चास्यान्यतरस्या[मह्नो]।

अनपुंसकेन [सहवचने] नपुंसकं शिष्यते एकवच्च अस्य [कार्य्यं] अन्यतरस्यां नपुंसकानपुंसकलक्षणश्चेद्विशेषः (१।२।६९)।

२१६। पितरौ निखिलेषु सम्मतौ
क्व नु मातापितरौ विमानितौ।
श्वशुरौ च समौ समं स च
श्वशुरश्चात्र न तौ समादृतौ॥

(क) [पितरौ मातापितरौ] पिता मात्रा[वशेषभाक्]।

मात्रा [सहवचने] पिता शिष्यते अन्यतरस्याम् (१।२।७०)।

---

२१६। पितराविति। निखिलेषु 'पितरौ'—"पिता मात्रा"—माता च पिता च सम्मतौ। क्व नु 'मातापितरौ' विमानितौ। 'श्वशुरौ' च—"श्वशुरः श्वश्र्वा"—श्वशुरश्च श्वश्रूश्च समौ पितृमातृतुल्यौ। स च श्वशुरश्च अत्र 'तौ'—"त्यदादीनि सर्व्वं नित्यम्"—पिता श्वशुरश्च न समं समादृतौ।

(ख) [श्वशुरौ] श्वशुरः श्वश्रूा [श्वश्रूश्वशुरावेव वा] ।

श्वश्र्वा [सहवचने] श्वशुरः शिष्यते अन्यतरस्याम् (१।२।७१) ।

(ग) [बाल] त्यदादीनि सर्वैर्नित्यं [स बालकश्च तौ] ।

सर्वैः [सहवचने] त्यदादीनि नित्यं शिष्यन्ते (१।२।७२) ।

३१७ । कुरुतः स च यश्चांहो यौ निन्द्यौ ननु तौ चितौ तु ।
भारौ सा स च वन्द्यौ तौ चेत् पुण्यकृतौ तच्च ना ॥
नारी च तानि नित्यं समाहृतानि नरनार्यौ ते ।
नन्दत इह तेनाङ्ग ते कफजे खलु गदेऽर्द्धपिप्पल्यौ ॥

त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते ।

पूर्व्वशेषोऽपि दृश्यते ।

त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानि । * ।

पुंनपुंसकयोस्तु परत्वान्नपुंसकं शिष्यते ।

अद्वन्द्वतत्पुरुषविशेषणानामिति वक्तव्यम् । * ।

---

३१७ । स चेति । 'स च यश्च' अंहः पापं कुरुतः 'यौ'—"त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते"—निन्द्यौ ननु 'तौ'—"पूर्व्वशेषोऽपि दृश्यते"—चितौ तु भारौ, 'सा स च' वन्द्यौ चेत् 'तौ'—"त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानि ।*।"—पुण्यकृतौ । 'तच्च' पुण्यं 'ना' मनुष्यः नारी च 'तानि'—"पुंनपुंसकयोश्च परत्वान्नपुंसकं शिष्यते ।"—नित्यं समाहृतानि । नरनार्यौ 'ते' इह तेन पुण्येन अङ्ग हे बाल नन्दतः । कफजे गदे ते 'अर्द्धपिप्पल्यौ'—"अद्वन्द्वतत्पुरुषविशेषणानामिति वक्तव्यम् । * ।"

३१८। इमा गावश्चरन्तीह गोपालान् मोदयन्ति च ।
पयोभिर्वर्द्धयन्त्यन्यान् स्वस्था वत्सा भवन्त्विमे ॥

(क) [स्याद्] ग्राम्यपशुसंघेष्वतरुणेषु स्त्री [मा अजाः] ।
अतरुणेषु ग्राम्यपशुसंघेषु स्त्री शिष्यते (१।२।७३)।

३१९। धावन्तीमे वाहा रिपवस्तानभिभूय नितराम् ।
अदान्तांस्तान्नित्यं संयच्छ यदि शान्तौ स्पृहास्ति ॥

अनेकशफेष्विति वक्तव्यम् । * ।

इति दृष्टान्तसर्व्वस्वे दृष्टान्तानुगमने वचनवैशिष्ट्यैक-
शेषनिरूपणं नाम तृतीयं प्रकरणम् ।

---

३१८। इमा इति। 'इमाः गावः'—"ग्राम्यपशुसंघेष्वतरुणेषु स्त्री"—इह गोष्ठे चरन्ति गोपालान् मोदयन्ति च। अन्यान् इतरान् जनान् पयोभिः वर्द्धयन्ति, 'इमे वत्साः' स्वस्थाः भवन्तु। अर्थग्टध्नुगोपालकैर्वञ्चिताः पयःपानाभावात् चीणकाया अथवा पिशाचसदृशहन्तृकरे निक्षिप्ता न भवन्तु ।

३१९। धावन्तीति। 'इमे वाहाः'—"अनेकशफेष्विति वक्तव्यम् । * ।"—धावन्ति, तान्, वाहान् अभिभूय नितरां रिपवः धावन्तीति शेषः। यदि शान्तौ स्पृहा अस्ति अदान्तान् तान् रिपून् संयच्छ ।

इति दृष्टान्तव्याख्यायां समासे तृतीयं प्रकरणम् ।

---

द्विर्वचनमनुस्वारस्यैव प्राप्नोति। तत्र परस्य परसवर्णे कृते तस्य यय्ग्रहणेन ग्रहणात् पूर्वस्यापि परसवर्णो यथा स्यात्। वक्ष्यमाणेन "द्विर्वचने परसवर्णत्वं सिद्धं वक्तव्य"-मित्यनेन द्विर्वचने कर्त्तव्ये परसवर्णस्य सिद्धत्वात् नैतदस्ति प्रयोजनम्। एवं परसवर्णे सिद्धे यर्ग्रहणेन ग्रहणाद्विर्वचनं यथा स्यात्। मा भूत् द्विर्वचनम्। द्विर्वचने कृते त्रियकारकमन्यथा द्वियकारकं भवतीति भेदो द्विर्वचने। सत्यपि द्विर्वचने "हलो यमां यमि लोपः" (८।४।६४) इत्यनेन एकस्य लोपे द्वियकारकमेव तिष्ठतीति नास्ति भेदः। द्विर्वचने सति कदाचित्त्रियकारकं कदाचित् द्वियकारकम्, असति द्विर्वचने केवलं द्वियकारकमेव। "हलो यमां यमी"त्यत्र यदि लोपो नित्यः स्यात् तदा द्वियकारकमेव तिष्ठेत् द्विर्वचने भेदो न स्यात्। लोपस्तु विभाषा। विभाषानुवृत्त्यग्रहणेन भेदाभावसाधनन्त्वसम्भवम्, यतः

## ६। अनुवर्त्तते विभाषा शरोऽचि यद्वारयत्ययं द्वित्वम्।

"शरोऽचि" (८।४।४९) इति द्वित्ववारणेन ज्ञाप्यते "हलो यमां यमि लोप" इत्यत्रानुवर्त्तते विभाषा। अन्यथा,

## ७। नित्ये हि तस्य लोपे प्रतिषेधार्थो न कश्चित् स्यात्।

---

तत्र परस्येति। 'सँय्यन्ता' 'सँव्वत्सरः' 'यँल्लोक'मित्यत्र परसवर्णे पूर्व्ववर्त्तिनः सानुनासिकयवलाः द्वित्वभूतमनुस्वारं प्राप्य ययन्तर्भूतत्वात् "अनुस्वारस्य ययि परसवर्ण" इत्यनेन परसवर्णत्वे यवलानां त्रिकस्य श्रवणं भवति।

ज्ञाप्यत इति। "झरो झरि सवर्णे" (८।४।६५) इत्यत्र लोपे विभाषानुवर्त्तते। "झयो होऽन्यतरस्याम्" (८।४।६२) इत्यतोऽनुवर्त्तमाना विभाषा "झरो झरी"त्यत्रानुवर्त्तनात् मध्यस्थे "हलो यमां यमी"त्यत्राप्यनुवर्त्तते इति ज्ञापको न्यासः।

यदि लोपो नित्यः स्यात् प्रतिषेधवचनमनर्थकं स्यात् । यत् कर्षतीत्यत्र द्विर्वचने सति "झरो झरि सवर्णे" (८।४।६५) इति लोपो भविष्यति । विभाषायं लोप इति पश्यन् "शरोऽचीति" द्विर्वचनप्रतिषेधं शास्त्राचार्यः ।

नैतज्ज्ञापकम् । कथम् ? "हलो यमां यमि" "झरो झरी"त्यत्र यमा झरा च यर् सामर्थ्येण परिगृह्यते । "अचो रहाभ्याम्" (८।४।४६) इत्यनेन यद्विर्वचनम्, लोपापवादः सः, अन्यथा द्विर्वचनमनर्थकं स्यात् । सुतरां "हलो यमां यमि" "झरो झरी"ति सूत्रद्वये वर्त्तमानेऽपि 'शरोऽचो'ति प्रतिषेधोऽवश्यं वक्तव्यः । किन्तर्हि योगयोस्तयो-रुदाहरणम् ? 'प्रत्तम्' 'अवत्तम्' 'आदित्यः' इति द्विर्वचनेऽकृतेऽपि यत् त्रिव्यञ्जन-
:

---

यदि लोप इति । "शरोऽची"त्यत्र "अचो रहाभ्यां द्वे" (८।४।४६) इति प्राप्तिः प्रतिषिध्यते । लोपे नित्ये सति "शरोऽचो"ति सूत्रकरणं विफलम् । यतः "अचो रहाभ्या"मित्यनेन यरो द्वे भवत इत्यत्र यमा झरा च यर् । सुतरां "हलो यमां यमि" "झरो झरी"ति लोपकथने यरो द्वित्वनिवृत्तिः स्यात्, किमनेन "शरोऽचो"ति सूत्रेण ।

लोपापवाद इति । "अचोर हाभ्याम्" इति सूत्रं पूर्व्वमुक्तम् । तेन द्विर्वचने कृते पश्चात् "हलो यमां यमि" "झरो झरी"ति सूत्रद्वयेन तद्विघटितं स्यात् । सुतरां लोपापवादः स इत्युक्तम् ।

किन्तर्हीति । लोपसाधकयोस्तयोः "हलो यमां यमि" "झरो झरी"ति योगयो-रुदाहरणं किमिति जिज्ञासा ।

प्रत्तमिति । "अच उपसर्गात्तः" (७।४।४७) इत्यनेन अजन्तादुपसर्गात् दा इत्येतस्य घुसंज्ञकस्य तः । 'आदित्यः' इत्यत्र आदित्यो देवता अस्य स्थालिपाकस्येति आदित्यः अथवा भवाद्यर्थण्यन्तात् ण्यः । तत्र एकस्य यकारस्य नित्यलोपे 'आदित्यः' । प्रत्तमित्य-त्रापि त्रिव्यञ्जनसंयोगः, यतः उपसर्गादिति पञ्चमीनिर्द्देशात् आदेरलः दस्य स्थाने एकस्तकारः, सूत्रस्यास्य च इति अच्पदस्यावर्त्तनात् अचः इति षष्ठीप्राप्तौ आकारस्य स्थाने तकारः, ततः प्रत्ययस्य क्तस्य च तकारेण त्रिव्यञ्जनसंयोगः । सुतरां सिद्धमकृतेऽपि द्विर्वचने त्रिव्यञ्जनसंयोग इति ।

संयोगः । 'कर्त्ता' 'हर्त्तें'त्यत्र तु द्विर्व्वचनसामर्थ्याल्लोपो न भवति । यथा च द्विर्व्वचनसामर्थ्याल्लोपो न भवति, तथा 'कर्यंति' 'वर्षती'त्यत्रापि । सुतरां लोपे नित्येऽपि "झरोऽची"ति स प्रतिषेधो वक्तव्यः । एवं विभाषानुवर्त्तनमत्यन्तं सन्दिग्धम् ।

—०:०—

## लण् । ६ ।

भ० वृ० । ल इत्येकं वर्णमुपदिश्य पूर्व्वांश्चान्ते णकारमितं करोति प्रत्याहारार्थम् । तस्य ग्रहणं भवति त्रिभिः । "अणुदित्सवर्णस्य चाप्रत्ययः" (१।१।६९) इत्यकारेण, "इण्कोः" (८।३।५७) इतीकारेण, "इको यणचि" (६।१।७७) इति यकारेण । इण्ग्रहणानि सर्व्वाणि परेण णकारेण अण्ग्रहणानि तु पूर्व्वेण । "अणुदित्सवर्णस्य चाप्रत्ययः" इत्येतदेकमनेन । अथ किमर्थमज्ग्रहणमेवैतन्न क्रियते ? नैवं शक्यम् । अन्तःस्थानामपि हि सवर्णानां ग्रहणमिष्यते। 'सँय्यन्ता' 'सँव्वत्सरः' 'यँल्लोकम्' 'तँल्लोकम्' इत्यत्रानुस्वारस्यानुनासिके ययि परसवर्णे कृते तस्य यर्ग्रहणेन ग्रहणाद्द्विर्व्वचनं यथा स्यादिति ।

---

सन्दिग्धमिति । ज्ञापकबलेन याऽनुवृत्तिः साधिता, सा पश्चादुक्तया युक्त्या खण्डिता, सुतरामुक्तं "विभाषानुवर्त्तनमत्यन्तं सन्दिग्ध"मिति । लण्-सूत्रे "विभाषा सलोप" इत्युक्तेः "त्रिव्यञ्जनसंयोगश्रवणाय अणुदिदिति णकारेण प्रत्याहारः कृतो न चकारेणेति स्थितम् ।"

—

ह्कारादिष्वकार उच्चारणार्थो नानुबन्धः। लकारे त्वनुनासिकः प्रतिज्ञायते। तेन "उरण् रपरः" (१।१।५१) इत्यत्र प्रत्याहार-ग्रहणाल्लपरत्वमपि भवति।

भा. स. लण् इत्यत्र णकारो द्विरनुबध्यते, पूर्व्वश्चैव परश्च। तत्र अण्ग्रहणे-ष्विण्ग्रहणेषु च सन्देहो भवति पूर्व्वेण वा स्युः परेण वेति। कतमस्मिंस्तावदण्ग्रहणे सन्देहः। "ढ्रलोपे पूर्व्वस्य दीर्घोऽणः" (६।३।१११) इति। पराभावात् असन्दिग्धं पूर्व्वेण न परेण। न हि ढ्रलोपेऽणः सन्ति। ननु 'आढढ़म्' 'आढ्ढ़'मिति परेऽणः सन्ति। एवं तर्हि अण्ग्रहणसामर्थ्यात् पूर्व्वेण न परेण। यदि हि परेण स्याद् अण्-ग्रहणमनर्थकं स्यात्, ढ्रलोपे पूर्व्वस्य दीर्घोऽच इत्येव ब्रूयात्। अथवा अजित्यपि न ब्रूयात्, अचो ह्येतद्भवति ह्रस्वो दीर्घः प्लुत इति। कस्मिंस्तर्ह्यण्ग्रहणे सन्देहः "केऽणः"

---

न हि ढ्रलोप इति। वह उद्यमन इत्यस्मात् तृचि "सार्व्वधातुकार्द्धधातुकयोः" (७।३।८४) इति गुणे कदित्वादिड्भावे "हो ढः" (८।२।३१) इति ढत्वम्, "झषस्त-थोर्द्धोऽधः" (८।२।४०) इत्यनेन तकारस्य धकारः, ततः "ष्टुना ष्टुः" (८।४।४१) इत्यनेन तकारस्य ष्टुत्वम्, ष्टुत्वे "ढो ढे लोपः" (८।३।१३)। "ढ्रलोपे पूर्व्वस्य दीर्घोऽणः" (६।३।१११) इत्यनेन रेफस्य दीर्घे स्थानसाम्याद्दकारे ढलोपस्यासिद्धत्वात् "उपधायाश्च" (७।१।१०१) इत्यनेन इत्वे पूर्व्ववद्गुणे वोढेति पदसिद्धिः न तु वढेति। वढेत्यादौ गुणोऽसिद्ध अत उक्तं न हि ढ्रलोपे परेऽणः सन्तीति।

अण्ग्रहणसामर्थ्यादिति। अ इ उ ण्। ऋ ऌ क्। ए ओ ङ्। ऐ औ च्। ह य व र ट्। ल ण्। इत्यत्र अणो यदि परेण णकारेण गृह्यन्ते ह य व र इति हलां तत्र ग्रहणं भवति। हलामणामसम्भवात् अच एवावशिष्यन्ते। ततो न कश्चिद्वि-शेषः अज्ग्रहणेनैव सिद्धेः। एवं यत्राण्ग्रहणं कृतं, तत्र तद्ग्रहणसामर्थ्यात् पूर्व्वेणैव भवति, अन्यथा अज्ग्रहणमेव तत्र कुर्य्यात्।

(७।४।१३) इति। पराभावात् असन्दिग्धं पूर्व्वेण न परेण। न हि के परेऽणः सन्ति। ननु चायमस्ति, 'गोका' 'नौके'ति। एवं तर्हि अणूग्रहणसामर्थ्यात् पूर्व्वेण न परेण। यदि परेण स्यात्केऽच इत्येव ब्रूयात् अथवा तदपि न ब्रूयात्, अचो हि ह्रस्वो दीर्घः प्लुतो भवति। अस्मिन् तर्हि अणूग्रहणे सन्देहः "अणोऽप्रगृह्यस्यानुनासिक" (८।४।५७) इति। पराभावात् असन्दिग्धं पूर्व्वेण न परेण। न हि पदान्ताः परेऽणः सन्ति। ननु चायमस्ति 'कर्तृँ' 'हर्तृँ' इति। एवं तर्हि पूर्व्वोक्तयुक्त्या पूर्व्वेण न

---

न हि के पर इति। ननु 'उपानत्के'त्यत्र के परं ह्रस्वे कर्त्तव्ये "नहो ध" (८।२।३४) इत्यस्यासिद्धत्वात् अस्ति के परतोऽकारः, तथा 'गोष्के'त्यादौ "इणः षः" (८।३।३९) इत्यनेन विसर्ज्जनीयस्य षकारादेशस्यासिद्धत्वात् अस्ति के परतोरेफः। "न मु ने" (८।२।३) इत्यत्र वृत्तिकारानुसारिणा कैयटेन योगविभागं कृत्वा धत्वादीनामसिद्धत्वं निरस्य समाधानं कृतम्। भाष्ये योगविभागस्यानुक्तत्वात् "के परे" इत्युक्त्वा गोष्केत्यादि भाष्योदाहरणात् अनभिधानमेव साधितं विवरणकारेण। "ह्रस्वप्लुत्योपस्थितस्य अच" (१।२।२८) इत्यस्याबाधाय पूर्व्वेण भविष्यति, अबाधनोपपत्तौ हि बाधो न न्याय्य' इत्याह दीक्षितः। अनिष्टे विषये पूर्व्वत्रासिद्धस्य प्रतिषेधार्थे योगविभागो यद्यपि भाष्ये न दृश्यते, तथापि तत्पक्षस्य बोधसौकर्य्यत्वात् कैयटकृतसमाधानमेव वयमनुमोदयामः।

न हि पदान्ता इति। ननु रवर्ज्जितानामन्तःस्थानां सानुनासिकत्वसत्त्वे "ह्वव् करोति" इत्यत्रापि परेण प्राप्नोति। अयं हि दृष्टान्तः "हलि सर्व्वेषाम्" (८।३।२२) इत्यत्र हलूग्रहणमुत्तरार्थं कृत्वा "भो भगो" (८।३।१७) इत्यतोऽशूग्रहणम्। ततो हलि अशीति व्याख्यानात् "ह्वव् करोती"त्यत्र लोपो मा भूत्। "अणोऽप्रगृह्यस्यानुनासिकः" (८।४।५७) इत्यत्र अप्रगृह्यस्येत्यस्य पर्य्युदासेनाच एव अनुनासिका भवन्ति न तु हल इति तत्त्वम्। भाष्ये "न हि पदान्ता" इति यदुक्तं तेन सानुनासिकान्तःस्थानां न ह्रस्वत्वप्रतिपादितं किन्तु न तेषां कार्य्यभाक्त्वमिति सूचितम्। ह्वं ह्वयतीति ह्वविट् तमाचष्टे यः स ह्ववयति। ह्ववयतेर्विंचि ह्वव् इति पदं सिद्धम्।

पूर्व्वोक्तयुक्त्येति। अणूग्रहणसामर्थ्यात् पूर्व्वेण न परेण। यदि हि परेण स्यात्, अणूग्रहणमनर्थकं स्यात्. अचोऽप्रगृह्यस्यानुनासिक इत्येव ब्रूयात्, अथवाऽजित्यपि न ब्रूयात्। अच एव हि प्रगृह्या भवन्तीति युक्तिः।

परेण। अतएव हि प्रगृह्या भवन्ति। अस्मिंस्तर्हि अण्ग्रहणे सन्देहः, "उरण् रपरः" (१।१।५१)। पराभावात् असन्दिग्धं पूर्व्वेण न परेण। ननु 'कर्त्तर्थं' 'हर्त्तर्थ'मिति ऋ: स्थाने परेऽण: सन्ति। रपरत्वे रेफद्वयश्रवणप्रसङ्गः। "हलो यमां यमी"त्येकस्य रेफस्य लोपः, विभाषापचे विभाषा तच्छ्रवणम्। "रो रि" (८।३।१४) इति तस्य लोपः। न च तत्र पदान्तस्येति व्याख्यानं युक्तम्, तथा सति जर्गृधेः लङ् 'अजर्घाः', पास्पर्धेर्लङ् 'अपास्याः' इत्यादिरसिद्धिप्रसङ्गः। इह तर्हि 'मातृणां' 'पितृणा'मिति रपरत्वप्रसङ्गः।

---

कर्त्तर्थं इति। कर्तृ+अर्थः, "इको यणचि" इति इको यणि रपरत्वे "उरण् रपर" इत्यनेन रेफार्थम् अण्ग्रहणे रेफद्वयप्रसङ्गः।

विभाषापच इति। यद्यपि पूर्व्वं विभाषाग्रहणं सन्दिग्धमित्युक्तमत्र विभाषा-श्रवणमित्युक्त्या विभाषाग्रहणं स्वीकृतम्।

जर्गृधेरिति। गृधु अभिकाङ्क्षायां यङ्लुकि द्वित्वे "रुग्रिकौ च लुकि" (७।४।९१) इत्यनेन अभ्यासस्य रुक्। एवं जर्गृधेः लङः सिपि चर्करीतञ्चेत्यदादौ पाठात् "अदि-प्रभृतिभ्यः शपः" (२।४।७२) इत्यनेन शपो लुक्। "यङो वा" (७।३।९४) इत्यनेन सिप ईड्भावपचे लघूपधगुणे (७।३।८६) रपरः। "इतश्च" (३।४।१००) इति सिपः इकारलोपे अजर्गर्धस् इति स्थिते "हल्ङ्याब्भ्योदीर्घात् सुतिस्यपृक्तं हल्" (६।१।६८) इति सिपो लोपे "एकाचो बशो भष् झषन्तस्य स्ध्वोः" (८।२।३७) इत्यनेन बशः स्थाने भष्भावः, ततोऽवसानभूत (८।४।५६) धकारस्य जश्त्वम्। "दश्च" (८।२।७५) इति रुत्वम्। एवं अजर्घर् र् इति स्थिते "रो रि" (८।३।१४) इति पूर्व्वरेफस्य लोपः, "ढ्रलोपे पूर्व्वस्य दीर्घोऽणः" (६।३।१११) इति पूर्व्वस्याणो दीर्घे 'अजर्घाः' इति पदं सिद्धम्।

पस्पर्द्धेरिति। स्पर्द्ध संघर्षे। "दीर्घोऽकितः" (७।४।८३) इत्यभ्यासस्य दीर्घः। ततः सिपि पूर्व्ववत् इकारलोपः सिब्लोपे अपास्पर्ध् इति स्थिते धस्य दत्वे दस्य रुत्वे "रोरीति" पूर्व्ववर्त्तिरलोपेऽणो दीर्घत्वे 'अपास्याः' इति रूपं सिद्धम्।

"ऋत इद्धातोः" (७।१।१००) इति धातुग्रहणाज्ज्ञाप्यते 'मातॄणां' 'पितॄणा'मित्यत्र न भवति, अन्यथा धातुग्रहणमनर्थकं स्यात् । रपरत्वे कृते अन्त्यत्वात् इत्वं न भविष्यति । नात्र रपरत्वं भवतीति पश्यन् धातुग्रहणं करोत्याचार्य्यः । 'चिकीर्षति' 'जिहीर्षति' इहापि तर्हि न प्राप्नोति । उपधायाश्च (७।१।१०१) इत्येवं भविष्यति । इहापि तर्हि प्राप्नोति 'मातॄणां' पितॄणाम्' उपधाया ऋकारत्वात् । तस्माद्धातुग्रहणम् कर्त्तव्यम् । एवं तर्हि अण्ग्रहणसामर्थ्यात् पूर्व्वोक्तयुक्त्या पूर्व्वेण न परेण ।

"अणुदित् सवर्णस्य चाप्रत्ययः" (१।१।६९) इत्यत्र तर्हि अण्ग्रहणे सन्देहः । "उर्ऋत्" (७।४।७) इत्यत्र ऋकारे तपरकरणेन ज्ञापयत्याचार्य्यः सवर्णेऽण्ग्रहणं परेण न पूर्व्वेण ।

---

धातुग्रहणमिति । यदि 'मातॄणाम्' 'पितॄणाम्' इत्यत्र ऋकारे "उरण् रपरः" प्राप्तिः स्यात्, तदा "ऋत इत्" इत्येवं स्यात् धातुग्रहणमनर्थकं भवेत् । धातुग्रहणेन ज्ञापयति धातोः ऋत एव इत भवति, तत्रैव "उरण् रपरः" प्राप्तिः ।

अन्त्यत्वादिति । ऋकारे यदि 'उरण् रपरः' इत्यनेन रपरत्वं स्यात् तदा "ऋत इत्" (७।१।१००) इति ऋकारान्ताङ्गस्य इत् न सिद्ध्येत् ऋर् इति रकारान्तत्वात् ।

चिकीर्षतीति । "अज्झनगमां सनि" (६।४।१६) इत्यनेन दीर्घे रपरत्वे च सति "उपाधायश्च" तीत्वमेषितव्यम् । एवं जिहीर्षतीत्यत्र ।

इहापि तर्हीति । धातुग्रहणलिङ्गादधातोः मातॄणामित्यादेः रपरत्वं निवर्त्तितम् । एवमस्य ज्ञापकत्वचरितार्थतायां धातोस्तु रपरत्वे सति तत्र रपरत्वनिवर्त्तनज्ञापकत्वं न ।

पूर्व्वोक्तयुक्त्येति । यदि परेण स्यात् "उरञ्रपर" इत्येव ब्रूयात् सुतरां अण्ग्रहण-सामर्थ्यात् तद्ग्रहणानर्थक्यवारणाय पूर्व्वेणैव न परेणेति निष्कर्षः ।

उर्ऋदिति । कॄत संशब्दने इत्यस्मात् चुरादिण्यन्तात् लुङि चङि सिद्धमचीकृतदित्यत्र दीर्घस्यापि स्थानिन ऋकारस्य स्थाने ह्रस्व एव यथा स्यादित्येवमर्थं तपरग्रहणं कृतम् । यदि पूर्व्वेण ग्रहणं स्यात् तदा तपरग्रहणं निरर्थकं यतस्तेन स्थानिन ऋकारस्याप्राप्तिः सुतरां न तस्यादेशत्वम् । ननु भाव्यमानेन न सवर्णग्रहणमस्ति, सुतराम् "उर्ऋदि"त्यत्र भाव्यमानेन ऋकारेण सवर्णग्रहणाभावात् व्यर्थं तपरकरणेन सवर्णग्रहण-निवृत्तिः । "न चायं भाव्यमानः किन्तु आदेशान्तरनिवृत्त्यर्थं स्वरूपमेवैतदभ्यनुज्ञायते"

इण्ग्रहणेषु तर्हि सन्देहः। यत्र पूर्व्वेण ग्रहणं तत्र य्वोरित्येवं संख्याग्रहणं करोति, सुतरां तदन्यत्र परेण स्यात्। प्रत्याहारग्रहणे तिस्रो मात्राः, विभक्तिनिर्द्देशे संहृत-ग्रहणेऽर्द्धचतस्रो मात्राः, एवं गौरवेऽपि यत् संख्याग्रहणं करोति तेनैव ज्ञापयति परेण न पूर्व्वेण।

किं पुनरत्र वर्णोत्सत्ताविवार्थं णकारो द्विरुच्यते? "व्याख्यानतो विशेषप्रति-पत्ति"रिति भवति परिभाषेति ज्ञापयत्याचार्य्यः। ततो व्याख्यानं, अणुदित्सवर्णं परि-हाय पूर्व्वेणाण् ग्रहणं इण्ग्रहणं परेणेति।

—०:०—

# ञमङणनम्। ७।

म. व्र.। ञ म ङ ण न इत्येतान् वर्णानुपदिश्य पूर्व्वां-श्चान्ते मकारमितं करोति प्रत्याहारार्थम्। तस्य ग्रहणं भवति त्रिभिः। "पुमः खय्यम्परः" (८।३।६) इत्यकारेण,

---

इति वृत्तिलिखनात् नायं भाव्यमानः। यदि तपरकरणेन भाव्यमानतायाति दीर्घ-स्थाने, तदन्यत्। सुतरां ग्रहणकशास्त्रेऽण् ग्रहणं परेणेति स्थितम्। तत्फलन्तु "ऋत इद्धातोः" (७।१।१००) "उदोष्ठ्यपूर्व्वस्य" (७।१।१०२) इत्यादौ "उरण् रपरः" (१।१।५१) इत्यत्र उर् इत्यनेन ऋकारस्य ग्रहणात् रपरत्वसिद्धिः।

अर्द्धचतस्र इति। अर्द्धेन चतस्रः अर्द्धचतस्रः। संहितायां सार्द्धद्वयं विभक्ति-योगात् मात्राद्वयमिति अर्द्धचतस्रो मात्रा य्वोरित्यत्र। प्रत्याहारग्रहणे तु इण इत्याकारः, तत्र तिस्रो मात्राः।

वर्णोत्सत्ताविति। वर्णोत्पत्तिः वर्णोच्छेदः। अ इ उ ण् इत्यत्र णकारः, ल ण् इत्यत्र णकारः। एकस्योच्छेदेऽपरस्यास्तित्वमवसीयते, ततः कथं न वर्णान्तरमनुबन्धः क्रियते? "व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षण"मिति परिभाषाज्ञापनार्थमिति सिद्धान्तः।

"हलो यमां यमि लोपः" (८।४।६४) इति यकारेण, "ङमो ह्रस्वादचि ङमुण् नित्यम्" (८।३।३२) इति ङकारेण। "अम-न्ताड्ड" इति ञकारेणापि ग्रहणमस्य दृश्यते। केचित्तु सर्व्वा-ण्येतानि प्रत्याहारग्रहणानि ञकारेण भवन्त्विति मकारमनु-बन्धं प्रत्याचक्षते। तथा तु सति "ङमो ह्रस्वादचि ङमुण् नित्यम्" इत्यत्रागमिनोर्झभोरभावादागमाभावप्रतिपत्ति-गौरवं भवति।

---

## झ भ ञ्। ८।

म. वृ॰। झ भ इत्येतौ वर्णावुपदिश्य पूर्व्वांश्चान्ते ञकार-मितं करोति प्रत्याहारार्थम्। तस्य ग्रहणं भवत्येकेन। "अतो दीर्घो यञि" (७।३।१०१) इति यकारेण।

भा. स.। कथं मकारो ञकार इतीमौ सुखनासिकावचनावुभावनुबध्येते? न पुनरेको ञकारोऽनुबध्येत? "हलो यमां यमि लोपः" (८।४।६४) इत्यत्र "हलो यञां यञि लोपः" इति कृते झकारभकारयोरपि लोपः प्रसज्येतेति चेत्, न दोषः, यतः झकारभकारौ न झकारभकारपरौ स्तः। "पुमः खय्यम्परः" (८।३।६) इत्यत्र पुमः खय्यञ्परः" इति कृते झकारभकारपरे खयि रुः प्रसज्येतेति चेत्, न झकार-भकारपरः खय्यस्तीति न दोषः। "ङमो ह्रस्वादचि ङमुण्नित्यम्" (८।३।३२) इत्यत्र "ङञो ह्रस्वादचि ङञुण् नित्यम्" इति झकारभकारयोरपि पदान्तयोः झकारभकारा-वागमौ स्यातामिति चेत्, न झकारभकारौ पदान्तौ स्त इति न दोषः। यदि न तौ स्तः

---

न झकारेति। उज्झेः लभेः क्विपि झकारभकारौ स्तः तत् कथमुक्तं न झकार-भकारपर इति? उज्झेर्दोपधतया संयोगान्तलोपे उदिति रूपम्। लभेस्तु भकारस्य पदान्तस्य जश्त्वम्। सुतरां झकारभकारपरो नास्ति खय इति सिद्धम्।

पञ्चागमास्तय आगमिन इति वैषम्यात् संख्यातानुदेशो न प्राप्नोति, ङकारञकारावागमिनौ न स्त इति कृत्वा आगमावपि न भविष्यतः ।

---

अथ किमिदमक्षरमिति ?

## १ । अक्षरं न क्षरं विद्यात् ;—

न क्षीयते न क्षरतीति वा अक्षरम् ।

## २ । अश्नोतेर्वा सरोऽक्षरम् ।

अश्नोतेर्वा पुनरयमौणादिकः सरन्प्रत्ययः । अश्नुते इत्यक्षरम् ।

---

पञ्चागमा इति । यदि पदान्तौ ङकारञकारौ न स्तः तदा ङ्ञ इत्यत्र द्वय आगमिनः ङ्ञुट् इत्यत्र पञ्च आगमाः । सुतरां "यथासंख्यमनुदेशः समानाम्" (१।३।१०) इत्यनेन संख्यातानुदेशप्राप्त्यभावः । न दोषः, कथम् ? येषामागमानामागमिनो विद्यन्ते त एव प्रवर्त्तन्ते, यत्र च्छुद्देशिनामनुदेशिनाञ्च संख्यासाम्यं तत्र यथासंख्यम्प्रयोगे यस्यागमस्य आगमी विद्यते तत्र प्रवर्त्तते संख्यातानुदेशः ।

अक्षरमिति । "स्वरश्चोऽक्षरम्ः" (९ पृ.) इति पूर्व्वमुक्तम् । ततः किमिदमक्षरमिति प्रश्नः ।

न क्षरमिति । न क्षीयते न क्षरत इति व्युत्पत्त्या नित्यार्थवाचकम् । ब्रह्मणि प्रयुक्तोऽक्षरशब्दो नित्यार्थः परमार्थतः । वर्णे तु व्यवहारनित्यतया नित्यत्वम् ।

अश्नुत इति । अर्थमश्नुते व्याप्नोतीत्यक्षरम् ।

## ३ । वर्णं वाहुः पूर्व्वसूत्रे ;—

अथवा पूर्व्वसूत्रे वर्णस्याचरमिति संज्ञा क्रियते ।

## ४ । किमर्थमुपदिश्यते । * ।

किमर्थं वर्णमुपदिश्यते ? वर्णैः शब्दाः ज्ञायन्ते शब्दैर्हि वेदो निबद्धः । सुतरां (१) शास्त्रप्रवृत्त्यर्थम् (२८ पृ.) (२) इष्टबुद्ध्यर्थम् (२९ पृ.) (३) लघ्वर्थञ्च उपदिश्यते ।

"सोऽयमचरसमाम्नायो वाक्समाम्नायः पुष्पितः फलितश्चन्द्रतारकवत् प्रतिमण्डितो वेदितव्यो ब्रह्मराशिः ; सर्व्ववेदपुण्यफलावाप्तिश्चास्य ज्ञाने भवति ; मातापितरौ चास्य स्वर्गे लोके महीयते ।"

इति श्रीभाष्यसङ्कमन्यां प्रथमस्याध्यायस्य प्रथमपादे

द्वितीयमाह्निकम् ।



---

वर्णमिति । पूर्व्वसूत्रे व्याकरणान्तरे । "वर्णा अचराणी"ति तत्र ।

सोऽयमिति । अचरसमाम्नायः वर्णानां क्रमपाठः । वाक्समाम्नायः तैर्वर्णैर्वाग्व्यवहारः । पुष्पितः फलितः, शब्दव्यवहारेणापूर्व्वफललाभात् फलपुष्पान्वितः । चन्द्रतारकवत् प्रतिमण्डितः अलङ्कृतः व्यवहारनित्यतया चन्द्रतारकैरुपमा । वेदितव्यः परिज्ञातव्यः । कथम् ? ब्रह्मराशिः । वर्णैः शब्दाः शब्दैर्वेदाः परिज्ञायन्ते, अतोऽभेदोपचारात् सोऽयमचरसमाम्नायः वाक्समाम्नायः ब्रह्मराशिः वेदसमष्टिः । शब्दब्रह्मणोरभेदोपचारात् यत् शब्द एव ब्रह्मेति मतं, तत्तु "ऋचो अचरे परमे व्योमन् (ऋक् १म. १६४ सू. ३९ ऋक्) इत्यादि दिशावगन्तव्यम् ।

इति श्रीभाष्यसङ्कमन्यनुव्याख्यायां तत्त्वसङ्कलन्यां प्रथमाध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ।

---

## तृतीयाह्निकम् ।

[पा. १अ. १पा. १सू.] [भा. १अ. १पा. ३आ.]

### वृद्धिरादैच् । १ । १ । १ ।

म. वृ. । वृद्धिशब्दः संज्ञात्वेन विधीयते प्रत्येकमादैचां वर्णानां सामान्येन तद्भावितानामतद्भावितानाञ्च । तपरकरणमैजर्थम्, तादपि परस्तपर इति 'खट्वैड़का'दिषु त्रिमात्रचतुर्मात्रप्रसङ्गनिवृत्तये । 'आश्वलायनः' 'ऐतिकायनः' 'औपगवः' 'औपमन्यवः' 'शालीयः' 'मालीयः' ।

वृद्धिप्रदेशाः—"सिचि वृद्धिः परस्मैपदेषु" (७।२।१) इत्येवमादयः ।

भा. स. । 'ऐच्' इत्यत्र "चोः कुः" (८।२।३०) इत्यनेन पदान्ते कुत्वं प्राप्नोति, तन्न प्राप्नोति "अयस्मयादीनि छन्दसि" (१।४।२०) इत्यनेन भत्वात् ।

---

ऐजिति । 'आदैच्' इत्यतो ऐज्ग्रहणं विस्पष्टतो न्यायप्रदर्शनार्थम् । एवं ग्रहणे न दोषोऽपि यतो भाष्यकारेणापि पस्पशायाम् "शब्दाप्रतिपत्ति"रिति (२५ पृ.) वार्त्तिके असमस्तत्वेन परिगृह्य 'आत् ऐच्' इति पदविभागं प्रदर्शितवान् । अत्र "कथं कुत्वं न भवतीति" विचारः ऐच्पदस्य साधुत्वपरिग्रहेणैव कृतः, अन्यथा तत्र शास्त्रोक्तकुत्वादेः कुतः सम्भावना । सङ्केतेनोपदेशार्थं संज्ञासंज्ञित्वपरिकल्पनमवश्यमापि । सुतरां वृद्ध्यादीनामनुशासनतात्त्वेव । सर्वशब्दानां सर्वार्थवाचकत्वमिति प्राचीनमतम् । सर्वार्थवाचकतां सङ्कोच्य विशेषविशेषार्थे विशेषविशेषशब्दं निबध्य वाग्व्यवहारः प्रवर्त्तते । एवं शब्दार्थनिरूपणस्य लौकिकत्वात् संज्ञासंज्ञित्वपरिकल्पनं न विरुध्यते, शिष्टव्यवहारात् साधुत्वमपि । "सङ्केतग्राहकशास्त्रकरणं स्वेच्छयैवेत्येषां यदृच्छाशब्दत्वेन व्यवहार" इति शेखरकारः ।

नेदं छन्द इति चेत्,

## १। छन्दोवत् सूत्राणि भवन्ति।

इत्यस्य छन्दस्त्वम्। यदि भसंज्ञा "वृद्धिरादैजदेङ् गुणः" इत्यत्र जश्त्वमपि न प्राप्नोति। "उभयसंज्ञान्यपि" छन्दांसि दृश्यन्ते, तद्यथा "स सुष्टुभा स ऋक्वता गणेन" (ऋक् ४म. ५सू. ५ऋक्)। अत्र पदत्वात् कुत्वं; भत्वात् जश्त्वं न भवति। एवं "वृद्धिरादैच्" "वृद्धिरादैजदेङ् गुणः" इत्यत्र भत्वात् कुत्वं न, पदत्वात् जश्त्वं भवति।

आदैच् इत्यनेन वृद्धिरिति ये आदैचस्तेषां ग्रहणं भवति, आदैज्मात्राणां वा। यदि वृद्धिरिति ये आदैचस्तेषां ग्रहणं भवति, 'शालीयः' 'मालीयः' इत्यत्र "वृद्धाच्छः" (४।२।११४) इत्यनेन वृद्धलक्षणश्छो न प्राप्नोति, 'आम्रमयः' 'शालमयः' इत्यत्र "नित्यं

---

उभयसंज्ञान्यपीति। वक्तव्यमेतत् "अयस्मयादीनि छन्दसी"ति सूत्रे वार्त्तिकपाठे।

आदैजिति। समस्तपक्षे आदैजिति ग्रहणं कृतम्। अत्र ऐचेति इतरेतरद्वन्द्वपक्षे सुपां सुलुग् (७।१।३९) इति सुलुक्, पक्षे समाहारद्वन्द्वः। समासान्तविधेरनित्यत्वात् "द्वन्द्वाच्चुदषहान्तात् समाहारे" (५।४।१०६) इत्यनेन समाहारपक्षे टच् न। कुतो ज्ञायते समासान्तविधिरनित्य इति? "द्वित्रिभ्यां पाद्दन्मूर्द्धसु बहुव्रीहौ" (६।२।१९७) इत्यत्र मूर्द्धन्शब्दादकृतसमासान्तात्। "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" (५।४।११३) इति षच्यनुवर्त्तमाने "द्वित्रिभ्यां ष मूर्ध्नः" (५।४।११५) इति षविधानं षचश्चित्त्वसामर्थ्याज्जायमानेनान्तोदात्तत्वेन "द्वित्रिभ्यां पाद्दन्मूर्द्धसु बहुव्रीहा"वित्यत्र पाक्षिकान्तोदात्तत्वस्याबाधनाय। तत्र तु 'द्विमूर्द्धा' इत्यसमासान्तोऽपि अन्तोदात्तः, 'द्विमूर्द्धः' इति कृतसमासान्तोऽपि अन्तोदात्तः पाक्षिकः। समासान्ते कृते "बहुव्रीहेः कार्य्यित्वात् तदेकदेशत्वाच्च समासान्तस्यान्तोदात्तत्वं पक्षे भवत्येव।"

वृद्धिरिति। वृद्धिरिति विधानबलेन ये आकारौकारा भाव्यन्ते ते। एषां तद्भावितत्वसंज्ञा।

वृद्धलक्षण इति। "वृद्धिर्यस्याचामादिस्तद्वृद्धम्" (१।१।७३) अचां मध्ये वृद्धिसंज्ञक आदेजादिभूतो यस्य तच्छब्दरूपं वृद्धसंज्ञम्। एतल्लक्षणाक्रान्तो वृद्धलक्षणः।

वृद्धशरादिभ्य" (४।३।१४४) इत्यनेन वृद्धलक्षणो मयश्च प्राप्नोति । 'आम्रगुप्तायनिः' 'शालगुप्तायनिः' इत्यत्र "उदीचां वृद्धादगोत्रात्" (४।१।१५७) इत्यनेन वृद्धलक्षणः फिञ् न प्राप्नोति ।

आदैज्मात्राणां ग्रहणमिति चेत् सर्वो भासः 'सर्वभासः' इत्यत्र उत्तरपदवृद्धौ "उत्तरपदवृद्धौ सर्वं च" (६।२।१०५) इत्यनेन पूर्वपदान्तोदात्तत्वं प्राप्नोति। तावती भार्या यस्य 'तावद्भार्यः' इत्यत्र "वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे" (६।३।३९) इत्यनेन "वृद्धिनिमित्तस्ये"ति पुंवत्प्रतिषेधः प्राप्नोति । आदैज्मात्रग्रहणे न दोषः । कथम् ? 'सर्वभासः' इत्यत्र "उत्तरपदस्य" (७।३।१०) इत्यधिकृत्य या वृद्धिः सैवोत्तरपदवृद्धि-रन्यथा सर्वः कारकः 'सर्वकारकः' इत्यत्र पूर्वपदान्तोदात्तत्वं प्राप्नुयात् । 'तावद्भार्यः' इत्यत्र न पुंवत्प्रतिषेधः, यतो न वृद्धेर्वृद्धीनां वा निमित्तं वृद्धिनिमित्तं किन्तु वृद्धेर्वृद्धीनां वा निमित्तं ककारो ञकारो णकारो यस्मिन्निति वृद्धिनिमित्तस्य तद्धितस्य पुंवत्प्रति-षेधो भवति, न तु "आ सर्वनाम्नः" (६।३।९१) इत्यनेन वतुनिमित्तस्य तावतीत्यस्य ।

## २ । अथ संज्ञेति वक्तव्यम् । * ।

---

सर्वकारक इति । तद्भावितग्रहणपक्षेऽपि प्राप्नोतीति प्रदर्शनाय 'सर्वकारकः' इति ग्रहणम् ।

उत्तरपदवृद्धिरिति । अत्र वृद्धिशब्दमात्रग्रहणे तेनैव वृद्धिमदुत्तरपदं गृह्यते तथापि यदुत्तरपदग्रहणं कृतं तेनैतदायाति "उत्तरपदस्ये"त्यधिकृत्य या वृद्धिः सैवोत्तरपदवृद्धिः ।

वृद्धेर्वृद्धीनां वेति । वृद्धेर्निमित्तं ककारो ञकारो णकारः । वृद्धीनामिति बहुवचन-निर्देशः कृत्स्नाया वृद्धेर्निमित्तसूचनाय । आकार ऐकार औकारो हि कृत्स्नाया वृद्धेर्विषयः । वृद्धिनिमित्तस्येत्यत्र व्यधिकरणपदो बहुव्रीहिः ।

ककार इति । "अचो ञ्णिति" (७।२।११५) "किति च" (७।२।११८) इति ञिति णिति वृद्धिः सार्वत्रिकी, किति तद्धिते । सुतरामेषां वृद्धेर्निमित्तत्वम् ।

## ३ । संज्ञाधिकारः संज्ञासंप्रत्ययार्थः ।

अथ संज्ञेति प्रकृत्य वृद्ध्यादयः शब्दाः पठितव्याः, अन्यथा वृद्ध्यादीनां संज्ञा इत्येष संप्रत्ययो न स्यात् ।

## ४ । इतरथा ह्यसंप्रत्ययो यथा लोके ।

अक्रियमाणे संज्ञाधिकारे संज्ञासंप्रत्ययाभावः, संज्ञासंप्रत्ययाभावे बहुसूत्रमनर्थकं स्यात् । दृश्यन्ते हि लोकेऽर्थवन्त्यनर्थकानि च वाक्यानि, तद्यथा अर्थवन्ति—'देवदत्त, गामभ्याज शुक्लां दण्डेन', 'देवदत्त गामभ्याज कृष्णा'मिति । अनर्थकानि—'दश दाडिमानि' 'षडपूपाः' 'कुण्डम्' 'अजाजिनम्' इत्यादि ।

## ५ । संज्ञासंज्ञिनोरसन्देहश्च ।

क्रियमाणेऽपि संज्ञाधिकारे केयं संज्ञा कः संज्ञीत्यत्र सन्देहो यथा न भवेत् तथा वक्तव्यं वृद्धिशब्दः संज्ञा आदैचः संज्ञिन इति ।

संज्ञासंप्रत्ययार्थः संज्ञाधिकारो न कर्त्तव्यः, यतः,

## ६ । आचार्य्याचारात् संज्ञासिद्धिः । * ।

आचार्य्यव्यवहारात् संज्ञात्वं सिद्धम् । * ।

---

बहुसूत्रमिति । बहूनि सूत्राणि यस्मिन्निति बहुव्रीहिपक्षे प्रकरणमध्याहर्त्तव्यम् । समाहारद्विगुपक्षे पात्रादित्वात् स्त्रीप्रत्ययाभावः ।

अनर्थकमिति । सूत्राणामगमकत्वे न कश्चिदर्थो निष्पन्न इति अनर्थकम् । कष्टकल्पनयार्थनिष्पन्नत्वेऽपि तथैवावगन्तव्यम् ।

दश दाडिमानीति । पदार्थानां समन्वयाभावादत्रानर्थक्यम् ।

आचार्य्यव्यवहारादिति । एवं हि वार्त्तिकपाठः । तेनैव पाठेन वृद्धिर्निबद्धा ।

## ७ । यथा लौकिकवैदिकेषु ।

तद्यथा लोके जातस्य पुत्रस्य मातापितरौ नामधेयं संवृतप्रदेशे कुर्व्वाते, तयोर्व्यवहारात् अन्येऽपि जानन्ति इयमस्य संज्ञेति । वेदे पुन: 'स्फ्यः' 'यूपः' 'चषालः' इति याज्ञिकाः संज्ञाः कुर्व्वन्ति तेषां व्यवहारात् अन्येऽपि जानन्ति इयमस्य संज्ञेति । एवमिहापि संज्ञाधिकारं विना आचार्य्यव्यवहारादेव संज्ञासंप्रत्ययः ।

अत्र सूत्रे केचित् व्याख्यानेन 'वृद्धिशब्दः संज्ञा आदैचः संज्ञिनः' इति वदन्ति, केचित् सूत्रार्थकथनाय वृद्धिप्रदेशत्वेन "सिचि वृद्धिः परस्मैपदेषु (७।२।१) इति सूत्रमपेक्ष्य 'अकार्षीत्' 'अनैषीत्' इत्यादिष्वाकारैकारानुदाहरन्ति । अतएव "यया प्रत्याय्यते सा संज्ञा ये प्रतीयन्ते ते संज्ञिनः" इति ।

यदुक्तं "संज्ञासंज्ञिनोरसन्देहश्च" वक्तव्य इति तदपि आचार्य्यव्यवहारादेव सिद्धम् ।

## ८ । अनाकृतिः ।

अथवा अनाकृतिः संज्ञा आकृतिमन्तः संज्ञिनः, यथा लोके आकृतिमतो मांसपिण्डस्य देवदत्त इत्यनाकृतिः संज्ञा क्रियते ।

---

व्याख्यानेनेति । व्याख्यां विना न हि वृद्धिशब्दस्य संज्ञात्वप्रतीतिः, आदैचां संज्ञित्वबुद्धिरिति व्याख्यानाश्रयः ।

वृद्धिप्रदेशत्वेनेति । "सिचि वृद्धिः परस्मैपदेषु" इति सूत्रे उदाहरणदृष्ट्या वृद्धिपदेन आकारैकारत्वमायातीति प्रतीतिः सुतरां वृद्धिरेव संज्ञा आकार ऐकारः संज्ञीति विज्ञायते । कथम् ? येन शब्देनोपस्थितिः सा संज्ञा, यस्योपस्थितिः स्थितिश्च स संज्ञी । न च वाच्यं कथमुदाहरणस्य प्राप्तिः, सिद्धात् पदादुदाहरणग्रहणात् ।

अनाकृतिरिति । आदैचः वर्णाकारेण आकृतिमन्तः, वृद्धिस्तु न कमप्याकारमाधत्ते । देवदत्त इति नाम्नः न कोऽप्याकारोऽस्ति यस्य जनस्य च तन्नाम स त्वाकारवान् । अतएव लोकदृष्टान्तेन सिद्धात्यनाकृतेः संज्ञात्वमाकृतिमतः संज्ञित्वम् ।

## ६। लिङ्गेन वा।

अथवा संज्ञाशब्दे किञ्चिल्लिङ्गमासज्य वक्ष्यामीत्यलिङ्गा संज्ञेति। अत्र वृद्धिशब्दे तल्लिङ्गं करिष्यते नादैच्शब्दे।

"आचार्य्याचारात् संज्ञासिद्धि"रिति यदुक्तं तन्न युक्तम्, यत आचार्य्यकृतस्य सूत्रस्यागमफलं निर्णीय "संज्ञाधिकारः" कर्त्तव्य इति सिद्धान्तितम् पश्चात् स एवाचार्य्यः प्रमाणत्वेनोपस्थापितः "आचार्य्याचारा"दिति।

अहो भवानपि "आचार्य्याचारादि"ति परिहारेणापरितुष्यन्नाह "अनाकृतिः" "न लिङ्गेने"ति। ततः "संज्ञाधिकारः" इत्यनुक्त्वा "लिङ्गेने"ति वक्तव्यं भवति। "लिङ्गेने"त्युक्ते पूर्व्वमुक्तम (२१पृ) इत्संज्ञा च न वक्तव्या लोपश्च न वक्तव्य इत्यायाति, यतः संज्ञालिङ्गमनुबन्धेषु करिष्यते। न खलु वक्तव्यं नास्ति संज्ञाया निवृत्तिरिति, स्वभावतो हि संज्ञा संज्ञिनं प्रत्याय्य स्वयं निवर्त्तते। तेनानुबन्धानामपि निवृत्तिर्भविष्यति। सिद्धं त्वेवमपाणिनीयन्तु भवति।

यथान्यासमेवास्तु। ननूक्तम् "संज्ञाधिकारः संज्ञासंप्रत्ययार्थः" "इतरथा ह्यसंप्रत्ययो यथा लोके" इति। न च यथा लोके सन्त्यनर्थकानि वाक्यानि तथा व्याकरणे। कथम्? "प्रमाणभूत आचार्य्यो दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्रं प्रणयति स्म तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुं किं पुनरियता सूत्रेण।" अपिच किमस्ति यदीदृशादाचार्य्यादशक्यमतः संज्ञासंज्ञिनावेव। न खलु संज्ञासंज्ञित्वप्रदर्शक-

---

लिङ्गमिति। कलादिवर्णदोषः। दोषाः पूर्व्वमुक्ताः (२९पृ.)।

यथान्यासमिति। संज्ञाधिकारमनुक्त्वा "वृद्धिरादैच्" इत्यत आरभ्य।

प्रमाणभूत इति। "प्रामाण्यं प्राप्त इत्यर्थः। भू प्राप्तावित्यस्मादाधृषीयादिति णिजभावे रूपम्। वृत्तिविषये च प्रमाणशब्दः प्रामाण्ये वर्त्तते।"

न खल्विति। "वर्णेनाप्यनर्थकेने"त्युक्त्वा अनर्थकत्वं परिहृतम्, अधुना शास्त्रानुशासनं, प्रयोगनियमार्थम्, आदेशार्थम्, आगमार्थम्, विशेषणविशेष्यभावार्थञ्च सूत्रमिदमिति पश्चान् परिहर्त्तुमारभते।

मिदं सूत्रम् किन्तु साध्वनुशासनेऽत्र शास्त्रे साधुत्वमनेन क्रियते। न हि साधुत्व-प्रदर्शनायेदं, यतः ज्ञातमनयोः साधुत्वम्। कथम्? प्रत्ययविशेषमनादाय वृधिरिलुप-दिष्टं प्रकृतिपाठे तस्मात् क्तिन्प्रत्ययेन वृद्धिः। आदैचोऽप्यक्षरसमाम्नाये उपदिष्टाः। भवतु तदिदं सूत्रम् वृद्धिशब्दात् पर आदैचः प्रयोक्तव्या इति प्रयोगनियमार्थम्। नेह प्रयोगनियम-आरभ्यते, किन्तर्हि, पदानां साधुत्वमन्वाख्याय प्रकृतिप्रत्ययविभागकल्पनम्। पदाना-मभिसम्बन्धस्तु यथेष्टम् यथा 'आहर पात्रम्' 'पात्रमाहरे'ति। तर्हि वृद्धिशब्दस्य आदैच-आदेशा भवन्तीति आदेशा इमे। आदेशाः पुनः षष्ठीनिर्दिष्टस्योच्यन्ते न चात्र षष्ठीं पश्यामः। तर्हीमे वृद्धिशब्दस्यादैच आगमा इति आगमाः, आगमा अपि षष्ठी-निर्दिष्टस्यैवोच्यन्ते, टकारादिलिङ्गेन च। नात्र षष्ठीं नाप्यागमलिङ्गं पश्यामः।

---

प्रयोगनियम इति। वृद्धिरादैजित्येवं प्रयोगः कर्त्तव्यः न तु आदैज्वृद्धिरिति।

साधुत्वमन्वाख्यायेति। अत्र भाष्यम्, "संस्कृत्य संस्कृत्य पदान्युत्सृज्यन्ते तेषां यथेष्ट-मभिसम्बन्धो भवती"ति संस्करणं साधुत्वमन्वाख्यानम्। कथम्? परम्परया लौकिक-व्यवहारे शब्दानां विकृतिरुपजायते, तद्विकारपरिहाराय विद्वद्भिर्यत्नः क्रियते तदेव हि संस्करणं तत्तु साधुत्वमन्वाख्यानम्, इदमासीत् असाधु, इदन्तु साध्विति कथनं साधुत्व-मन्वाख्यानम्। कथञ्च तत्सिद्ध्यति? उत्सर्गतः। "पदान्युत्सृज्यन्ते" सामान्यविधान-मवलम्ब्य पदानि विवेच्यन्ते। एतत्तु प्रकृतिप्रत्ययविभागकल्पनया सिद्ध्यति। कथमेवं परिकल्पनमुत्सर्गः? सर्गः प्रथमा सृष्टिः। स तु परमेश्वरादेव ज्ञेयः। उत्सर्गः अवान्तर-सृष्टिः, स तु मनुष्यकृतः। शब्दानां प्रथमसृष्टौ न मनुष्यकर्तृत्वमस्ति। सृष्टानां नित्यत्वपक्षे परमेश्वराद्‌आविर्भूतानां शब्दानां सामान्यांशं परिगृह्य तमेव शब्दयोनित्वेन च निर्णीय भेदकांशं प्रत्ययत्वेन स्थिरीकृत्य मनुष्यकृतावान्तरसृष्टिरुपतिष्ठते एवं भाष्यार्थं पर्यालोच्य सूत्रे "साधुत्वमन्वाख्याये"त्या"दि निबद्धम्।

अभिसम्बन्ध इति। "पौर्वापर्यलक्षणः" सम्बन्धः।

अत्र पञ्चमः सामानाधिकरण्यमेकविभक्तित्वञ्च । भवत्येतत् विशेषणविशेष्ययोः संज्ञासंज्ञिनोर्वा । नात्र विशेषणविशेष्ययोः, यतो द्वयोः प्रतीतपदार्थकयोर्विशेषणविशेष्यभावो न चादेच्छब्दः प्रतीतपदार्थकः । तस्मात् संज्ञासंज्ञिनावेव ।

तत्र तेतावान् सन्देहः कः संज्ञी का संज्ञेति । क्व चैवं सन्देहो भवति ? यत्रोभे समानाक्षरे । यत्र त्वन्यतरल्लघु सा संज्ञा, यद्गुरु स संज्ञी । यतो हि लघ्वर्थं हि संज्ञाकरणम् । तत्र केवलं गुरुलघुतामेवोपलक्षयितुं नार्हति, अनाकृतितामपि । अनाकृतिः संज्ञा आकृतिमन्तः संज्ञिनः । लोकेऽपि हि आकृतिमतो मांसपिण्डस्य देवदत्त इति संज्ञा क्रियते । अथवा,

---

भवत्येतदिति । समानमेकमधिकरणमाश्रयः समानाधिकरणं समानाभिधेयः तस्य भावः सामानाधिकरण्यम् । 'घटोऽस्ती'त्यत्र अस्ति सामानाधिकरण्यं न त्वेकविभक्तित्वम्, 'रामः' 'कृष्णः' अत्यत्र एकविभक्तित्वं न तु सामानाधिकरण्यमभिधेयस्य भिन्नत्वात् । विशेषणविशेष्ययोस्तथा संज्ञासंज्ञिनोरस्ति सामानाधिकरण्यमेकविभक्तित्वञ्च, तद्यथा 'नीलो घटः' नीलत्वं हि घटस्य सुतरां तयोरेकाधिकरणत्वम् । यद्येकाधिकरणत्वं तथात्वत्र समानविभक्तित्वं सुतरां विशेषणविशेष्यभावः ।

प्रतीतपदार्थकयोरिति । प्रतीतः प्रसिद्धः प्रसिद्धयोर्द्वयोः पदार्थयोर्विशेषणविशेष्यभावो भवति । 'नीलो घटः' इत्यत्र प्रसिद्धपदार्थयोः नीलत्वघटयोः विशेषणविशेष्यता । यस्मिन् पदार्थे लोकानामनभिज्ञता विद्यते, तस्य प्रथमतः अस्य पदार्थस्यायमर्थ इत्यभिधाने यत्नोऽवश्यकर्त्तव्यः । एवं हि विज्ञानभिज्ञानां लोकेऽप्रसिद्धानां शब्दानां संज्ञात्वेन परिग्रहः, अर्थप्रकाशे यत्नश्च । यथा वैद्यशास्त्रे व्यवहृतोपशयशब्दस्यार्थं न कश्चित्तज्ज्ञानभिज्ञो जानाति अतः कथयति—"हेतुव्याधिविपर्यस्तविपर्यस्तार्थकारिणाम् । औषधान्नविहाराणामुपयोगं सुखावहम् । विद्यादुपशयं व्याधेः स हि सात्म्यमिति स्मृतः ॥" इति । सुतरां सिद्धमप्रसिद्धपदार्थयोः संज्ञासंज्ञित्वम् । आदेच्छब्दो न प्रसिद्धः सुतरां संज्ञी वृद्धिस्तस्य संज्ञा ।

## १० । आवर्त्तिन्यः संज्ञा भवन्ति ।

वृद्धिशब्दश्चावर्त्तते नादैच्-शब्दः। तद्यथा लोके देवदत्तशब्द आवर्त्तते न तु मांसपिण्डः। अथवा,

## ११ । पूर्व्वोच्चारितः संज्ञी परोच्चारिता संज्ञा, सतो हि कार्य्यिणः कार्य्यं भवन्ति । * ।

यतः सतएव कार्य्यिणः कार्य्येण भवितव्यम्, अतः पूर्व्वोच्चारितः संज्ञी परोच्चारिता संज्ञेति सम्प्रधार्य्यम्, तद्यथा लोके सत एव मांसपिण्डस्य देवदत्त इति संज्ञा क्रियते।

कथं "वृद्धिरादैज्" इति। एतदेकमाचार्य्यस्य मङ्गलार्थमृष्यताम्। "माङ्गलिक आचार्य्यो महतः शास्त्रौघस्य मङ्गलार्थं वृद्धिशब्दमादितः प्रयुङ्क्ते। मङ्गलादीनि हि

---

आवर्त्तते इति। देवदत्त इति नाम्ना प्रसिद्धो जन एक एव तिष्ठति, तस्य देवदत्त इति नाम जनाः पुनः पुनः गृह्णन्ति—देवदत्तो खादति, देवदत्तः शेते, देवदत्तस्तिष्ठति, देवदत्तो धावतीत्यादि।

एतदेकमिति। ननु "आर्द्धधातुकं शेषः" (३।४।११४), "कृदतिङ्" (३।१।९३) "अपृक्त एकाल् प्रत्ययः" (१।२।४१) इत्यादिषु व्यभिचारो दृश्यते? 'अपृक्त एकाल्' इति परिभाषा न संज्ञेति नास्ति व्यभिचारः" इति कैयटः। इयमुक्तिर्दीक्षितेन न बहु मन्यते वृद्ध्यादावपि तस्याः सुवचत्वात्। "आर्द्धधातुकं शेषः" "कृदतिङ्" "अपृक्त एकाल् प्रत्ययः" इत्येतेषु साक्षात्संज्ञिनामविद्यमानत्वात् तेषां विशेषणमात्रोपस्थानात् "एतदेकमिति" भाष्यकारवचः सुसङ्गतम्। एवमन्यत्राप्यूह्यम्। अपृक्तशब्दस्य संज्ञात्वेन भाष्यकारेण स्वीकारात् कैयटकृतसमाधानं न साधीयः। यत्र विशेषणमात्रोपस्थानं तत्र संज्ञासंज्ञिनोरानुपूर्व्विकस्थितिरैच्छिकीति बोध्यम्।

मङ्गलादीनीति। वार्तिकपाठस्य साधितं पाठान्तरम्। "मङ्गलादीनि शास्त्राणि प्रथन्ते वीरपुरुषाणि भवन्ति, अध्येतारश्च वृद्धियुक्ता भवन्ती"ति।

शास्त्राणि प्रयन्ते वीरपुरुषकाणि भवन्त्यायुष्मत्पुरुषकाणि चाध्येतारश्च वृद्धियुक्ता यथा स्युरिति ।" सर्व्वत्रैव हि व्याकरणे पूर्व्वोच्चारितः संज्ञी परोच्चारिता संज्ञा । "अदेङ्गुणः" (१।१।२) इति यथा ।

संज्ञाधिकारोऽत्र दोषवानपि, यतः अष्टमेऽपि संज्ञाः क्रियन्ते "तस्य परमाम्रेडितम्" (८।१।२) इति ; तत्रापीदं वक्तव्यमनुवर्त्त्यं स्यात् । अथवा अस्थानेऽयं यत्नः क्रियते । यतो नेदं लोकाद्भिद्यते, यदि भिद्येत यत्नार्हं स्यात् । न हि लोके कश्चिद्गोज्ञायोपदिशतीयमस्य संज्ञेति किन्तु तस्य कायमुपस्पृश्योपदिशति अयं गौरिति, भवति चास्य सम्प्रत्ययः । यदि गोशब्दस्याभिसम्बन्धः पूर्व्वैः कृत इति सम्प्रत्यये निमित्तं भवति अत्रापि पूर्व्वैराचार्य्यैरभिसम्बन्धः कृत इति सम्प्रत्ययः स्यात् । यमधुनोपदिशति न तस्याभिसम्बन्धः कृत इति चेत् अगोज्ञस्यापि तथा । यदि तस्याभिसम्बन्धः कृतः, इहापि कृतो द्रष्टव्यः ।

## १२ । सतो वृद्ध्यादिषु संज्ञाभावात् तदाश्रय-इतरेतराश्रयत्वादप्रसिद्धिः ।

सतो हि संज्ञिनः संज्ञासम्बन्धः । अत्र तु संज्ञाश्रयः संज्ञी तस्मिन् वृद्ध्यादिषु

---

इहापि कृत इति । गौरिति शब्दस्य प्रसिद्धत्वात् अगोज्ञस्य कश्चित्पशुः गोसंज्ञकोऽस्तीति ज्ञानं विद्यते केवलं हि तस्य परिचयस्याभावः । स तु भवति गां संस्पृश्योपदेशेन । गोः पशुत्वज्ञानं सामान्यतोऽस्ति तस्यैव विशेष इति विशेषः । एवं पूर्व्वाचार्य्यव्यवहृतसंज्ञायाः प्रसिद्धत्वात् शास्त्रे कश्चित् तत्संज्ञकः संज्ञी विद्यत इति साधारणज्ञानमस्ति, प्रत्यक्षत् उपदेशेन तस्य साधारणज्ञानस्य विशेषज्ञानेन परिणामनमिति "इहापि कृतः" इत्युक्तम् ।

सत इति । विद्यमानजनादीनां हि संज्ञाः क्रियन्ते, न तु संज्ञाभिस्तेषां सत्त्वम् । अत्र तु संज्ञया संज्ञित्वमायाति संज्ञिभिश्च संज्ञा प्रसिद्ध्यति । सुतरामितरेतराश्रयः परस्परसापेक्षत्वात् ।

इतरेतराश्रयत्वात् अप्रसिद्धिः । इतरेतराश्रयत्वन्तु—"सतामादेचां संज्ञया भवितव्यं, संज्ञया चादेचो भाव्यन्ते" सुतरां भवति तदेतदितरेतराश्रयम् ।

## १३ । इतरेतराश्रयाणि कार्य्याणि न प्रकल्पन्ते ।*।

न खलु इतरेतराश्रयाणि कार्य्याणि सिद्ध्यन्ति, यथा नौर्नावि बद्धा नेतरत्राणाय भवति । नौः शकटं शकटञ्च नावं वहतीति चेत्, तत्राप्यत् किञ्चिद्भवति जलं स्थलं वा, जले नौः शकटं, स्थले शकटं नावं वहति । यथा तर्हि त्रिविष्टब्धकं तथाप्यततः सूत्रकं भवति । इदं पुनरितरेतराश्रयमेव ।

## १४ । सिद्धन्तु नित्यशब्दत्वात् ।

नित्याः शब्दाः । नित्येषु शब्देषु सतामादेचां संज्ञा क्रियते, न पुनः संज्ञया आदैचो भाव्यन्ते । अतः नित्यशब्दत्वात् सिद्धमेतत् ।

यदि तर्हि नित्याः शब्दाः, किमर्थं शास्त्रम् ?

## १५ । किमर्थं शास्त्रमिति चेत् निवर्त्तकत्वात् सिद्धम् ।

अविशेषेण स्वजिरुपदिष्टः । अतः सर्व्वत्र स्वजिबुद्धिरुपजायते, तन्निवर्त्तयति

---

त्रिविष्टब्धकमिति । द्वयोः कार्य्यकारित्वाय तृतीयस्य प्रयोजनम् । यत्र तथाप्यनेकत्वावष्टब्धत्वेन स्थितिः तत्र त्वितरेतराश्रयत्वे कार्य्यसिद्धिः । तत्रापि न, संयोजकसूत्रकादेर्विद्यमानत्वात् ।

सतामादेचामिति । अविशेषेणोपदिष्टानां स्वजादीनां तत्तदाकारान् परित्यज्य वृद्धिपन्नानां प्रसिद्धानां मार्ष्ट्यादीनामसाधुत्वाशङ्कानिवारणाय तत्तत्सिद्धपदेषु स्थितानामादैचां संज्ञा क्रियते । अतएव संज्ञया ते भाव्यन्त इति न तत्त्वम् ।

अक्ङित्सु प्रत्ययेषु मृजिस्थले मृजेर्मार्जिः साधुर्भवतीति । सुतरां निवर्त्तकत्वात् शास्त्रं सिद्धम् ।

## १६ । प्रत्येकं गुणवृद्धिसंज्ञे भवत इति वक्तव्यम् ।

समुदाये गुणवृद्धिसंज्ञे मा भूतामिति वक्तव्यं प्रत्येकं गुणवृद्धिसंज्ञे भवत इति ।

## १७ । अन्यत्र सहवचनात् समुदाये संज्ञाऽप्रसङ्गः ।

नात्र समुदाये संज्ञा प्रसज्यते, यतः यत्र सहभूतानां कार्यमिच्छति तत्र सहवचनमस्ति यथा "सह सुपा" (२।१।४) "उभे अभ्यस्तम्" (६।१।५) सहेति ।

---

समुदाय इति । आदैच्पु समुदाये वृद्धिसंज्ञापरिग्रहे एकत्रैवादेचां प्राप्तिरायाति । अतः प्रत्येकग्रहणं कर्त्तव्यमिति वदति ।

सहवचनमिति । यत्र सहवचनं नास्ति तत्र यत्नेन विना प्रत्येकग्रहणं भवति । कथम् ? यत्र यत्र समुदायग्रहणस्य प्रयोजनमस्ति तत्र विना यत्नं तन्न सम्भवतीति इह सहशब्दोपन्यासः । ननु "सह सुपे"त्यत्र सहग्रहणं समुदायस्यैव समाससंज्ञा न त्ववयवानामिति नियमार्थं स्यात् ? समुदायेऽवयवे च समाससंज्ञाप्राप्तिर्नास्ति तात्पर्य्यम्, सुतरामुभयत्र न तत्प्रसङ्गः । ततो नियमार्थं न सहवचनम्, किन्तु सहभूतानां कार्य्यार्थम् । "उभे अभ्यस्त"मित्यत्र सहग्रहणं वार्त्तिककारमतानुसरणेन, भाष्यकारस्तु "एकाचो द्वे प्रथमस्य" (६।१।१) इत्यतो द्वे अनुवर्त्त्य उभेग्रहणं सहार्थकमिति साधितम् ।

## १८। प्रत्यवयवञ्च वाक्यपरिसमाप्तेः ।*।

देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामित्युक्ते प्रत्येकं भोजनक्रिया परिसमाप्यते, न तच्चोच्यते प्रत्येकं, तथेहापि प्रत्येकमित्यनुक्तेऽपि प्रत्यवयवं वाक्यपरिसमाप्तिः ।

## १९। समुदाये वाक्यपरिसमाप्तिः ।*।

नन्वस्ति समुदाये वाक्यपरिसमाप्तिर्दृष्टान्तो यथा गर्गाः शतं दण्ड्यन्ताम् । न चाच प्रत्येकं दण्डयन्ति । सत्यप्येतस्मिन् दृष्टान्ते यदि "सह सुपे"त्यादौ सहग्रहणं क्रियते तदेहापि प्रत्येकमिति वक्तव्यम् । सहग्रहणं तत्र योगविभागार्थम्, सुतरां सहग्रहणं विनापि तत्र सहभूतानां कार्यं भवति, इहापि ततो नार्थः प्रत्येकमिति वचनेन ।

---

प्रत्यवयवमिति । वार्त्तिकपाठः "प्रत्येकं वाक्यपरिसमाप्तिः" । "देवदत्त-यज्ञदत्त-विष्णुमित्रा भोज्यन्ता"मिति दृष्टान्ते प्रत्येकशब्दप्रयोगं विनापि प्रत्येकमिति वाक्यार्थः निष्पन्नः, यतः देवदत्तादिषु वाक्यावयवेषु भोजनक्रियायाः परिसमाप्तिः । वस्तुतः तात्पर्य्यपरिग्रहेणैव वाक्यपरिसमाप्तिर्दृश्यते । तथथा गीतादिक्रियासमवायो हि नाट्यं, सुतरां नाट्यक्रियायां तेषां समुदायानां ग्रहणं । संयोगसंज्ञायां समुदायग्रहणमन्यथा संयोगासिद्धिः । वृद्धिसंज्ञायान्तु प्रत्येकग्रहणं यतः सर्व्वत्र मालादिष्वादैचां पृथक्स्थिति-र्दृश्यते न तु युगपत् ।

गर्गाः शतमिति । गर्गेभ्यः शतं गृहीतं भवति । सुतरां गर्गा अपादानस्थान-प्राप्ताः । गर्गाः शतमिति द्वयोरत्र कर्म्मत्वे अपादानस्थानप्राप्तानां गर्गाणामनुद्दिष्टत्वात् गुणकर्म्मता शतस्य तु ईप्सिततमत्वात् प्रधानकर्म्मता । न हि प्रधानकर्म्मभूतस्य शतस्य गुणकर्म्मानुरोधेनावृत्तिः सम्भवतीति समुदाये शतदण्डनं परिसमाप्यते । भाष्ये "गर्गाः शतं दण्ड्यन्ता"मित्युक्ता "अर्थिनश्च राजानो हिरण्येन भवन्ती"त्युच्यते । एतेन शतस्य प्राधान्यम्, यतः शरीराभिहननदण्डं व्यावर्त्त्यार्थदण्डं विदधाति स तु शतमिति ।

सहग्रहणं तत्रेति । योगविभागोऽत्र तिङन्तादिसमासविधानार्थम् । तथथा भाष्ये "सिद्धे सति यत् सहग्रहणं करोति तस्यैतत् प्रयोजनं योगाङ्गं यथा विज्ञायेत । सति च योगाङ्गे योगविभागः करिष्यते । सह । सुप् समस्यते, केन सह ? समर्थेन ।

अथ किमर्थमाकारस्तपरः क्रियते ?

## २० । आकारस्य तपरकरणं सवर्णार्थम् ।

आकारस्य तपरकरणं तत्कालानामुदात्तानुदात्तस्वरितानां सवर्णानां ग्रहणार्थम् ।

किञ्च कारणं तत्र, यत् तेषां ग्रहणं न स्यात् ?

## २१ । भेदकत्वात् स्वरस्य ।

उदात्तादीनां स्वराणां भेदकत्वात् ग्रहणं न भवतीति सवर्णार्थं तपरग्रहणं क्रियते । कथं ज्ञायते भेदकत्वम् ? दृश्यते लोके "य उदात्तं कर्तव्ये अनुदात्तं करोति खण्डिकोपाध्यायस्तस्मै चपेटां ददाति अन्यत्त्वं करोषीति ।" अस्त्येतत् प्रयोजनं किन्तु भेदकत्वात् गुणस्येति वक्तव्यम् न तु स्वरस्य । किमत्र प्रयोजनम् ? आनुनासिक्यं नाम गुणः, गुणग्रहणे तद्भिन्नस्यापि यथा ग्रहणं स्यात् । कथं न ग्रहणं भवति ?

## २२ । भेदकत्वाद्गुणस्य ।

गुणा हि भेदकाः, यतो दृश्यते लोके आत्मन्येकस्मिन्नुदकं गुणभेदात् शीतमुष्णञ्च भवति । नन्वभेदका अपि गुणा दृश्यन्ते । यथा एको हि देवदत्तः मुण्डी जटी शिख्यपि न स्वाभाख्यां जहाति, तथा बालो युवा वृद्धो वत्सो दम्यो बलीवर्द्द इति । सुतरां

---

'अनुव्यचलत्', 'अनुप्राविशत्' । ततः सुपा । सुपा च सह सुप् समस्यते । अधिकारस्य लक्षणस्य । यस्य समासस्यान्यल्लक्षणं नास्ति इदं तस्य लक्षणं भवति ।"

आकारस्येति । तपरकरणमाकृतिपक्षे भिन्नकालनिवृत्त्यर्थं, व्यक्तिपक्षे तु गुणान्तरयुक्तानां ग्रहणार्थम् । यद्गुणस्योच्चारणं तद्गुणस्यैव संज्ञा प्रसज्यते अतः गुणान्तरयुक्तानां संज्ञासिद्धयेऽत्राऽऽकारस्तपरः क्रियते ।

शीतमुष्णञ्चेति । इदं शीतलं जलमिदमुष्णं जलमिति गुणयोगाद्भेदव्यवहारः । तथा स्वाख इति । एको हि देवदत्तः बाल्याद्यवस्थाभेदेषु स एव तिष्ठति । एको

## २३। गुणा भेदका अभेदकाश्च।*।

किं पुनरत्र न्याय्यम्?

## २४। अभेदका गुणा इत्येव न्याय्यम्।*।

कुतो ज्ञायते? "अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः" (७।१।७५). इत्यत्र अनङादेशस्योदात्तकरणात्। कथम्? अस्थ्यादय आद्युदात्तास्तेषामनङादेशः स्थानिवद्भावादनुदात्तः स्यादित्युदात्तग्रहणं करोति, यदि गुणा भेदकाः स्युः अस्थ्यादिकमुदात्तमेवोच्चारयेन्न त्वनोदात्तं कृत्वा तत्पूर्व्वमनुदात्तत्वेन परिणामयेत्। यदि तर्ह्यभेदका गुणा अनुदात्तादेरनोदात्ताच्च यदुच्यते तत् स्वरितादेः स्वरितान्ताच्च प्राप्नोति। नैष दोषः। आश्रीयमाणो गुणो भेदको भवति तद्यथा शुक्लमालभेत इत्युक्ते यदि कोऽपि कृष्णमालभते स यथोक्तं करोति।

## २५। असन्देहार्थस्तर्हि तकारः।

ऐजित्युच्यमाने सन्देहः स्यात् किमिमावैचावेव आहोस्वित् आकारोऽपि निर्दिश्यते। सन्देहे "व्याख्यानतो विशेषप्रतिपत्ति र्न हि, सन्देहादलक्षण"मित्यनया अयाणां ग्रहणमिति व्याख्यास्यामः। यथा "औतोम्शसोः" (६।१।९३) इत्यत्र।

इदं तर्हि प्रयोजनम्,

## २६। आन्तर्य्यतस्त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा मा भूवन्।

खट्वा+इन्द्रः 'खट्वेन्द्रः' 'खट्वा+ईषा' 'खट्वेषा' 'खट्वा+एलका' 'खट्वैलका'

---

गौर्वत्सो दम्यो बलीवर्द्द इत्यवस्थां प्राप्नोत्यथच स एवायमिति तं प्रत्यभिजानाति। भेदव्यवहारोऽपि तत्तदवस्थाभेदादस्ति।

भेदका अभेदकाश्चेति। "आम्नायशब्दा नियतस्वराः" इति वेदे गुणानां भेदकत्वम्, लोके भेदका अभेदकाश्च।

खट्वा + ऐतिकायनः 'खट्वैतिकायनः' इति । "तपरस्तत्कालस्य" (१।१।७०) इति त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा न भवन्ति । ननु तः परो यस्मात् सोऽयं तपरः । तादपि परस्तपरः । एवं सति "ऋदोरप्" (३।३।५७) इत्यत्र उकारस्य तात्परत्वात् 'यवः' 'स्तवः' इत्यत्र प्रसरः, न तु 'लवः' 'पवः' इत्यत्र ।

## २७ । तकारः मुखसुखोच्चारणार्थः । * ।

एष न तकारः किन्तर्हि तकारवदुच्चारोऽसन्देहार्थो मुखसुखार्थो वा ।

## अदेङ् गुणः । १ । १ । २ ।

म. वृ. । गुणशब्दः संज्ञात्वेन विधीयते प्रत्येकमदेङां वर्णानां सामान्येन तद्भावितमतद्भावितानाञ्च । तपरकरणन्त्विह सर्वार्थम् । 'तरिता' 'चेता' 'स्तोता' 'पचति' 'जयति' 'अहं पचे' ।

गुणप्रदेशाः 'मिदेर्गुणः' (७।३।८२) इत्येवमादयः ।

## इको गुणवृद्धी । १ । १ । ३ ।

म. वृ. । परिभाषेयं स्थानिनियमार्था । अनियमप्रसङ्गे नियमो विधीयते । वृद्धिगुणौ स्वसंज्ञया शिष्यमाणौ इक एव स्थाने वेदितव्यौ । वक्ष्यति—"सार्व्वधातुकार्द्धधातु-

---

तकार इति । "ए ओङ्" "ऐ औच्" इति सूत्रयोः (५।६४) विचारितः ।

सर्व्वार्थमिति । "तेन तरतीत्यत्र अकार एव न तु कदाचिदाकारः । न च प्रमाणत आन्तर्य्येण नियमसिद्धिः रपरत्वे कृते एकस्यार्द्धमात्रत्वादपरस्यार्द्धतृतीयमात्रत्वात् ।"

क्योः" (७।३।८४) अङ्गस्य गुण इति स इक एव स्थाने वेदितव्यः। 'तरति' 'नयति' 'भवति'। वृद्धिः खल्वपि—'अचैषीत्' 'अहार्षीत्' 'अचैषीत्' 'अनैषीत्' 'अलावीत्' 'अस्तावीत्'। गुणवृद्धी स्वसंज्ञया विधीयेते तत्र इक इति एतदुपस्थितं द्रष्टव्यम्। किं कृतं भवति? द्वितीया षष्ठी प्रादुर्भाव्यते। मिदि-मृजि-पुगन्त-लघूपध-च्छि-दृशि-क्षिप्र-क्षुद्रेषु अङ्गेनेग् विशेष्यते। जुसि-सार्वधातुकार्धधातुकादिगुणेष्विकाऽङ्गं विशेष्यते। 'भेद्यते' 'अबिभयुः'।

इक इति किम्? आत्-सन्ध्यक्षर-व्यञ्जनानां मा भूत्। 'यानं' 'ग्लायति' 'उम्भिता'।

पुनर्गुणवृद्धिग्रहणं स्वसंज्ञया विधाने नियमार्थम्। इह मा भूत्। 'द्यौः' 'पन्थाः' 'सः इमम्' इति।

भा. स. इग्ग्रहणं किमर्थम्?

## १। इग्ग्रहणमात्सन्ध्यक्षरव्यञ्जननिवृत्त्यर्थम्।

(१) आकार-(२) सन्ध्यक्षर-(३) व्यञ्जननिवृत्त्यर्थम् इग्ग्रहणं क्रियते।

(१) 'याता' 'वाता' इत्यत्राऽऽकारस्य गुणः प्राप्नोति इग्ग्रहणान्न भवति। "आतोऽनुपसर्गे कः" (३।२।३) इति ककारानुबन्धकरणेन ज्ञापयत्याचार्यः, नाऽऽकारस्य गुणो भवति, यदि स्यात् गुणकृताकारप्रत्ययाकारयोः पररूपेण 'गोदः' 'कम्बलदः' इति

आकारस्येति। वृद्धिविधावाकारस्य विशेषणाभावात् गुणस्योदाहरणं परिगृहीतम्।

रूपं सिद्धं स्यात् "आतो लोप इटि च" (६।४।६४) क्ङितीति कित्करणेनाऽऽकारलोपसाधनमनर्थकं भवेत्। सुतरां नार्थं आकारनिवृत्त्यर्थेन। नैतज्ज्ञापकं नाऽऽकारस्य गुणो भवतीत्यस्य। कथं? "तुन्दशोकयोः परिमृजापनुदोः" (३।२।५) इत्युत्तरार्थमेतत् स्यात्। यत्तर्हि "गापष्टक्" (३।२।८) तदन्यतार्थम् (६१पृ॰)।

(२) 'ग्लायति' 'म्लायति' इत्यत्र सन्ध्यक्षरस्यैकारस्य गुणः प्राप्नोति, इग्ग्रहणान्न भवति। ऐकारत्वेनोपदेशसामर्थ्यान्न भविष्यति। यदि उपदेशसामर्थ्यान्न स्यात्, तेनायादयोऽपि न प्राप्नुवन्ति। नैष दोषः,

## २। यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते ; यस्य तु विधेर्निमित्तमेव नासौ बाध्यते ॥*॥

अनर्थको हि गुणं प्रत्युपदेशः, आयादीनां पुनः स निमित्तमेव।

(३) 'उम्भिता' 'उम्भितुम्' 'उम्भितव्यम्' इत्यत्र व्यञ्जनस्य गुणः प्राप्नोति, इग्ग्रहणान्न प्राप्नोति। "सप्तम्यां जनेर्डः" (३।२।९७) इति ङित्करणेन ज्ञापयत्याचार्यो न हि

---

ऐकारस्येति। ऐकारस्य एकारस्य च द्विमात्रत्वं प्रयत्नसाम्यञ्च ततो यद्यैकारोपदेशस्तथाप्येकारो गुणो भवेत्।

ऐकारत्वेनेति। यदि ऐकारोपदिष्टानां गुणेन साध्यत एकारत्वम् ऐकारोपदेशोऽनर्थकः तेन केवलं प्रक्रियागौरवं स्यात्। सुतराम् ऐकारत्वेनोपदेशात् गुणो न भवेत्। न च वक्तव्यम्, 'ग्लै' इत्यैजुपदेश आत्वस्य (६।१।४५) निमित्तम्, 'ग्ले' इत्येवमुपदेशेऽपि तस्य प्राप्तिरव्याहता।

आयादीनामिति। ऐकारं विना न भवत्यायादेशः सुतरामैकार एव तस्य निमित्तम् निमित्तत्वान्न बाध्यते आयादेशः। न च वक्तव्यं ग्लाय इति पाठेनेष्टसिद्धिः, 'ग्लायते' इत्यादौ यकारद्वयश्रवणप्रसङ्गात्।

उम्भितेति। भकारस्योष्ठ्यत्वादोकारः स्यात् रूपन्तु भवेत् 'उम्भिता' इति।

व्यञ्जनस्य गुणः प्राप्नोति, यदि प्राप्नुयात् नकारस्य गुणेन यथान्तर्यतोऽर्द्धमात्रिकस्य व्यञ्जनस्य मात्रिकोऽकारः स्यात् तेन न+अ+अ इति त्रयाणामकाराणां पररूपेण 'उपसरजः' 'मन्दुरजः' इति रूपं सिद्धं स्यात् "टेः" (६.४।१४३) इत्यनेन डिति टिलोपसाधनमनर्थकं भवेत्। न च वक्तव्यम् असति डित्वे नकारस्थाने गुणत्वात् सानुनासिकोऽकारो भवेदिति, स तु पररूपेण शुद्धो भवतीति ज्ञापकं सिद्धम्। एवं तर्हि गमेरप्ययं डो वक्तव्यः। मकारस्य गुणे आन्तर्यत ओकारः स्यात्। तस्मादिग्ग्रहणं कर्त्तव्यत्वेन स्थितम्।

यदि इग्ग्रहणं क्रियते 'द्यौः' 'पन्थाः' 'स इम' मिति, एतेऽपि इकः प्राप्नुवन्ति।

## ३। संज्ञया विधाने नियमः।

गुणवृद्धिसंज्ञया ये विधीयन्ते तेषु नियमः। किं वक्तव्यमेतत् ? न। कथं ज्ञायते ?

---

आन्तर्यत इति। गुणे अकार एकार ओकारौ वा भवति। नकारस्य स्थाने आन्तर्यतः एकारस्य ओकारस्य च प्राप्त्यभावात् अकारोऽत्र भवति।

पररूपेणेति। "एङि पररूपम्" (६।१।९४) इत्यत्र 'एङि पर' इतीयता सिद्धे यत् रूपग्रहणं करोति तस्येदं प्रयोजनं यादृशं पररूपं तादृक् स्यात्। ततः "अतोगुणे" (६।१।९७) इत्यनेन पररूपेण निरनुनासिकोऽकारः।

तस्मादिति। आकारनिवृत्त्यर्थं सन्ध्यक्षरनिवृत्त्यर्थं सूत्रं कर्त्तव्यमिति निरस्तेऽपि व्यञ्जननिवृत्त्यर्थं सूत्रं कर्त्तव्यमिति स्थितम्।

द्यौः पन्था इति। "दिव औत्" (७।१।८४) "पथिमथ्यृभुक्षामात्" (७।१।८५) "त्यदादीनामः"(७।२।१०२) इति उत्वम् आत्वम् अत्वम् इकामेव स्यादिति 'द्यौः' 'पन्थाः' 'स इमम्' इति पदोपन्यासः "स इमं मन्त्रमपश्यत्" इति ब्राह्मणवाक्यादुदाहरणग्रहणात्, अथवा "त्यदादीनामः" इति विधिवाक्ये इक इत्यस्योपस्थितिप्रदर्शनाय। तत्र इक इत्यस्योपस्थितौ हीदमोरेव अत्वं स्यान्नान्येषाम्।

गुणवृद्धिसंज्ञयेति। "दिव औत्" इत्यादिषु गुणवृद्धिशब्दो न दृश्यते सुतरां तत्र इको न गुणो वृद्धिर्वा। यत्र तु गुणवृद्धिसंज्ञया विधानं तत्रैव इकः गुणवृद्धी भवतः।

गुणवृद्धिग्रहणेऽनुवर्त्तमाने पुनर्गुणवृद्धिशब्दग्रहणेन। यद्यनुवर्त्तते गुणवृद्धिग्रहणं, "अदेङ् गुणः" (१।१।२) वृद्धिश्च इति अदेङां वृद्धिसंज्ञा च प्राप्नोति। "अदेङ्गुण" इत्यत्र आदैज्ग्रहणसम्बद्धं वृद्धिग्रहणमनुवर्त्तते। "वृद्धिरादैच्" (१।१।१) "अदेङ् गुणः" (१।१।२) वृद्धिरादैच्, ततः "इको गुणवृद्धी" (१।१।३) अदेङादैज्ग्रहणं निवृत्तम्। अथवा

## ४। मण्डूकप्लुतयोऽधिकाराः। *।

मण्डूकप्लुत्या "अदेङ् गुण" इत्यत्र वृद्धिशब्दो नानुवर्त्तते "इको गुणवृद्धी" इत्यत्र। अथवा "वृद्धिरादैजदेङ् गुणः इत्येकयोगः। न ह्येकयोगेऽनुवृत्तिर्भवति। अथवा,

## ५। अन्यवचनाच्चकाराकरणाच्च प्रकृतापवादो विज्ञायते यथोत्सर्गेण प्रसक्तस्यापवादो बाधको भवति।

"अदेङ् गुणः" इत्यन्यस्याः संज्ञाया वचनात् अनुकर्षणार्थस्य चकारस्याकरणात्

---

"वृद्धिरादैच्" "अदेङ् गुणः" इत्यतो गुणवृद्धिशब्दावनुवर्त्तेते, तथापि पुनर्गुणवृद्धिशब्दाश्रयणात् प्रदर्श्यते यत्र गुणवृद्धिसंज्ञया विधीयन्ते तत्रैव इक इत्यस्योपस्थितिः।

यद्यनुवर्त्तत इति। "वृद्धिरादैच्" इत्यतो "अदेङ् गुणः" इत्यत्र वृद्धिरनुवर्त्तते ततोऽदेङित्यस्य गुणवृद्धी इत्युभयसंज्ञे प्रवर्त्तेते। न तु "वृद्धिरादैच्" इत्यत्र गुणसंज्ञापि तत्रानुवर्त्तनविरहात्।

आदैज्ग्रहणसम्बद्धमिति। "सम्बन्धमनुवर्तिष्यते" इति भाष्यस्य, अर्थग्रहणेन आदैज्ग्रहणसम्बद्धमिति। "सम्बध्यते इति सम्बन्धम्, कर्मणि घञ्, नपुंसकस्याभिधेयत्वात् नपुंसकनिर्द्देशः।" "अदेङ् गुण" इत्यत्र "वृद्धिरादैज्" इति संज्ञासंज्ञिसम्बन्धमपरित्यज्यैव पूर्वं सूत्रमनुवर्त्तते, तेन वृद्धिशब्दस्य अदेङ्भिन्नं सम्बन्धः।

एकयोग इति। "वृद्धिरादैजदेङ्गुणः" इति एकस्मिन् योगे कृते नानुवृत्तिः

प्रकृताया वृद्धिसंज्ञाया गुणसंज्ञा बाधिका भविष्यति, यथोत्सर्गेण प्रसक्तस्यापवादो बाधको भवति। अथवा वक्ष्यत्येतत् "अनुवर्त्तन्ते च नाम विधयो न चानुवर्त्तनादेव भवन्ति, किन्तर्हि यत्नाद्भवन्ती"ति। अथवा उभयं निवृत्तं, यन्निवृत्तं तदिहापेक्षिष्यामहे।

किं पुनरयमलोऽन्त्यशेषः, आहोस्विदलोऽन्त्यापवादः? "इको गुणवृद्धी" "अलोऽन्त्यस्य"

---

सम्भवति यतः सूत्रमध्ये न कदाचिदनुवृत्तिर्भवति परसूत्रे हि ततोऽनुवृत्तिः। एकयोगे तु आदैच्सम्बद्धा वृद्धिसंज्ञा, अदेङ्सम्बद्धा गुणसंज्ञा।

बाधिकेति। अदेङ् गुण इत्यत्र वृद्धिशब्दानुवृत्तौ सन्देहः किमुत्तरार्थैवेहानुवृत्तिः अथवा इहार्थापि। अदेङां गुणसंज्ञा कृता, सा च असन्दिग्धा, अनवकाशा, तात्पर्यान्विता, सुतरां तया सावकाशा तात्पर्यविरहिता वृद्धिसंज्ञा बाध्यते। यथा "कर्मण्यण्" (३।२।१) इति विधीयमानोऽण् "आतोऽनुपसर्गे कः"(३।२।३) इति कप्रत्ययेनासन्दिग्धत्वादनवकाशत्वात्तात्पर्याच्च बाध्यते। "कर्मण्यण्" इत्युत्सर्गः तेन प्रसक्तस्य "आतोऽनुपसर्गे कः" इत्यपवादो बाधकः।

वक्ष्यत्येतदिति। "विभाषा तिलमाषोमाभङ्गाणुभ्यः" (५।२।४) इत्यत्र वक्ष्यते। "धान्यानां भवने क्षेत्रे खञ्" (५।२।१) "व्रीहिशाल्योर्ढक्" (५।२।२) "यवयवकषष्टिकाद्यत्" (५।२।३) "विभाषा तिलमाषोमाभङ्गाणुभ्यः (५।२।४), इत्येतेषु "विभाषा तिलमाषे"त्यत्र उमाभङ्गयोरधान्यत्वात् यतो सूक्ते 'धान्याना"मिति खञ् प्राप्नोति। "धान्याना"मित्यतः खञ् अनुवर्त्तते। अनुवर्त्तमानोऽपि यत्नाभावात् "व्रीहिशाल्योः" "यवयवकषष्टिकादि"त्यत्रत्यैर्व्रीह्यादिभिर्न सम्बध्यते विभाषाश्रवणात् "विभाषा तिलमाषे"त्यत्र तिलादिभिः सम्बध्यते। एवं "अदेङ् गुणः" इत्यत्र अनुवर्त्तमानोऽपि वृद्धिशब्दः यत्नाभावाददेङ्भिः सह न सम्बध्यते, "इको गुणवृद्धी" इत्यत्र सम्बध्यते पुनर्गुणवृद्धिग्रहणयत्नवशात्।

उभयं निवृत्तमिति। स्वरितलिङ्गानुषङ्गेन नानुवृत्तिराश्रिता। सुतराम् उभयं निवृत्तम्। निवृत्तस्य पुनरिहापेक्षा।

(१।१।५२) इति चेत्, तच्छेषः, "इको गुणवृद्धी" अन्त्यस्य चानन्त्यस्य चेति चेत्, तदपवादः । कश्चात्र विशेषः ?

## ६ । वृद्धिगुणावलोऽन्त्यस्येति चेन्मिदिमृजि-पुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेष्विग्ग्रहणम् ।

वृद्धिगुणौ अलोऽन्त्यस्येति चेत् मृजादिष्विग्ग्रहणं कर्त्तव्यम् । "मिदेर्गुणः" (७।३।८२) "मृजेर्वृद्धिः" (७।२।११४) "पुगन्तस्य लघूपधस्य च" (७।३।८६) गुणः, "ऋच्छत्यृताम्" (७।४।११) लिटि गुणः, "ऋदृशोऽङि गुणः" (७।४।१६), क्षिप्रक्षुद्रयोर्गुणः (६।४।१५६) इत्येतेषु इक इति वक्तव्यम् । यतोऽनन्त्यत्वान्न प्राप्नोति ।

## ७ । सर्वादेशप्रसङ्गश्चानिगन्तस्य ।

अलोऽन्तस्येति चेत् 'वाता' 'याते'त्यत्र अनिगन्तस्य सर्वादेशश्च गुणः प्राप्नोति । कथम्?

---

तच्छेष इति । "अङ्गस्य" (६।४।१) इत्यधिकारसूत्रे षष्ठीनिर्देशात् "अलोऽन्तस्य" (१।१।५२) इत्यस्य तदधिकारगतगुणशब्देन इक उपस्थितिः । "इको गुणवृद्धी" इत्यत्र श्रूयमाणेन इका पूर्व्वमङ्गं विशिष्य इगन्तस्याङ्गस्य गुणो भवतीति यदि साध्यते तदा "अलोऽन्तस्ये"त्यन्त्यस्य गुणो भवन् तदनुगतत्वात् तच्छेषः । यदि पुनः पूर्व्वमेव अङ्गस्येति षष्ठ्या अङ्गान्त्यस्य गुण इति साध्यते पश्चात् इकान्त्योऽल् विशेष्यते तदापि तस्य विशेषणत्वात् तच्छेषः ।

अपवाद इति । "अङ्गस्य" (६।४।१) इति यदा न स्थानषष्ठी किन्तु इगपेक्षयावयवषष्ठी तदा स्थानषष्ठ्यभावात् "अलोऽन्त्यस्ये"त्यस्यानुपस्थानम् । सुतराम् "अलोऽन्त्यस्या"-पवादः ।

इग्ग्रहणमिति । "मिदेर्गुणः" इत्यादौ इगनन्त्यः सुतरां "अलोऽन्त्यस्ये"त्यस्य न प्राप्तिः, गुणार्थन्तु अङ्गावयवस्यस्य इको ग्रहणाय इक इति ग्रहणं कर्त्तव्यं भवति ।

"अलोऽन्त्यस्ये"ति षष्ठी अन्त्यमिकमुपसंक्रान्ता । "अङ्गस्य" (६।४।१) इति स्थानषष्ठी । तदनिगन्तस्याङ्गस्य सर्व्वादेशः प्राप्नोति । नैष दोषः । यथैव हि "अलोऽन्त्यस्ये"ति षष्ठी अन्त्यमिकमुपसंक्रान्ता तथैव हि "अङ्गस्ये"ति स्थानषष्ठी अन्त्यमलं नीता । अनिगन्तेऽङ्गे नासावन्या षष्ठी तत् कुतो गुणः सर्व्वादेशो वा । एवं तर्हि "सर्व्वादेशप्रसङ्गश्चे"त्यत्र चकारो न दोषसमुच्चयार्थः पूर्व्वप्रदर्शितदोषस्य हेतुद्योतकार्थं पठितः । तथाहि "मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रचुद्र्यांष्वग्रहणं सर्व्वादेशप्रसङ्गो ह्यनिगन्तस्येति" । तद्यथा, "मिदेर्गुणः" इत्यत्र "इकः" इति वचनात् अन्त्यस्य न, "अलोऽन्त्यस्ये"ति वचनात् इको न, उच्यते च गुणः, स सर्व्वादेशः प्राप्नोति । एवं सर्व्वत्र ।

अस्तु तर्हि तदपवादः ।

## ८। इङ्मात्रस्येति चेज्जुसिसार्व्वधातुकार्द्धधातुकह्रस्वाद्योर्गुणेष्वनन्त्यप्रतिषेधः ।

वृद्धिगुणौ इङ्मात्रस्येति चेत् जुसादिषु यो गुणस्तत्रानन्त्यप्रतिषेधो वक्तव्यः । अन्यथा

---

नास्त्यन्या षष्ठीति । "अलोऽन्त्यस्ये"त्यनेन यथा षष्ठी अन्त्यमलमुपसंक्रामति, तथा "अङ्गस्ये"ति षष्ठ्यपि अन्त्यमलमुपसंक्रामति, सुतराम् उभयत्र षष्ठ्या एकरूपत्वात् अनिगन्तस्याङ्गस्य न सम्भवति सर्व्वादेशगुणप्रसङ्गः यतः षष्ठ्याऽन्त्यमलं नीता । अङ्गस्येत्यनेन सर्व्वाङ्गं व्याप्नुवाना षष्ठीत्यन्या षष्ठी चेत् स्यात् सम्भवेत् सर्व्वादेशः ।

उच्यते चेति । मिदेरित्युक्त्वा यो गुण उच्यते स सर्व्वादेशः प्राप्नोति उभयत्रासम्भवात् ।

इङ्मात्रस्येति । "अङ्गस्य" (६।४।१) इति इगपेक्षया अवयवषष्ठी । सुतराम् स्थानषष्ठ्या अलोऽन्त्यपरिभाषाया अनुपस्थानात् अङ्गावयवस्य यत्र तत्र स्थितस्येको गुणवृद्धी भवतः, निर्द्दिष्टस्थानिकत्वाभावाच्च परिभाषोपस्थितिर्येन, "ऋतस्य गुणः" (७।३।१०८) "जुसि च" (७।३।१०९) इत्येतयोः ऋतेनेग् विशेष्यते ततो ऋतसंज्ञको गुणो भवति न दीर्घस्य ।

(१) "जुसि च" (७।३।८३) गुण इत्यनेन "अजुहवुः" "अबिभयुः" इत्यत्र यथा तथा "अनेनिजुः" 'पर्यवेविषुः' इत्यत्र ; (२) "सार्व्वधातुकार्द्धधातुकयोः" (७।३।८४) गुण इत्यनेन 'कर्त्ता' 'हर्त्ता' 'नयति' 'तरति' 'भवति' इत्यत्र यथा तथा 'ईहितुम्' 'ईहितव्यम्' इत्यत्र ; (३) "ह्रस्वस्य गुणः" (७।३।१०८) इत्यनेन 'हे अग्ने' 'हे वायो' इत्यत्र यथा तथा 'हे अग्निचित्' 'हे सोमसुत्' इत्यत्र ; (४) "जसि च" (७।३।१०९) गुण इत्यनेन 'अग्नयः' 'वायवः' इत्यत्र यथा तथा 'अग्निचितः' 'सोमसुतः' इत्यत्र ; (५) "ऋतो ङिसर्व्वनामस्थानयोः" (७।३।११०) गुण इत्यनेन 'कर्त्तरि' 'कर्त्तारौ' 'कर्त्तारः' इत्यत्र यथा तथा 'सुकृति' 'सुकृतौ' सुकृतः' इत्यत्र ; (६) "घेर्ङिति" (७।३।१११) गुण इत्यनेन 'अग्नये' 'वायवे' इत्यत्र यथा तथा 'अग्निचिते' 'सोमसुते' इत्यत्र ; (७) "ओर्गुणः" (६।४।१४६) इत्यनेन 'बाभ्रव्यः' 'माण्डव्यः' इत्यत्र यथा तथा 'सुश्रुत' 'सौश्रुतः' इत्यत्र— गुणः प्राप्नोति । नैष दोषः ।

## ९ । पुगन्तलघूपधग्रहणमनन्त्यनियमार्थम् ।

पुगन्तलघूपधस्यैवानन्त्यस्य नान्यस्यानन्त्यस्येति नियमार्थं पुगन्तलघूपधग्रहणं भविष्यति। "सार्व्वधातुकार्द्धधातुकयोः" (७।३।८६) इति प्रकृतस्यैव नियमः । तेन 'ईहिता' 'ईहितुम्' 'ईहितव्यम्' इत्यत्रानन्त्यस्य प्राप्तो गुणो नियमान्न स्यात् ; ह्रस्वाद्योर्गुणस्तु अनियतः सुतरामनन्त्यस्यापि स प्राप्नोति । अथ चेत् एवं नियमः स्यात्—पुगन्तलघूपधस्य

---

"ऋतो ङिसर्व्वनामस्थानयोः" (७।३।११०) "ओर्गुणः" (६।४।१४६) इत्युभयत्र अनन्त्यस्यापि ऋकारस्य उकारस्य गुणविधानार्थं परिभाषोपस्थितिः । "घेर्ङिति" (७।३।१११) इत्यत्र 'अग्निचिते' इत्यादौ अतिप्रसङ्गः ।

अथ चेदिति । "सार्व्वधातुकार्द्धधातुकयोः" (७।३।८४) इत्यनन्तरम् "पुगन्तलघूपधस्य च" (७।३।८५) अतएव यदि सार्व्वधातुकार्द्धधातुकयोर्लघूपधस्यैव नियमः स्यात् तदा "ह्रस्वादौ" गुणो ह्यनियतः सुतरां तत्रानन्त्यस्यापि गुणः प्राप्नुयात् । अथ यदि सार्व्व-

सार्व्वधातुकार्द्धधातुकयोरेवेति, तदा सार्व्वधातुकार्द्धधातुकयोर्गुणोऽनियतः, सुतरां 'ईहिता' 'ईहितुम्' 'ईहितव्यम्' इत्यत्रानन्त्यस्यापि स प्राप्नोति। अथ चेत् उभयतो नियमः स्यात्—पुगन्तलघूपधस्यैव सार्व्वधातुकार्द्धधातुकयोः सार्व्वधातुकार्द्धधातुकयोरेव पुगन्तलघूपधस्येति, तथापि लुङि गुणोऽनियतः, सुतराम् 'अनेनिजुः' 'पर्य्यवेविषुः' इत्यत्रानन्त्यस्यापि प्राप्नोति।

एवं तर्हि नायं तच्छेषः, नापि तदपवादः। अनया परिभाषयाऽसम्बद्धमन्यदेवेदं परिभाषान्तरम्। परिभाषान्तरमिति च मत्वा क्रोष्टीयाः पठन्ति।

## १०। नियमादिको गुणवृद्धी भवतो विप्रतिषेधेन।

"अलोऽन्त्य"परिभाषाया इको गुणवृद्धी भवतो विप्रतिषेधेन। यद्येवं तदा तच्छेषे स्याङ्गेन सस्य विप्रतिषेधोऽयुक्तः। तदपवादे तु, उत्सर्गापवादयोरप्ययुक्तो विप्रतिषेधः।

---

धातुकार्द्धधातुकयोरेवेति लघूपधस्य नियमः तदा "ऋत्वाद्यो"र्गुणः नियतः, 'ईहिते'-त्यादौ अनियतः, सुतरां तत्रानन्त्यस्यापि गुणः प्राप्नोति। उभयतो नियमेऽपि 'अने-निजुः' इत्यत्र दोषः, यतः अत्रमिह लघूपधम् सार्व्वधातुकञ्चेत्युभयमस्ति सुतरां लुङि गुणः प्राप्नोति। एवञ्च 'हे पितव्य' 'हे बुद्धे' 'हे बुद्धयः' इत्यत्र अलघूपधत्वात् अनन्त्यस्य गुण-प्रसङ्गः।

अनया परिभाषयेति। अनया "अलोऽन्त्यस्ये"ति परिभाषया असम्बद्धम् "इको गुणवृद्धी" इति परिभाषान्तरम्। परिभाषाद्वयं परस्परानपेक्षं कदाचिदेकत्र सन्नि-पातेऽपि न परस्परापेक्षि।

नियमादिति। 'नियमः' इति अलोऽन्त्यपरिभाषायाः पूर्व्वाचार्य्यसंज्ञा।

स्याङ्गेन स्यस्येति। तच्छेषे परिभाषाद्वयस्यैकत्वं तदा नास्ति तत्र तुल्यबलविरोध-सम्भावना।

तत्र "राज्ञः क च" (४।२।१४०) राजकीयमित्यत्रालोऽन्त्यपरिभाषाया अवकाशः। 'चयनं' 'चायको' 'लवनं' 'लावकः' इत्यत्र "इको गुणवृद्धी" इत्यस्यावकाशः, 'मेद्यति' 'मार्ष्टि' इत्यत्र "इको गुणवृद्धी" "अलोऽन्त्यस्य" इत्युभयं प्राप्नोति। विप्रतिषेधेन "इको गुणवृद्धी" इत्येतद्भवतीति चेत् न सिद्ध्यति विप्रतिषेधः। कथम्? "इको गुणवृद्धी" इति पूर्व्वः, "अलोऽन्त्यस्ये"ति परो योगः। "विप्रतिषेधे परं कार्य्यम्" (१।४।२) इति "इको गुणवृद्धी" इत्यस्य पूर्व्वस्य कार्य्याय न भवति। इष्टवाची अयं परशब्दः। विप्रतिषेधे परं यदिष्टं तद्भवतीति। एवमपि न सिद्ध्यति विप्रतिषेधः। कथम्? यत्र स्थानिनः द्वाभ्यां कार्य्याभ्यां योगस्तत्र भवति विप्रतिषेधः। न चात्रैकः स्थानी द्विकार्य्ययुक्तः। न हि केवलं यत्रास्ति द्विकार्य्ययोगस्तत्रैव विप्रतिषेधः यत्रांश्यसम्भवस्तत्रापि विप्रतिषेधो भवति, तद्यथा 'वृक्षेभ्यः' 'प्लक्षेभ्यः' इत्यत्र "अतो दीर्घो यञि" (७।३।१०१) "सुपि च" (७।३।१०२) इत्यनेन दीर्घत्वम् "बहुवचने झल्येत्" (७।३।१०३) इत्यनेन एत्वम्। एको हि स्थानी द्वौ पुनरादेशौ, न हि कदाचिदेकस्य स्थानिनः द्वावादेशौ सम्भवतः। 'मेद्यति' 'मेद्यतः' 'मेद्यन्ति' इत्यत्र इकारदकाररूपौ द्वौ स्थानिनावेको गुण आदेशः। न हि सम्भवति द्वयोः स्थानिनोरेक आदेशः। सुतरां सत्येतस्मिन्नसम्भवे युक्तो विप्रतिषेधः।

एवमप्ययुक्तो विप्रतिषेधः। द्वयोर्हि सावकाशयोः समवस्थितयोः विप्रतिषेधो भवति,

---

चायक' इति। "अचो ञ्णिति" (७।२।११५) इत्यत्र अच इति स्थानिनिर्द्देशोऽस्ति, तत् कथम् इक्परिभाषाया उपस्थितिः, तस्या हि अनिर्द्दिष्टस्थानिकत्वे समुपस्थितेः। अच इत्यङ्गविशेषणम् सुतरां तस्य स्थानित्वाभावात् वृद्धिग्रहणेन लिङ्गेन इक्-परिभाषायाः समुपस्थितिः।

उभयमिति। 'मेद्यति' इत्यादिषु "इको गुणवृद्धी" इत्यनेन 'मिदेः' इकारस्य, "अलोऽन्त्यस्य" इत्यनेन दकारस्य प्राप्नोति।

न चात्रेति। यत्र एकस्य स्थानिनः द्वाभ्यां कार्य्याभ्यां योगो भवति तत्रैव विप्रति-षेधः, अत्र तु द्वौ स्थानिनौ इकारदकाररूपेण, गुण इति एक आदेशः।

न चायं योगः सावकाशः। ननु 'चयनं' 'चायकः' 'लवनं' 'लावकः' इत्यत्रास्यावकाशः "अलोऽन्त्यस्या"पि। एवं सति नाप्राप्तेऽपि यदयं योग आरभ्यते तेनायमपवादः।

## ११। उत्सर्गापवादयोश्चायुक्तो विप्रतिषेधः।

अथापि चेत् 'मेद्यति' 'मेद्यतः' 'मेद्यन्ति' इत्यत्र कथञ्चित् विप्रतिषेधेनेको गुणो भवति, तदा "अनेनिजुः" 'पर्य्यवेविषुः' इत्यत्रापि प्राप्नोति। एवन्तर्हि

## १२। वृद्धिर्भवति गुणो भवतीति यत्र ब्रूयात् इक इति तत्रोपस्थितं द्रष्टव्यम्।

गुणवृद्धी स्वसंज्ञया यत्र विधीयेते तत्र इक इति एतदुपस्थितं द्रष्टव्यम्। किं कृतं भवति? द्वितीया षष्ठी प्रादुर्भाव्यते। तत्र कामचारः, गृह्यमाणेन वा इक् विशेष्यते इका वा गृह्यमाणं विशेष्यते। मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेषु गृह्यमाणेनेक् विशेष्यते, एतेषां य इगिति। जुसिसार्व्वधातुकार्द्धधातुकह्रस्वाद्योर्गुणेष्विका गृह्यमाणं विशेष्यते। एतेषां गुणो भवति इकः, इगन्तानामिति। अथवा सर्व्वत्रैवात्र स्थानी निर्द्दिश्यते, तद्यथा मिदेर्गुणः (७।३।८२) इत्यत्र मिदेरिति अविभक्तिकः मिद ततः एः मिदेः, अथवा मिदः इः मिदिः, ततः मिदेः। "पुगन्तलघूपधस्य"(७।३।८६)

---

नाप्राप्तेऽपीति। अलोऽन्त्यपरिभाषायाः प्राप्तिसम्भावनायामपि आरभ्यते यदयं योगः "इको गुणवृद्धी" इति ततोऽयं तस्यापवादः।

द्वितीया षष्ठीति। "मिदेर्गुणः" "मृजेर्वृद्धिः" इत्यादिषु गुणवृद्धिशब्दाभ्यां इक इति षष्ठ्यन्तं पदमुपस्थितं भवति। ततो मिदेरिकः मृजेरिक इति स्थिते सामानाधिकरण्यस्यासम्भवात् मृदिमृज्योरवयवस्य इक इति सम्बध्यते। तेनेह अवयवषष्ठी स्थानषष्ठीति द्वयोर्युगपदुपस्थानं भवति।

गृह्यमाणेनेति। गृह्यमाणं हि अङ्गम्। तेन गृह्यमाणेन अङ्गेनेति विस्पष्टम्।

इत्यत्र पुगन्ताङ्गस्य लघूपधस्य चेति न, किन्तर्हि पुकि अन्तः पुगन्तः लघ्वी उपधा लघूपधा पुगन्तश्च लघूपधा च पुगन्तलघूपधम् तस्य पुगन्तलघूपधस्येति। अङ्गविशेषणे सतीह प्रसज्येत 'भिनत्ति' 'छिनत्ति' इति। "ऋच्छत्यृताम्"(७।४।११) इत्यत्र ऋच्छति ऋ ॠ ऋताम् इति प्रश्लिष्टनिर्देशः। "ऋदृशोऽङि गुणः" (७।४।१६) इत्यत्र योगं विभज्य उः अङि गुणः, ततः दृशेः उः अङि गुणः। "स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः" (६।४।१५६) इत्यत्र यणादिपरं गुण इतीयता सिद्धे यत् पूर्वग्रहणं करोति तस्यैतत् प्रयोजनम् इको यथा स्यादनिकां मा भूदिति।

अथ वृद्धिग्रहणं किमर्थम्? गुणग्रहणस्यापि यत् प्रयोजनं वृद्धिग्रहणस्यापि तत्। को वात्र वृद्धिग्रहणे विशेषः? अयमस्ति विशेषः। गुणविधौ न क्वचित् स्थानी निर्दिश्यते, सुतरां स्थानिनिर्देशार्थं गुणग्रहणं कर्त्तव्यम्, वृद्धिविधौ तु सर्वत्र स्थानी निर्दिश्यते। तद्यथा "अचो ञ्णिति" (७।२।११५) इत्यत्र अच इति, "अत उपधायाः" (७।२।११६) इत्यत्र अत इति, "तद्धितेष्वचामादेः" (७।२।११७) इत्यत्र अचाम् आदेरचः इति स्थानिनिर्देशः। अत उत्तरं पठति।

---

अनिक इति। स्थूलादीनां यणादिलोपे गुणे कृते रूपसिद्धिः यथा स्थूल इत्यस्य ललोपे गुणे कृते 'स्थवीयान्' 'स्थविष्ठः' इति पदसिद्धिः न तथा क्षिप्रक्षुद्रयोः। तयोरलोपे क्षिप् क्षुद् इत्याकारेणावस्थितिः। सुतरां अनिको मा भूदिति पूर्वस्य गुण इत्यपेक्षितम्। अतएव "स्थूलदूरे"ति सूत्रस्य योगं विभज्य स्थूलादिषु यणादिलोपे सति ओर्गुणः, क्षिप्रक्षुद्रयोस्तु पूर्वस्य इको गुणः।

न क्वचिदिति। क्वचिन्न निर्दिश्यत इति नञो व्यवहितेन सम्बन्धः। क्वचिन्निर्दिश्यत एव "ओर्गुणः" (६।४।१४६) इत्यादौ।

स्थानिनिर्देश इति। 'मिद एः' 'मिदः इः मिदेः' इत्यादिरीत्या स्थानिनिर्देशं साधयित्वा तच्छेषपक्षस्य दोषोद्धारः कृतः। "पुगन्तलघूपधस्ये"त्यत्रापि पुकि अन्तः पुगन्तः लघ्वी उपधा लघूपधा इति निर्दिश्य स्थानिनिर्देशः सम्भावितः। एवं तच्छेषपक्षाश्रयणे पुगन्तस्य लघूपधस्येत्यत्र इक्परिभाषाया अनुपस्थितिः। अनुपस्थानात् तस्य गुणस्य

## १३। वृद्धिग्रहणमुत्तरार्थम् ।

"क्ङिति च" (१।१।५) इति प्रतिषेधं वक्ष्यति स वृद्धेरपि यथा स्यात् तदर्थं वृद्धि-ग्रहणं क्रियते। "मृजेर्वृद्धिः" (७।२।११४) इत्यविशेषेण वृद्धिरुक्ता सा यथा 'मृष्टः' 'मृष्टवान्' इत्यत्र क्ङिति मा भूत्। ननु "मृजेर्वृद्धि" इत्यत्राविशेषेणोक्ता वृद्धिरनिको मा भूदित्यर्थमपि वृद्धिग्रहणं कर्त्तव्यम्।

## १४। मृज्यर्थमिति चेद्योगविभागात्सिद्धम्।

वृद्धिग्रहणं चेत् मृज्यर्थं कर्त्तव्यम्, मृजेर्वृद्धिः अचः, ततो ञ्णिति (अचः) इति योग-विभागात् सिद्धम्। यद्यचः वृद्धिरुच्यते तदा 'न्यमार्ट्' इत्यत्र अटोऽपि वृद्धिः प्राप्नोति। "अनन्त्यविकारेऽन्त्यसदेशस्य कार्य्यं भवती"ति परिभाषया अटो न वृद्धिः। भवतु तावत् "मृजेर्वृद्धिरचः"। एवं स्थिते

---

अनिग्लक्षणत्वात् 'भिन्नं' 'छिन्नम्' इत्यादौ "क्ङिति" (१।१।५) इति गुणनिषेधो न प्राप्नोति। "त्रसिगृधिधृषिक्षिपेः क्नुः" (३।२।१४०) इत्यत्र क्नोः कित्त्वस्यानिग्लक्षणत्वे-ऽपि गुणनिषेधप्रवृत्तिज्ञापकत्वात् लघूपधगुणस्यानिग्लक्षणत्वेऽपि गुणनिषेधो भविष्यति। क्नुरिति कित्त्वेन क्ङिन्निमित्ते ये गुणवृद्धी प्राप्नुतः ते न भवत इति। पदोपस्थितिर्भवतीति व्यक्तं पश्यन्तः कैयटाश्रितज्ञापकपक्षमन्ये न बहु मन्यन्ते, ते 'क्नु'रित्यत्र पदोपस्थितिपक्षं वर्णयन्ति।

अनन्त्यविकार इति। "अनन्त्यविकारेऽन्त्यसदेशस्य" इति परिभाषा। अन्त्यविकार-विरहिते एकस्मिन् प्रयोगे यत्र अन्त्यसदेशस्य अनन्त्यसदेशस्य च प्राप्तिः तत्र अन्त्यस-देशस्य कार्य्यं भवतीति परिभाषार्थः। न्यमार्ट् इत्यत्र लावस्थायामटि कृते अ+मृज्+त एवं स्थिते अन्त्यसदेशस्य ऋकारस्य अनन्त्यसदेशस्य अटो वृद्धौ प्राप्तायाम् अन्त्य-सदेशस्य ऋकारस्य वृद्धिर्भवतु अनन्त्यसदेशस्य अटः।

## १५ । वृद्धिप्रतिषेधानुपपत्तिरिक्प्रकरणात् ।

इक्प्रकरणात् इग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः, सुतरां वृद्धेस्तु प्रतिषेधो नोपपद्यते । तस्मान्मृजेरिग्लक्षणा वृद्धिरेषितव्या ।

इहान्ये वैयाकरणाः, मृजेरजादौ संक्रमे विभाषा वृद्धिमारभन्ते,—'परिमृजन्ति' 'परिमार्ज्जन्ति' 'परिमृजतुः' 'परिममार्जतुः' इत्याद्यर्थम् । "मृजेर्वृद्धिरचः" इत्यत्र तत्साध्यम् । यथा—"मृजेर्वृद्धिरचः" ततः "अचि क्ङिति" अचि क्ङिति मृजेर्वृद्धिर्भवति—'परिमार्जन्ति' 'परिममार्ज्जतुः' । इदन्तु नियमार्थं स्यात्, तेन अजादावेव क्ङिति नान्यत्रेति नियमात् 'मृष्टः' 'मृष्टवान्' इत्यत्र मा भूत् । ततः, "वा" । वा अचि मृजेर्वृद्धिर्भवति—'परिमृजन्ति' 'परिमार्ज्जन्ति' 'परिमृजतुः' 'परिममार्जतुः' इति ।

सिजर्थमेव तर्हि वृद्धिग्रहणं कर्त्तव्यम् । "सिचि वृद्धिः परस्मैपदेषु" (७।२।४) इत्यत्र, अविशेषेण वृद्धिरुच्यते सा इको यथा स्यात्, अनिको मा भूत् । कस्य पुनरनिकः प्राप्नोति ? 'अचिकीर्षीत्' 'अजिहीर्षीत्' इत्यत्र अकारस्य । पूर्व्वविप्रतिषेधात् "अतो लोपः" इति लोपोऽत्र वृद्धेर्बाधकः । तर्हि 'अयासीत्' 'अवासीत्' इत्यत्र आकारस्य वृद्धिः

---

संक्रम इति । गुणवृद्धिनिषेधविषयक्ङितः प्राचां संज्ञा ।

साध्यमिति । यत्नेन निष्पाद्यम् । "मृजेर्वृद्धिरचः" इति योगविभागात् सिद्धम् । अस्मिन्नेव "क्ङिती"ति सूत्रं सम्बध्य अचि क्ङितीति निष्पन्नम् । ततो वेति यत्नसाध्यमेव व्याकरणान्तरमतेन ।

अकारस्येति । कृधातोः सन्नन्तात् 'चिकीर्ष' इत्यकारान्तो धातुः । सुतराम् उक्तानिकोऽकारस्य प्राप्नोतीति, अत्र वृद्धिदीर्घाभ्यां पूर्व्वविप्रतिषेधेन "अतो लोपः" (६।४।४८) इत्यस्य प्राप्तिः, यथा 'चिकीर्षक' इत्यत्र, सुतरां लोपोऽत्र बाधक इत्युक्तम् ।

प्राप्नोति। वृद्धौ सत्यां नास्यत्र रूपे विशेषः। सन्ध्यचरस्य तर्हि वृद्धिः प्राप्नोति। नास्यन्तं सन्ध्यचरम्। ननु चेदमस्ति ढलोपे कृते 'उदवोढ़ाम्' 'उदवोढ़म्'। ढलोपस्यासिद्धत्वा-

---

नास्यत्रेति। द्वावपि त्वाकारत्वेन स्थितत्वात्।

नास्यन्तमिति। सन्ध्यचरान्तानां धातूनामुपदेशे आत्वविधानात् "आदेच उपदेशेऽशिति" (६।१।४५) इत्यनेन।

ढलोपस्येति। 'उदवोढा'मित्यत्र उत्+वह+साम् इति स्थिते ढत्वसलोपादीनां "पूर्व्वत्रासिद्ध"मित्यनेनासिद्धत्वात् पूर्व्वं वदव्रजहलन्तस्याचः"(७।२।३) इत्यनेन पूर्व्वं हलन्तलचणा वृद्धिः क्रियते, पश्चात् "हो ढः"(८।२।३१) इत्यनेन हकारस्य ढकारादेशः "झलो झलि" (८।२।२६) इत्यनेन ढकारस्यासिद्धत्वे हकारतकारमध्यगतसकारस्य लोपः ततः "झषस्तथोर्धोऽधः (८।२।४०) इत्यनेन तकारस्य धत्वम्। "ष्टुना ष्टुः (८।४।४१) इत्यनेन धकारस्य ढत्वं। ढत्वस्य सिद्धत्वात् "ढो ढे लोपः" (८।३।१३) इत्यनेन ढकारलोपः, ढलोपे वृद्धौ आकारभूतस्य उदवाढामित्यस्याकारस्य स्थाने "सहिवहोरोदवर्णस्य" (६।३।११२) इति ओकारः "सहिवहोरोदवर्णस्ये"त्यत्र वर्णग्रहणं कृतायामपि वृद्धौ यथा स्यादित्यर्थम्। अत्र ढलोपस्यासिद्धत्वात् ओकारान्तत्वाभावात् न भवेदोकारस्य वृद्धिः। असिद्धत्वं हि कृतेऽपि अकृतवत् प्रतिभानं, यथाच लोपेऽपि अलुप्तवत् ग्रहणम्। ननु गो-शब्दात् "सर्व्वप्रातिपदिकेभ्य आचारे क्विप् वक्तव्यः। *।" इत्यनेन आचारक्विपि 'गो' इति "सनाद्यन्ता धातवः" (३।१।३२) इति धातुः निष्पन्नस्तत्र सन्ध्यचरान्तत्वमस्ति ततो यत् 'अगवीत्' इति पदं सिद्ध्यति तत्र ओकारस्य वृद्धिः प्राप्नोतु ? "उत इद्धातोः" (७।१।१००) इत्यतो धातोरित्यनुवर्त्त्य सिजाचिप्तस्य धातोर्विशेषणे धातोरेव धातोर्न तु नामधातोरिति व्याख्यानात् न दोषः। माधवस्तु नामधातोरपि वृद्धिमिच्छति ततः कविशब्दात् आचारक्विपि 'अकवावीत्' इति तन्मते वृद्धिः। अस्य समाधानार्थं यत् यदुक्तं तत् सर्व्वमभ्युपेत्यवादत्वेन न वयं बहु मन्यामहे। इदन्तु मतान्तरं धातोरित्यनुवर्त्तनेनेति सुष्ठ्ववधेयम्।

न्नास्यचान्त्यं सन्ध्यचरम्। तर्हि 'अभैत्सीत्' 'अच्छैत्सीत्' इत्यत्र व्यञ्जनस्य वृद्धिः प्राप्नोति, "वदव्रजहलन्तस्याचः" (७।२।३) इत्यनेन हलन्तलक्षणा वृद्धिर्बाधिका भविष्यति। तर्हि 'अकोषीत्' 'अमोषीत्' इत्यत्र "नेटि" (७।२।४) इत्यनेन हलन्तलक्षणा वृद्धिः प्रतिषिध्यते तस्यां प्रतिषिद्धायाम् "सिचि वृद्धिः परस्मैपदेषु"(७।२।१) इत्यनेन व्यञ्जनस्य वृद्धिः प्राप्नोति। सिचि वृद्धेरप्येष प्रतिषेधः। कथम्? "लक्षणं हि नाम ध्वनति भ्रमति मुहूर्त्तमपि नावतिष्ठते।" अथवा "सिचि वृद्धिः परस्मैपदेषु"(७।२।१) इति सिचि वृद्धिः, तस्या हलन्तलक्षणा (७।२।३) वृद्धिर्बाधिका, तस्या अपि "नेटी"(७।२ ४)ति। अस्ति पुनः क्वचिदन्यत्र यदपवादे प्रतिषिद्धे उत्सर्गोऽपि न भवति? अस्ति यथा—"सुजाते अश्व सुनृते अध्वर्यो अद्रिभिः सुतम्। शुक्रं ते अन्यत्" इति पूर्व्वरूपे प्रतिषिद्धे अयादयोऽपि न भवन्ति।

"क्ङिती"(१।१।५)त्युत्तरार्थं तर्हि सिजर्थं वृद्धिग्रहणं कर्त्तव्यम्। सिचि अविशे-

---

लक्षणं हीति। नेटीति लक्षणं ध्वनति अविशेषेण वृद्धिग्रहणमाचस्य निषेधं व्यक्तमुदीरयति। प्रतिषेधस्यैकत्र चरितार्थतायां प्रतिषेधान्तरे न स्यात् प्रवृत्तिरत आह भ्रमति सर्व्वत्र व्याप्रियत इत्यर्थः। यदा स्यादेकस्मिन् निषेधप्रवृत्तिः, तदैव द्वितीये निषेधे प्रवृत्तिर्न सम्भवतीत्यस्य निरसनायाह मुहूर्त्तमपि नावतिष्ठते उभयत्र गतिशीलत्वात् नैकस्मिन् विश्राम्यति।

तस्या अपीति। सिचि वृद्धेरपि।

अस्तीति। "सुजाते अश्वे" "प्रकृत्याऽन्तः पादमव्यपरे" (६।१।११५) इत्यनेन प्रकृतिभावः प्राप्नोति। तत्सूत्रस्य "नान्तः पादमव्यपरे" इति पाठमवलम्ब्याह पूर्व्वरूपप्रतिषिद्धे इति। एवं सति 'वृचौ' इत्यत्र "नादिचि" (६।१।१०४) इत्यनेन पूर्व्वसवर्णदीर्घनिषेधे "वृद्धिरेचि" (६।१।८८) प्राप्ताया वृद्धेरपि निषेधप्रसङ्गः। "मिथोद्यौ नदे" (३।१।११५) इत्यादिलिङ्गात् "अपवादे प्रतिषिद्धे उत्सर्गोऽपि न भवती"त्यस्य न सार्व्वत्रिकी प्रवृत्तिः।

षेधोक्ता वृद्धिः 'न्यनुवीत्' इत्यत्र क्ङिति मा भूत् । अन्तरङ्गत्वादवोवङादेशे कृतेऽनन्त्यत्वाद्वृद्धिर्न भविष्यति । यदि तर्हि सिचि अन्तरङ्गं भवति, 'अकार्षीत्' इत्यत्र अन्तरङ्गत्वात् गुणे कृते रपरत्वे चानन्त्यत्वान्न वृद्धिः प्राप्नोति ? रपरत्वे हलन्तलक्षणा वृद्धिर्भविष्यति । तर्हि 'न्यस्तारीत्' 'न्यदारीत्' इत्यत्र अन्तरङ्गत्वाद्गुणे कृते रपरत्वे अनन्त्यत्वात् वृद्धिर्न प्राप्नोति, "नेटी"(७।२।४)ति प्रतिषेधादत्र हलन्तलक्षणा वृद्धिरपि न ? "अतो ल्रान्तस्य" (७।२।२) इत्यनेन अतो वृद्धिर्भविष्यति । तर्हि 'अलावीत्' 'अपावीत्' इत्यत्र अन्तरङ्गत्वात् गुणे कृतेऽवादेशे वान्तत्वाद्वृद्धिर्न प्राप्नोति, "अतो ल्रान्तस्य (७।२।२) त्यत्र" "लोपो व्योर्वलि" (६।१।६६) इत्यनेन लोपेन वकारस्याप्यस्तित्वपर्य्यवसानात् वान्तेऽपि ल्रान्तस्येत्येवं वृद्धिर्भविष्यति । यदि लुप्तनिर्द्दिष्टो वकारः तदा 'मा भवानवीत्' 'मा भवान् मवीत्' इत्यत्रापि प्राप्नोति, अविमव्योर्नेति वक्ष्यामि । तत् तर्हि वक्तव्यम् । न वक्तव्यम् । "ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्" (७।२।५) इत्यत्रत्यणिश्विभ्यां तौ परिवर्त्तनीयौ । अस्मिन् पक्षे णिश्व्योः प्रतिषेधोऽपि न वक्तव्यो भवति, यतः अन्तरङ्गत्वात् गुणे कृतेऽयादेशे यान्तत्वात् 'ह्म्यन्ते'त्यनेन यान्तानां नेति प्रतिषेधो भविष्यति । एवं तर्हि आचार्य्यप्रवृत्तिर्ज्ञापयति न सिच्यन्तरङ्गं भवतीति । कथम् ? यदि

---

अन्तरङ्गत्वादिति । न्यनु+ईत् इत्यत्र साक्षात्सम्बन्धेन सिचमेवापेक्षते सुतरां "अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" (६।४।७७) इत्यनेन उवङ् अन्तरङ्गम्, वृद्धिस्तु सिचि परस्मैपदे भवतीति तदपेक्षया बहिरङ्गम् ।

रपरत्व इति । गुणे कृते अकर् इति स्थिते हलन्तत्वात् हलन्तलक्षणा (७।२।३) वृद्धिर्भविष्यतीत्युक्तम् ।

न सिचीति । अन्तरङ्गमपि गुणं वृद्धिर्वचनाद्बाधते "येन नाप्राप्ति"न्यायेन । यदि न वृद्ध्या गुणो बाध्येत, तदा चिरिजिरिभ्यां यङ्लुगन्तेभ्यस्तथा न्यादिभ्यो लुङि सिचि अचिरायीत् अजिरायीत् अनेनायीत् अचेक्षायीदित्यादौ वृद्धिर्न स्यात् गुणयादेशयोः कृतयोः यान्तत्वात् "ह्म्यन्ते"त्यनेन वृद्धिप्रतिषेधो भवेत् ।

सिचि अन्तरङ्गं भवेत् तदा 'अकोषीत्' 'अमोषीत्' इत्यत्र गुणे कृते अलघुत्वात् वृद्धिर्न भवेत् "अतो हलादेर्लघोः" (७।२।७) इति हलादेर्लघोरकारस्येति अकारनिर्देशोऽनर्थकः स्यात्। सुतराम् अकारग्रहणं ज्ञापकं सिचि नान्तरङ्गं भवतीति। नैतदस्ति ज्ञापकम्? यत्र गुणः प्रतिषिध्यते तदर्थमेतत् स्यात्—'न्यकुटीत्' 'न्यपुटीत्'। यत्तर्हि णिश्व्योः (७।२।५) प्रतिषेधं शास्ति तेन ज्ञापयति नास्ति सिच्यन्तरङ्गमिति, अन्यथा गुणायादेशयोः कृतयोः यान्तत्वात् "ह्म्यन्ते"त्यनेन सिद्धेऽयत् प्रतिषेधः, यच्च "लघो"(७।२।७)रिति कृतेऽपि अकारग्रहणं करोति तदपि ज्ञापकम्।

## १६। तस्मादिग्लक्षणा वृद्धिः।

तस्मात् इग्लक्षणा वृद्धिः आस्थेया।

## १७। षष्ठ्याः स्थाने योगत्वादिङ्निवृत्तिः।

"षष्ठी स्थानेयोगा" (१।१।४९) इति षष्ठ्याः स्थानेयोगत्वात् इक इत्युक्तत्वात् सर्व्वेषामिकां गुणवृद्ध्यादेशेन निवृत्तिः प्राप्नोति, सुतरां 'दधि' 'मधु' इत्यत्रापि इकां निवृत्तिः प्राप्नोति।

अथ पुनर्व्वचनमिदानीं किमर्थम् स्यात्?

---

सर्व्वेषामिकामिति। "इको गुणवृद्धी" इति सूत्रमिदमिक्स्थाने गुणवृद्धिविधायकसूत्रमिति वादमुत्थाप्य वदति इङ्मात्रस्य निवृत्तिः सुतरां 'दधि' 'मधु' इत्यत्रापि तस्य प्राप्तिरिति यत्र गुणवृद्धिशब्दोच्चारणेन गुणवृद्धी विधीयेते तत्र इक इत्युपस्थितं द्रष्टव्यमिति प्रदीपस्थानपञ्चमनपेक्ष्योक्तम्।

पुनर्व्वचनमिति। यदि सर्व्वेषामिकामनेन सूत्रेण निवृत्तिर्भवेत्, तदा कथम् पुनः "वृद्धिरादैच्" "अदेङ् गुणः" इत्यादिरूपं गुणवृद्धिशब्दोच्चारणम्? तदुत्तरयति वार्त्तिकेन "अन्यतरार्थं पुनर्व्वचन"मिति।

## १८। अन्यतरार्थं पुनर्व्वचनम् ।

गुणवृद्ध्यनुवर्त्तमानेऽपि द्वितीयं गुणवृद्धिग्रहणम् "सार्व्वधातुकार्द्धधातुकयो"- (७।३।८४)र्गुण एवेति अन्यतरार्थम् ।

## १९। प्रसारणे च ।

"इग्यणः सम्प्रसारणम्" (१।१।४५) इत्यत्र यण इति स्थानषष्ठी सुतरां सर्व्वेषां यणां निवृत्तिः प्राप्नोति । सुतरां 'याता' 'वाता' इत्यत्रापि यणां निवृत्तिः प्राप्नोति । पुनर्व्वचनमिदानीं किमर्थं स्यात् ?

## २०। विषयार्थं पुनर्व्वचनम् ।

"वचि स्वपि-यजादीनां क्ङिति" (६।१।१५) एवेति विषयनियमार्थमेतत् स्यात् ।

## २१। उरण् रपरे च ।

"उरण् रपरः" (१।१।५१) इत्यत्र उरण् रपरे उरिति स्थानषष्ठ्या सर्व्वेषामकाराणां निवृत्तिः प्राप्नोति । सुतरां 'कर्त्तृ' 'हर्त्तृ' इत्यत्रापि ऋकाराणां निवृत्तिः प्राप्नोति ।

## २२। सिद्धन्तु षष्ठ्यधिकारे वचनात् ।

षष्ठ्यधिकारे वचनात् सिद्धमेतत् । "उरण् रपर" इति एकोऽसौ योगः षष्ठ्य-

---

अन्यतरार्थमिति । "इको गुणवृद्धी" इति सूत्रकरणात् गुणवृद्धिशब्दप्राप्तौ द्वितीयं गुणवृद्धिग्रहणमनुवर्त्तनार्थम् । तत्र पुनः अन्यतरार्थम् गुणवृद्धिनियमार्थम् ।

प्रसारणे चेति । समानन्यायप्रदर्शनार्थमस्य वार्त्तिकस्योपन्यासः ।

सिद्धमिति । "सार्व्वधातुकार्द्धधातुकयोः" "अङ्गस्य" "वचिस्वपियजादीनाम्" "ऋत इद्धातोः" इत्यादिषु यत्र षष्ठी तत्रैव एतेषामुपस्थितिः । सुतराम् 'इको गुणवृद्धी' 'इग्यणः सम्प्रसारणम्' "उरण् रपर" इत्येतेषां स्वातन्त्र्यं सर्व्वथा परिहृतम् । "षष्ठी स्थानेयोगा" इत्यत्र षष्ठीति योगं विभज्यैतत् भवति यत्र षष्ठी तत्रोपतिष्ठत इति ।

धिकारे क्रियते, "इको गुणवृद्धी" "इग्यणः सम्प्रसारणम्" इतीमौ योगावपि षष्ठ्यधिकारमनुवर्त्तिष्येते, अथवा इमौ योगावपेक्षिष्यामहे षष्ठ्यधिकारे।

अथवा तावदिदं प्रष्टव्यं, "सार्व्वधातुकार्द्धधातुकयोः" गुणो भवतीति 'याता' 'वाता' इत्यत्र कथं न भवति? "इको गुणवृद्धी" इति तत्रापेक्षिष्यत इति न गुणः। यथा तर्हि 'याता' 'वाता' इत्यत्र "इको गुणवृद्धी" इत्यस्यापेक्षा तथा "सार्व्वधातुकार्द्धधातुकयोः" "इको गुणवृद्धी" इत्यपेक्षिष्यामहे।

इति श्रीभाष्यसङ्कलन्यां प्रथमाध्यायस्य प्रथमे
पादे तृतीयमाह्निकम्।

---

षष्ठ्यधिकारे इति। "षष्ठी स्थानेयोगा" (१।१।४९) इति यद्यपि "इको गुणवृद्धी" "इग्यणः सम्प्रसारणम्" इत्यनयोः परवर्त्ति, तथापि स्वरितत्वात् ताभ्यां सम्बध्यते। कथमन्यैः सूत्रैर्न सम्बन्धः? अयोग्यत्वात्।

अपेक्षिष्यामहे। योग्यत्वादपेक्षा।

अथवेति। 'वृद्धिरादैच्' "अदेङ् गुणः" इति पुनर्व्वचनम् अनिकोऽपि गुणवृद्धिसाधनाय भवतु विध्यर्थम्। एवं सति 'याता' 'वाता' इत्यत्रापि गुणप्रसङ्गः। न भवेत्। कथम्? सिद्धान्तपक्षे "अन्यतरार्थं पुनर्व्वचन"मिति वार्त्तिकस्यायमर्थः गुणवृद्ध्यनुवर्त्तमानेऽपि पुनर्गुणवृद्धिशब्दग्रहणम् अन्यतरार्थम् गुणवृद्ध्योरन्यतरो य इक्शब्दस्तदर्थम्। तेनेदं निष्पन्नं भवति "यत्र गुणवृद्धिशब्दोच्चारणेन गुणवृद्धी विधीयेते तत्रैक इत्युपतिष्ठते।

यथेति। लक्ष्यसिद्धये 'याता' 'वाता' इत्यत्र यथा "इको गुणवृद्धी" इत्यस्यापेक्षा तथा "सार्व्वधातुकार्द्धधातुकयो"रित्यत्रापि भवितुमर्हति। यतो 'याता' 'वाता' इत्यत्र "सार्व्वधातुकार्द्धधातुकयोः" इत्यनेनैव गुणप्राप्तिः, तत्र यदा "इको गुणवृद्धी" इत्यस्यापेक्षा तदा एकवाक्यतानिष्पादनाय "सार्व्वधातुकार्द्धधातुकयोः" इत्यत्रापि तस्य व्यपेक्षा।

इति श्रीतत्त्वसङ्कलन्यां प्रथमाध्यायस्य प्रथमपादे तृतीयाह्निकम्।

## न धातुलोप आर्द्धधातुके। १। १। ४।

म. वृ.। धात्वेकदेशो धातुस्तस्य लोपो यस्मिन्नार्द्धधातुके तदार्द्धधातुकं धातुलोपं तत्र ये गुणवृद्धी प्राप्नुतस्ते न भवतः। 'लोलुवः' 'पोपुवः' 'मरीमृजः'। लोलूयादिभ्यो यङन्तेभ्यः पचाद्यचि विहिते "यङोऽचि च"(२।४।७०) इति यङो लुकि कृते तमेवाचमाश्रित्य ये गुणवृद्धी प्राप्ते तयोः प्रतिषेधः।

धातुग्रहणं किम्? लूङ् 'लविता' 'रेभसि' 'पर्णं नयेः' अनुबन्धप्रत्ययलोपे मा भूत्। रिषेर्हिं सार्थस्य विच्प्रत्ययलोपे उदाहरणं 'रेड़्'ति।

आर्द्धधातुक इति किम्? 'त्रिधा बद्धोवृषभो रोरवीति' सार्व्वधातुके मा भूत्।

इक इत्येव 'अभाजि' 'रागः'।

भा. स.। धातुग्रहणं किमर्थम्? लूङ्—'लविता' 'लवितुम्' पूञ्—'पविता' 'पवितुम्' इत्यत्र अनुबन्धलोपे मा भूत्। आर्द्धधातुक इति ग्रहणं किमर्थम्? "त्रिधा बद्धो वृषभो रोरवीति" (ऋक् ४म. ५८सू. ३ऋक्) इत्यत्र सार्व्वधातुके मा भूत्। किं पुनः आर्द्धधातुकनिमित्ते धातुलोपे सति ये गुणवृद्धी प्राप्नुतस्ते न भवत इति लोपविशेषणं

---

किं पुनरिति। धातुलोपोऽत्र धात्वेकदेशलोपः, अन्यथा समग्रधातुलोपे गुणवृद्ध्योः प्राप्तेरसम्भावना। न च वक्तव्यं नास्ति कुत्रापि समग्रधातोर्लोपः। "दुरीणो लोपश्च"

आर्द्धधातुकग्रहणम्, अथवा धातुलोपे सति आर्द्धधातुकनिमित्ते ये गुणवृद्धी प्राप्नुतस्ते न भवत इति गुणवृद्धिविशेषणमार्द्धधातुकग्रहणम् । यदि लोपविशेषणम् 'उपेद्धः' 'प्रेद्धः' इत्यत्रापि इन्धेः क्तप्रत्ययनिमित्तके नलोपे गुणनिषेधः प्राप्नोति । यदि गुणवृद्धिविशेषणम् 'क्नोपयति' इत्यत्रापि क्नुयीशब्दात् णिचि पुकि यलोपे पुगन्तलघूपधगुणनिषेधः प्राप्नोति । लोपविशेषणं गुणवृद्धिविशेषणं वा यथेच्छं भवतु । भवतु ततो लोपविशेषणम् । कथम् तदा 'उपेद्धः' 'प्रेद्धः' इति ? बहिरङ्गो गुणः, अन्तरङ्गः प्रतिषेधः ।

---

(उण. २।२०) इत्यनेन दुःपूर्वस्येणधातोरक्प्रत्यये धातोर्लोपेन 'दूरम्' इति पदं सिद्धम् । धातोर्लोप इति षष्ठीतत्पुरुषे आर्द्धधातुकमितीदं लोपविशेषणं वा गुणवृद्धिविशेषणं वा तन्त्रावृत्त्यादिभिरुभयविशेषणं वेति पक्षत्रयस्य सम्भावनात् प्रश्नः किं पुनरिति ।

कथं तदेति । 'उपेद्धः' 'प्रेद्धः' इत्यत्र, "पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण" "यस्त्वसौ धातूपसर्गयोरभिसम्बन्धोऽस्ति तमभ्यन्तरीकृत्य धातुः साधनेन युज्यत" इति पक्षद्वयस्य (२ पृ.) भाष्ये सत्त्वात् "बहिरङ्गो गुणोऽन्तरङ्गः प्रतिषेधः" इति वदताच प्रथमपक्षः परिगृहीतः । तत एवं भवति इन्धेः क्तप्रत्यये नलोपेन 'इद्धः' इति पदं सिद्धम् । नलोपस्य प्रथमोपनतक्तप्रत्ययापेक्षत्वादन्तरङ्गत्वं तदनन्तरं भाविनो गुणस्य तु बहिरङ्गत्वम् । "असिद्धं बहिरङ्गमन्तरङ्गे" इत्येतस्याः परिभाषाया अयमर्थः अन्तरङ्गे कर्त्तव्ये जातं तत्कालप्राप्तिकञ्च बहिरङ्गमसिद्धम् । 'उपेद्धः' 'प्रेद्धः' इत्यत्र गुणस्य बहिरङ्गत्वात् असिद्धत्वम्, असिद्धत्वे कृतोऽपि गुणोऽकृतवदिति निषेधायोगः । यदि धातूपसर्गयोः साधनात् पूर्वमेवाभिसम्बन्धः स्यात्, ततोऽपि न कापि क्षतिः । एवं सति गुणोऽन्तरङ्गः नलोपो बहिरङ्गः । नलोपस्य बहिरङ्गत्वादसिद्धत्वम् । असिद्धत्वे कृतोऽपि लोपोऽकृतवदिति निषेधायोगः । ननु "असिद्धं बहिरङ्गमन्तरङ्गे" इति परिभाषाया नास्यत्र प्राप्तिः "नाजानन्तर्य्ये बहिष्ट्वप्रक्लृप्तिः" इति निषेधात् । अस्याः परिभाषाया अयमर्थः, अन्तरङ्गे कर्त्तव्ये यत्र आनन्तर्य्येण अव्यवहितत्वेन अचोराश्रयणं तत्र न बहिष्ट्वप्रक्लृप्तिः बहिरङ्गत्वप्राप्तिः । यथा 'अक्षद्यूः' इत्यत्र "छ्वोः शूडनुनासिके च" (६।४।१९) इत्यनेन नकारस्य

"असिद्धं वहिरङ्गमन्तरङ्गे" इति वहिरङ्गस्य गुणस्यासिद्धतया निषेधायोगः। यद्येवं धातुग्रहणेन नार्थः। लूञ्-'लविता' 'लवितुं' इह कस्मान्न भवति ? न चात्रार्द्धधातुकनिमित्तो लोपः लोपोऽत्रानुबन्धस्य। अथवास्तु गुणवृद्धिविशेषणम्। ननु चोक्तं 'क्नोपयति' इत्यत्रापि प्राप्नोति। नैष दोषः "चेक्के क्नोपिः" (२।४।२३) इति निपातनात् सिद्ध्यति। सत्येवं परिगणनं कर्त्तव्यम्।

# १। यङ्यक्क्यवलोपे प्रतिषेधः।

यङ्-यक्-क्य-वलोपे प्रतिषेधो भवतीति परिगणनं कर्त्तव्यम्। तद्यथा यङ्—'बेभिदिवा' बेभिद्यशब्दात् क्वच् इट्, "यस्य हलः" (६।४।४९) इति यलोपः। 'मरीमृजः' "यङोऽचि" (२।४।७४) इति यलोपः। एवं यक्—'कुषुभिता' 'मगधकः'। क्य—'समिधिता' 'दृषदकः'।—"क्यस्य विभाषा" (६।४।५०) इति यलोपः। वलोपे—'जीरदानुः' इत्येतेषु गुणप्रतिषेधः कर्त्तव्यः।

---

ऊट् वहिरङ्गम्, यण् अन्तरङ्गः। "इको यणचि" (६।१।७७) इत्यनेन अचदि+ऊ इत्यत्र अन्तरङ्गे यणि कर्त्तव्ये इगचोराश्रयणम्। तत्र जातस्य ऊट इति ऊकारस्य वहिरङ्गासिद्धत्वमनाश्रित्य यण्त्वेन 'अचद्यूः' इति पदसिद्धिः। अत्र तु नकारलोपोऽन्तरङ्गः गुणो वहिरङ्गः सुतरां नास्मिन् प्रतिषेधसूत्रे अचोराश्रयणम्। अचोरनाश्रयणे कुतो वा "नाजानन्तर्य्ये" इति परिभाषायाः प्राप्तिः।

धातुग्रहणेनेति। "असिद्धं वहिरङ्गमन्तरङ्गे" इति परिभाषयाऽन्यथाकर्त्तुं शक्यत्वात्।

सत्येवमिति। धातुग्रहणस्यानर्थक्ये यत्र यत्र प्रतिषेधस्य प्रयोजनं तेषां परिगणनं कर्त्तव्यम्।

वलोप इति। "व इत्यत्राकारोऽपि विवक्षितः, तेन धातुपाठे योऽकारान्तः पठितः तस्य ग्रहणम् अन्यथा स्रिविः कथं निवार्य्येत।"

कुषुभितेति। "कुषुभमगधशब्दौ कण्ड्वादिगणपठितौ धातू ताभ्यां यक्।"

किं प्रयोजनम् ?

## २ । नुम्लोप-श्विव्यनुबन्धलोपे प्रतिषेधार्थम् ।

नुम्लोपे श्विव्य-नुबन्धलोपे च प्रतिषेधो माभूत् । नुम्लोपे—भञ्जेः—'अभाजि', रञ्जेः—'रागः', बृंहेः—'उपबर्हणम्' । श्विवेः मनिन्—'आश्वेमाणम्' । अनुबन्धलोपे —लूञ् 'लविता' 'लवितुम्' ।

यदि परिगणनं क्रियते, "स्यदो जवे" (६।४।२८) इति 'स्यदः', "अवोदैधौद्मप्रश्रथ-हिमश्रथाः" (६।४।२९) इति 'प्रश्रथः' 'हिमश्रथः' इत्यत्रापि वृद्धिः प्राप्नोति । वक्ष्यत्ये-तत्, "निपातनात् स्यदादिषु" इति ।

तत्तर्हि परिगणनं कर्त्तव्यम् ? न कर्त्तव्यम् । नुम्लोपे कस्मान्न भवति ?

## ३ । इक्प्रकरणान्नुम्लोपे वृद्धिः ।

इग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः । न चैषेग्लक्षणा वृद्धिः । सुतरां भवत्येव नुम्लोपे वृद्धिः ।

---

किं प्रयोजनमिति । एवं परिगणने किं प्रयोजनमिति प्रश्नः । यत्र यत्र परि-गणनं तत्र तत्र निषेधः, तदतिरिक्तेषु निषेधस्याप्रवृत्तिः ।

नुम्लोप इति । नुमिति नकारस्य पूर्व्वाचार्य्यसंज्ञा ।

उपबर्हणमिति । बृहि वृद्धौ, इदित्वात् "इदितो नुम् धातोः" (७।१।५८) इत्यनेन नुम् । "बृहेरच्यनिटि" इति वार्त्तिकेन नलोपः ।

अनुबन्धलोप इति । परिगणनेन हि धातुग्रहणस्यानर्थक्यं प्रतिपन्नम् । ततो धातु-ग्रहणं न कर्त्तव्यं भवतीति अनुबन्धलोपोऽत्र प्रयोजनत्वेन परिगृहीतः ।

परिगणनमिति । यत्र यत्र निषेधो भवति तस्य तस्य परिगणनात् तदन्यत्र गुणवृद्धी प्राप्नुतः । अत आह "यदि परिगणनं क्रियते" इत्यादि ।

इक्प्रकरणादिति । स्थान्यन्तरनिवृत्तये यत्रेक्परिभाषा व्याप्रियते, तत्रायं निषेधः ।

यदि इग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः, 'स्रदः' 'प्रश्नथः' 'हिमश्नथः' इत्यत्र न प्राप्नोति, 'अबोदः' 'एधः' 'ओद्मः' इत्यत्र वृद्धिः प्राप्नोति।

## ४। निपातनात् स्रदादिषु।

स्रदादिषु निपातनात् प्रतिषेधो भविष्यति। न च भविष्यति। यदीग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः क्ङिल्यनुबन्धलोपे कथम्?

## ५। प्रत्ययाश्रयत्वादन्यत्र सिद्धम्।

आर्धधातुकनिमित्ते लोपे प्रतिषेधः, न चैष आर्धधातुकनिमित्तो लोपः। यद्यार्धधातुकनिमित्ते लोपे प्रतिषेधः, 'जीरदानुः' इत्यत्र वर्णनिमित्ते लोपे न प्राप्नोति।

## ६। रकि ज्यः सम्प्रसारणम्।

नैतत् जीवेः रूपम्। एतत् रकि ज्यः सम्प्रसारणं भवति। रकि किलात् जीवेरपि सिद्धं भवति। कथम् 'उपबर्हणम्'? बर्हिः प्रकृत्यन्तरम्। कथम् विज्ञायते? "बृंहेरच्यनिटि" इति यत् लोप उच्यते। अनजादावपि लोपो दृश्यते 'निबृह्यते'। अनिटीति चोच्यते, इडादावपि दृश्यते 'निबर्हिता' 'निबर्हितुम्' इति। अजादावपि न दृश्यते लोपः 'बृंहयति' 'बृंहकः'।

तस्मान्नार्थः परिगणनेन। यदि न परिगणनं क्रियते 'भेद्यते' 'छेद्यते' इत्यत्रापि

---

न च भविष्यतीति। क्ङिल्यनुबन्धलोपपरिहारासिद्धत्वादुक्तम् न च भविष्यतीति। तत्परिहारं करोति प्रत्ययाश्रयत्वादिति।

वर्णनिमित्त इति। 'जीरदानुः' इत्यत्र वर्णनिमित्तो लोपः न तु प्रत्ययनिमित्तः।

रकि ज्य इति। ज्या वयोहानावित्यस्मात् धातो रक्प्रत्ययः। ज्याधातोः सम्प्रसारणे रक्प्रत्यये च जीर इति रूपं सिद्धम्।

प्रकृत्यन्तरमिति। बृह बृहि वृद्धाविति पाठात्।

भेद्यत इति। भेद्यत इत्यत्र आर्धधातुकनिमित्तो गुणो णिलोपश्च सुतरां गुणवृद्धिविशेषणे लोपविशेषणे च दोषः। भिदेर्ण्यन्तात् कर्मणि यकि भिद+इ+य इति

प्राप्नोति। नैष दोषः। धातुलोप इति न धातोर्लोपः किन्तर्हि धातोर्लोपो यस्मिन् तदिदं धातुलोपं धातुलोप इति।

## ७। तस्मादिग्लक्षणा वृद्धिः।

यदि इग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः, तदा 'पापचकः' 'पापठकः' 'मगधकः' 'इणदकः' अत्र न वृद्धिनिषेधः प्राप्नोति।

## ८। अल्लोपस्य स्थानिवत्त्वात्।

अकारलोपे कृते तस्य स्थानिवद्भावात् गुणवृद्धी न भविष्यतः।

## ९। अनारम्भो वा।

अनारम्भो वा पुनरस्य योगस्य न्याय्यः। कथं "बेभिदिता' 'मरीमृजकः' 'कुसुभिता' 'समिधिता' इति। अत्रापि अकारलोपे कृते तस्य स्थानिवद्भावात् गुणवृद्धी न भविष्यतः।

यत्र तर्हि स्थानिवद्भावो नास्ति तदर्थमयं योगो वक्तव्यः। क्व च नास्ति? यत्र हलचोरादेशः 'लोलुवः' 'पोपुवः' 'मरीमृजः' 'सरीसृपः' इति।

---

स्थिते "णेरनिटि" (६।४।५१) इत्यनेन नित्यत्वात् णिलोपे कृते "प्रत्ययलोपे प्रत्ययलक्षणम्" (१।१।६२) इति प्रत्ययलक्षणेन णिचमाश्रित्य क्रियमाणो गुण आर्द्धधातुकनिमित्तणिलोपवशात् निषिध्येत, न च वक्तव्यम् अन्तरङ्गत्वात् णिलोपात् प्रागेव गुण इति, भिद +इ+य इति विभज्यान्वाख्यानपक्षे तदसम्भवः, प्राग्गुणे कृते संजातोऽपि उत्सर्गो गुणः जनिष्यमाणेन णिलोपेनापवादेन बाध्यते।

लोपो यस्मिन्निति। बहुव्रीहौ सति लोपस्य गुणवृद्ध्योश्च एकार्द्धधातुनिमित्तत्वमाश्रितमिति भेद्यत इत्यादौ यो गुणनिषेधः प्राप्नोति भिन्ननिमित्तत्वान्न स भवति।

हलचोरादेश इति। यङ् इति कृतस्वयकाराकारयोर्लुका लोपः।

अत्रापि अकारलोपे कृते तस्य स्थानिवद्भावात् गुणवृद्धी न भविष्यतः। "यङोऽचि च" (२।४।७४) लुक् इत्यनेन लुकि कृते अकारस्य स्थानिवद्भावो न प्राप्नोति। "यङोऽचि च" इत्यनेन लुक् क्रियतां "अतो लोपः" (६।४।४८) इति लोपः क्रियताम्। तत्र परत्वात् अल्लोपः, एवं लोपेऽकारस्य स्थानिवद्भावः। ननु नित्यो लुक्, यतः कृतेऽपि अल्लोपे प्राप्नोति, अकृतेऽपि प्राप्नोति। लुगपि अनित्यः, कथम्? अन्यस्य कृते प्राप्नोति, अन्यस्याकृते। "शब्दान्तरस्य च प्राप्नुवन् विधिरनित्यो भवति।" लोपे प्राप्तेऽपि लुगारम्भात् लुगनवकाशः। सावकाशो लुक् यतो यकारस्य लुकि अकारस्य लोपः। यदि लुगवकाशोऽपि स्यात्ततोऽपि न दोषः यतो अल्लोपे योगविभागो भविष्यति तद्यथा "अतो लोपः" (६।४।४८) ततः "यस्य" लोपः अत इत्येव। किमर्थमिदम्? लुकं वक्ष्यति तद्बाधनार्थम्। ततः "हलः" (६।४।४९) हल उत्तरस्य यस्य च लोपो भवति।

---

अन्यस्य कृत इति। अनित्यत्वे हेतुः अन्यस्य कृते प्राप्नोतीति। यद्यपि अन्यस्य अकृतेऽपि प्राप्नोति, तथापि यदा अन्यस्य कृते प्राप्नोति तदेवानित्यता। कथम्? "शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवती"ति परिभाषया। किं वाऽस्य बीजम्? यो हि विधिर्नित्यः न स परमपेक्षते यद्व्याप्तिसम्बन्धितया तस्य पूर्व्वं प्रवृत्तिस्तद्व्याप्तिसम्बन्धितयैव तस्य पुनः प्रवृत्तिः। यत्र शब्दान्तरापेक्षा तत्रानित्यता।

लोपे प्राप्त इति। "येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवती"ति लुक् लोपस्य बाधकत्वात् लुगनवकाशः। अत्र लुग्लोपयोर्भिन्नविषयौ निर्द्दिश्य यङि अकारस्य लोपो यकारस्य लुक्। सुतरामयं सावकाशः। यतो भिन्नविषयत्वात् नाप्राप्तिन्यायाभावात् लुक् न लोपस्य बाधकः।

यदि लुगिति। 'यङोऽचि च' (२।४।७४) लुक् इत्यत्रावयवे यङ्निर्द्देशस्य गौणत्वात् यङः समुदायस्य लुकि ग्रहणविवक्षा। एवं सति येन नाप्राप्तिन्यायस्य प्राप्तिरस्त्येव। "अतो लोपः" (६।४।४८) "यस्य च हलः" (६।४।४९) इत्यत्र "अतो लोपः" इत्युक्त्वा यस्येति कृते यस्य च अतो लोपो भवतीत्यायाति। तदनन्तरं "हलः" हल उत्तरस्य यस्य च लोपो भवतीति।

इह तर्हि परत्वात् योगविभागाद्वा लोपो लुकं बाधेत 'क्ष्णो नोनाव वृषभो यदी-दम्' नोनूयतेर्नोनाव।

## १०। समानाश्रयो लुक् लोपेन बाध्यते।

यो हि प्रत्ययाश्रयः स समानाश्रयः। यदा लुक् समानाश्रयस्तदा लोपेन बाध्यते। अत्र तु प्रत्ययोत्पत्तेः प्रागेव लुग्भवति।

कथम् 'स्यदः' 'प्रश्रथः' 'जीरदानुः' इत्यत्र तु परिहारायोक्तम् "निपातनात् स्यदादिषु" "प्रत्ययाश्रयत्वादन्यत्र सिद्धम्" "रक्नि ज्यः सम्प्रसारणम्"। कथं निकुचितः? "सन्निपातो विधिरनिमित्तं तद्विघातस्येति।"

—-

इह तर्हीति। "यङोऽचि च" इति पूर्वं लुगुक्तः पश्चादुक्तं "अतो लोपो यस्" इति। सुतरां परत्वात् लुक् बाधित्वा लोपो भवति।

समानाश्रय इति। तुल्यकालत्वात्।

नोनावेति। "यङोऽचि च" (२।४।७४) इत्यत्र चकारात् "बहुलं छन्दसि" (२।४।७३) इत्यतो बहुलग्रहणमनुकृष्यते। ततो जायमानस्यानैमित्तकस्य लुकोऽन्तरङ्गतया प्रत्ययोत्पत्तेः प्रागेव स भवति।

निकुचित इति। अत्र क्तप्रत्ययस्य कित्वसंयोगेन नलोपे सति उदुपधत्वम्। एवं लघूपधत्वे सिद्धे "पुगन्तलघूपधस्य" (७।३।८६) इत्यनेन गुणे सति कित्त्वस्य गुणनिषेधकत्वस्य व्याघातोत्पत्तिः। सुतरां सन्निपातपरिभाषया गुणनिषेधोऽत्र सिद्धः। सन्निपातपरिभाषाया व्याख्यानन्तु पूर्वमुक्तम् (६१पृ.)।

अत्र सूत्रप्रत्याख्यानविषय एवं विचार्यः। सूत्रकारेण "यस्य हलः" (६।४।४९) इत्यत्र समुदायलोपः स्वीकृतः, सुतरां "न धातुलोप आर्धधातुके" इति सूत्रं तेनारब्धम्, भाष्यकारस्तु अवयवलोपं स्वीकृत्य यकारस्य लुक् अकारस्य लोप इति संसाध्य अकारस्य

स्थानिवत्तया गुणवृद्धी असम्भावयन् सूत्रं प्रत्याख्यातवान्। वृत्तिकारेण तु सूत्रकारपक्ष एव परिगृहीतः। यतस्तेन "यस्य हलः" इति सूत्रे "यस्येति "संघातग्रहणमेतत्" इत्युक्तम्। वस्तुतस्तु सूत्रकारेण सहजगम्यपथः अवलम्बितः,भाष्यकारेण तु सूक्ष्मतम इति द्वयोर्भिन्नता। भाष्यकारपक्षे दोषान् दर्शयन्त एवं तदुद्धारं कैयटादयः कृतवन्तः, तद्यथा, गमधातोर्यङ्-लुगन्तात् अचि 'जङ्गम' इत्यत्र लुप्तस्याकारस्य स्थानिवद्भावात् "गमहनजनखनघसां लोपः क्ङित्यनङि" (६।४।९८) इत्यनेन उपधालोपः प्राप्नोति। नैष दोषः। अनङीति प्रतिषेधात्। 'दरीदृशः' इत्यत्र "ऋदृशोऽङि गुणः" (७।४।१६) इति गुणः स्यात्। नैष दोषः प्रतिपदोक्तस्याङो ग्रहणात् नात्र गुणः। देयः इत्यत्र "दीङो युडचि क्ङिति" (६।४।६३) इत्यनेन युडागमः स्यात्। नैष दोषः, दीङ इत्यनुबन्धनिर्देशो यङ्लुङ्निवृत्त्यर्थं इति सिद्धान्तितत्वात्। अथवा "अङ्गवृत्ते पुनर्वृत्तावविधिः" "संज्ञापूर्व्वकविधेरनित्यत्वम्" इति परिभाषाश्रयणेन समाधानं सुकरम्। प्रथमपरिभाषार्थस्तु 'अङ्गवृत्ते' अङ्गाधिकारनिष्पन्ने कार्य्ये सति 'पुनर्वृत्तौ' पुनरन्यस्याङ्गस्य कार्य्यप्रवृत्तौ 'अविधिः' अविधानम्। यथा "भ्यसोभ्यम्" (७।१।३०) इत्यनेन भ्यसो भ्यमि कृते "बहुवचने झल्येत्" (७।३।१०३) इति एत्वं प्राप्नोति "अङ्गवृत्ते पुनर्वृत्तावविधि"रिति न भवति। "ओर्गुणः" (६।४।१४६) इत्यत्र गुण इति शब्दमनुक्त्वा 'ओरोत्' इति वचनं सम्यगपि गुण इति कथनं "संज्ञापूर्व्वकविधेरनित्यत्वम्" इति प्रदर्शनाय। एवं हि 'वाभव्यः' इत्यत्र गुणः अनित्यत्वात् 'स्वायम्भुवः' इत्यत्र उवङ्। परिभाषाया अर्थस्तु परिस्फुटः। भवतु, 'लोलुवः' इत्यादिषु "अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" (६।४।७७) इत्यनेन अचि उवङ् स्यात्। नात्र उवङ् सिद्ध्यति लोलू+ऽ+अ इति स्थिते स्थानिवद्भावलब्धेऽकारे परे सिद्ध्यतीति चेत् न, यङोऽकारे लुप्ते यकारो लुप्यते, यकारावस्थानकाले नास्त्यकारस्य प्रत्ययत्वम्, यकारे लुप्ते न तस्य स्थानित्वस्थानं ततः प्रागेव तस्य लोपात्, सुतरां स्थानिवद्भावलब्धेऽकारे न भवत्युवङादेशः यतः स्थानिनि दृष्टं हि कार्य्यं तावदतिदेशेन लभ्यते न तु तत्राइष्टमपि। अत्र "सम्भवमात्रेणापि अतिदेशो भवतीत्यदोषः।" ततः स्थानिवद्भावलब्धे अकारे 'लोलुवः' इति पदसिद्धिः।

—

## क्ङिति च । १ । १ । ५ ।

म. वृ. । निमित्तसप्तम्येषा । क्ङिन्निमित्ते ये गुणवृद्धी प्राप्नुतस्ते न भवतः, 'चितः' 'चितवान्' 'स्तुतः' 'स्तुतवान्' 'भिन्नः' 'भिन्नवान्' 'मृष्टः' 'मृष्टवान्' । ङिति खल्वपि—'चिनुतः' 'चिन्वन्ति' 'मृष्टः' 'मृजन्ति' ।

गकारोऽप्यत्र चर्त्वभूतो निर्द्दिश्यते—"ग्लाजिस्थश्च ग्स्नुः" (३।२।१३९) 'जिष्णुः' 'भूष्णुः' ।

इक इत्येव—'कामयते' 'लैगवायनः' ।

"मृजेरजादौ संक्रमे विभाषा वृद्धिरिष्यते ।" संक्रमो नाम गुणवृद्धिप्रतिषेधनियमः । 'परिमृजन्ति' 'परिमार्ज्जन्ति' 'परिमृजन्तु' 'परिमार्ज्जन्तु' । लघूपधगुणस्याप्यत्र प्रतिषेधः । 'अचिनुवम्' 'असुनवम्' इत्यादौ लकारस्य सत्यपि ङित्त्वे यासुटो ङिद्वचनं ज्ञापकं ङिति यत्कार्य्यं तल्लकारे ङिति न भवतीति ।

भा. स. ।

### १ । क्ङिति प्रतिषेधे तन्निमित्तग्रहणम् ।

क्ङिति प्रतिषेधे क्ङिन्निमित्ते ये गुणवृद्धी प्राप्नुतस्ते न भवत इति तन्निमित्तग्रहणं कर्त्तव्यम् । किं प्रयोजनम् ?

---

क्ङिति प्रतिषेध इति । क्ङितीति यदि परसप्तमी स्यात् ङिति परतो यद्विगिति भवेत् । तदा "तस्मिन्निति निर्द्दिष्टे पूर्व्वस्य" (१।१।६६) इति परिभाषोपस्थितिः । ततो

## २। उपधारोरवीत्यर्थम्।

उपधार्थं रोरवीत्यर्थं तन्निमित्तग्रहणम्। अन्यथा 'भिन्नः' 'भिन्नवान्' इत्यत्र "क्ङिति" इत्यत्र "तस्मिन्निति निर्द्दिष्टे पूर्व्वस्य" (१।१।६६) इति परिभाषोपस्थानात् उपधाया इको न गुणः प्राप्नोति, 'चितं' 'स्तुतम्' इत्यत्रैव स्यात्। ननु पुगन्तलघूपधस्याङ्गस्य गुण उच्यते तत्रात्र क्ङित्परमिति क्ङित्परत्वेन विशेषयिष्यामः। न खल्वत्र पुगन्ताङ्गस्य लघूपधस्य, किन्तर्हि पुकि अन्तः पुगन्तः लघ्वी उपधा लघूपधा (११६) अन्यथा अङ्गविशेषणे सति 'भिनत्ति' 'छिनत्ति' इत्यत्र गुणः प्रसज्जेत। रोरवीत्यर्थम्—"विधा वृद्धी हपमी रोरवीति"।

---

निर्द्दिष्टशब्दस्य व्युत्पत्त्या अव्यवहितोच्चारणार्थत्वात् 'चितः' इत्यादिषु निषेधः स्यात् न तु व्यवहितोच्चारितेषु 'भिन्नः' 'छिन्नः' इत्यादिषु। सुतरां निमित्तग्रहणं कर्त्तव्यम्। यदि क्ङितीति भावसप्तमी, गुणवृद्धी इत्यनेन च सम्बन्धस्तदा क्ङिति सति ये गुणवृद्धी प्राप्नुतस्ते न भवत इति सूत्रार्थः स्यात्। ततो विहितयोर्न निषेधः, अनभिनिर्वृत्तयोरेवेति परिभाषानुपस्थितिः। अतएव निमित्तसप्तम्येव।

उपधार्थमिति। 'भिन्नः' 'भिन्नवान्' इत्यत्र उपधाया इकः "सार्व्वधातुकार्द्धधातुकयोः" (७।३।८४) "पुगन्तलघूपधस्य च" (७।३।८६) इति यो गुणः प्राप्नोति, स "क्ङिती"ति निषेधान्न भवति।

रोरवीत्यर्थमिति। अत्र तिप्निमित्तो गुणः, न तु यङ्निमित्तगुणप्रतिषेधः।

क्ङित्परत्वेनेति। क्ङिति न गुणवृद्धी भवतः। कस्य? पुगन्तलघूपधस्य। एवमाकाङ्क्षायां, क्ङित्परत्वेन विशेष्यते।

अङ्गविशेषण इति। लघ्वी उपधा यस्य इति अङ्गस्य विशेषणे 'भिनत्ति' 'छिनत्ति' इत्यत्र अङ्गगतस्येको गुणः प्राप्नोति। लघ्वी उपधा लघूपधेति निर्द्देशे समुदायग्रहणं भवति। ततो 'भिनत्ति' 'छिनत्ति' इत्यत्र अवयवस्य चेको व्यवहितत्वात् न गुणप्राप्तिरुपधात्वाभावात्तस्य।

यदि तन्निमित्तग्रहणं क्रियते अ-चङन्ते दोषः 'रियति' 'पियति' 'प्रादुद्रुवत्' 'प्रासुस्रुवत्', अत्र न प्राप्नोति ।

## ३। अचङन्तस्यान्तरङ्गत्वात् सिद्धम् ।

अन्तरङ्गलक्षणत्वादिह इयङुवङौ: कृतयोरनुपधात्वाद्गुणो बहिरङ्गो भविष्यति । एवं न तन्निमित्तग्रहणेन कश्चिद्दोषः । इमानि च भूयस्तन्निमित्तग्रहणस्य प्रयोजनानि 'हतो' 'हथः' 'उपोयते' 'औयत' 'लौयमानिः' 'पौयमानिः' 'नैनिक्तः' इति । नैतानि सन्ति प्रयोजनानि । 'हतो' 'हथः' इत्यत्र "अदिप्रभृतिभ्यः शपः" (२।४।७२) इति यथा

---

अचङन्ते दोष इति । तन्निमित्तप्रत्ययग्रहणे "सार्वधातुकमपित्" (१।२।४) इति ङित्वे क्ङितीत्यनेन गुणनिषेधः प्राप्नोति, तिपि तु लघूपधलक्षणस्य तिब्निमित्तस्य गुणो भवति । सुतरां रि पि गतौ धि धारणे इति तौदादिकानां गुणः प्राप्नोति । सुतरां 'रियति' पियति' 'धियति' इति न सिद्ध्येत् । "णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्" (३।१।४८) इत्यनेन 'अशिश्रियत्' 'प्रादुद्रुवत्' 'प्रासुस्रुवत्' इत्यत्रापि दोषः । तिपमाश्रित्य गुणो बहिरङ्गः, अचङाश्रितौ इयङुवङौ अन्तरङ्गौ, सुतराम् अन्तरङ्गत्वादियङुवङोः कृतयोर्बहिरङ्गो गुणोऽसिद्धः ।

अनुपधात्वादिति । धातोरिक इयङुवङि प्राप्ते रिय पिय धिय इत्याकारेण स्थितो व्यवहितत्वादिकोऽनुपधात्वम् ।

हतो हथ इत्यत्रेति । हन्+तस् हन्+थस् इत्यत्र "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" (६।४।३७) इति नकारस्य लोपः । ततः शपि कृते ह+अ इति स्थितौ "अतो गुणे" (६।१।९७) इत्यनेन पररूपमेकादेशः ततः ह इत्याकारेणावस्थितिः । ततः 'अदिप्रभृतिभ्यः शपः' (२।४।७२) इति शपो निवृत्तौ शपः पित्वात् हस्य गुणत्वमापन्नोऽकारः क्ङितीति निषेधात् निवर्त्तते । न निवर्त्तते, हस्याकारस्य धातूपदेशावस्थायां स्थितत्वात् । यद्यप्यनिग्लक्षणगुणत्वान्न निषेधप्रसङ्गः तथापि परिहारान्तरप्रदर्शनाय तथोक्तम् ।

अदिप्रभृतिभ्य इति । अत्र भाष्यम् "प्रसक्तस्यानभिनिर्वृत्तस्य प्रतिषेधेन निवृत्तिः

शब्निवर्त्त्यते तथा निषेधेन अकारोऽपि निवर्त्त्यते। न निवर्त्त्यते। कथम्? अयन्तु धातूपदेशावस्थायामकारः। 'उपीयते' 'औयत' 'लौयमानिः' 'पौयमानिः' इत्यत्र गुणवृद्धी वहिरङ्गे, अन्तरङ्गः प्रतिषेधः, असिद्धं वहिरङ्गमन्तरङ्गे। 'नेनिक्तः' इति पररूपेण व्यवहितत्वान्न भविष्यति।

उपधार्थेन तावन्नार्थः। "न धातुलोप" इत्यतो धातोरिति वर्त्तते। तेन क्ङित्परत्वेन धातुर्विशेष्यते। यदि क्ङित्परत्वेन धातुर्विशेष्यते 'चिनुतः' 'सुनुतः'

---

शक्या कर्त्तुम्।" अस्यैवाशयमनुसृत्योक्तम् "अदिप्रभृतिभ्य इति यथा शब्निवर्त्त्यते" इत्यादि। "कर्त्तरि शप्" (३।१।७८) इति सार्व्वधातुके अविशेषेण शप् प्राप्नोति सुतरां हन्+तस् इत्यत्रापि तस्य प्रवृत्तिः। अतः प्रसक्तोऽत्र शप्। ततः "अदिप्रभृतिभ्यः शपः" (२।४।७२) इति विशेषलक्षणपर्य्यालोचनया शपोऽनभिनिर्वृत्तिः। ततः प्रक्रियादशायामवस्थितः शपो निवृत्तिः क्ङितीति निषेधेन साध्यते। नन्वेवं सति 'भवतः' इत्यादौ कथं न तादृशः शपोऽकारो निवर्त्त्यते? अत्रभवतीत्यत्र गुणो भवतीत्यनुल्लेखात् नायं गुणनिषेधस्य विषयः।

उपीयत इति। "वेञो यकि सम्प्रसारणे कृते उभयपदाश्रितत्वाद्वहिरङ्गो गुणः। 'औयते'त्यादौ वहिरङ्गाश्रयत्वाद्वहिरङ्गावृद्धिः।"

नेनिक्त इति। अत्र ने इति अभ्यासस्य कार्य्यित्वम्। तस्य च निज् इति पररूपेण व्यवहितत्वात् न निषेधविषयत्वम्। "निजां त्रयाणां गुणः श्लौ" (७।४।७५) इत्यनेन अभ्यासस्य गुणः।

धातोरिति। "न धातुलोप" इत्यत्र धातुशब्दस्योपसर्ज्जनत्वेऽपि धातौ धातुशब्दमात्रस्य स्वरितत्वादिहानुवृत्तिः।

यदीति। क्ङित्यनन्तरस्य धातोर्गुणवृद्धी न भवत इति वाक्यार्थत्वात् धातोर्विहितस्य विकरणस्याधातुत्वान्न गुणवृद्ध्योर्निषेधः।

'लुनीतः' 'पुनीतः' इति विकरणस्य न प्राप्नोति। नैष दोषः। धातोर्यो विहित इति धातुग्रहणं विहितविशेषणम्। यदि विहितविशेषणं तदा धातोरेव न प्राप्नोति। नैवं विज्ञायते धातोर्विहितस्य क्ङितीति, किन्तर्हि धातोर्विहिते क्ङितीति अथवा "कार्य्यकालं संज्ञापरिभाषम्" यत्र कार्य्यं, तत्र द्रष्टव्यम्। "पुगन्तलघूपधस्ये"ति उपस्थितमिदं भवति "क्ङिति चे"ति। अथवास्मिन् योगे क्ङिद्ग्रहणमनवकाशं, तस्यानवकाशत्वात् गुणवृद्धी न भवतः। अथवा "वसिरुधिमुषिपिचिपेः क्त्वः" (१।२।१४०) "इको झल्" (१।२।९) "हलन्ताच्च" (१।२।१०) इति क्त्वसनोः कितोः करणात् ज्ञायते भवत्युपधालक्षणस्य प्रतिषेध इति, अन्यथा यत्र गुणो न स्यात् कित्करणमनर्थकं स्यात्। उपधालक्षणस्यापि गुणो भवतीति क्त्वसनौ कितौ क्रियेते।

रीरवीत्यर्थेनापि नार्थः। न ह्यत्र कित् ङिद्वा दृश्यते। "प्रत्ययलोपे प्रत्ययलक्षणम्" (१।१।६२) इत्यनेन यङ्लुगन्तत्वात् प्रत्ययलक्षणेन ङित् दृश्यते। "न लुमताङ्गस्य" (१।१।६३) इति प्रत्ययलक्षणनिषेधः। अथवा "न लुमताङ्गस्ये"ति चेत् न उच्यते तथापि न दोषः, अतः लुमता लुप्तेऽङ्गाधिकारो न प्रतिनिर्द्दिश्यते किन्तर्हि योऽसौ

---

विहितविशेषणमिति। धातोर्यो विहितस्तस्य क्ङिति गुणवृद्धी न भवत इति वाक्यार्थे विहितस्यैव प्राप्नोति न तु धातोः।

धातोर्विहित इति। धातोर्विहिते क्ङित्यनन्तरो धातुर्विकरणो वा तस्य गुणवृद्धी न भवत इति तदा वाक्यार्थः।

अथवेति। "कार्य्यकालं संज्ञापरिभाषम्" इति परिभाषा। यदा कार्य्यं भवति तदा तदुपयोगिन्याः संज्ञायाः परिभाषायाश्चोपस्थितिर्भवति। एवं यदा यत्र गुणवृद्धी विधीयेते तदा तत्र क्ङिति नेत्युपतिष्ठते। तेन 'भिन्नः' इत्यादौ "पुगन्तलघूपधस्येति" गुणे प्राप्ते "कार्य्यकालं संज्ञापरिभाष"मित्यनेन क्ङिति नेत्यस्योपस्थानम्।

अनवकाशत्वादिति। निषेधस्यावश्यम्भावित्वात् गुणे प्रतिषेधो व्यवहितेऽपि प्राप्नोति।

न ह्यत्रेति। रीङ्+तिप् इत्यत्र यङो लुकि तिपि कृते न पुनरत्र ङित् किद्वा दृश्यते।

लुमता लुप्यते तस्मिन् यत् अङ्गं तस्य यत् कार्य्यं तन्न भवतीति । अङ्गाधिकारप्रति-निर्द्दिष्टेऽपि न दोषः, "कार्य्यकालं सञ्ज्ञापरिभाष"मिति यत्र कार्य्यं तत्र द्रष्टव्यम् । सार्व्व-धातुकार्द्धधातुकयोर्गुणो भवतीति "क्ङिति ने"ति तत्रोपस्थितं भवति । अथवा छान्दस-मिदम् । "दृष्टानुविधिश्छन्दसि भवति ।" अथवा वहिरङ्गो गुणोऽन्तरङ्गनिषेधः ; असिद्धं वहिरङ्गमन्तरङ्गे । अथवा पूर्व्वस्मिन् योगे यदार्द्धधातुकग्रहणं तदनवकाशं तस्मा-नवकाशत्वादगुणो भविष्यति ।

इह कस्मान्न भवति ? 'लैगवायनः' 'कामयते' ।

## ४ । तद्धितकाम्योरिक् प्रकरणात् ।

इग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः, न चैते इग्लक्षणे ।

## ५ । लकारस्य ङित्त्वादादेशेषु स्थानिवद्भाव-प्रसङ्गः ।

लकारस्य ङित्त्वात् 'असुनवम्' 'अकरवम्' इत्यत्रादेशेषु ङिद्वद्भावः प्राप्नोति ।

---

तत्र द्रष्टव्यमिति । तदेव दर्शयति "सार्व्वधातुकार्द्धधातुकयोर्गुणो भवतीति क्ङिति नेति ।" कार्य्यकाल निषेधपरिभाषाया उपस्थानम् ।

आर्द्धधातुकग्रहणमिति । रोरवीति सार्व्वधातुकत्वात् गुणो भवति । कथम् ? पूर्व्वसूत्रे यदार्द्धधातुकग्रहणं कृतं तस्मानवकाशत्वात् आर्द्धधातुक एव गुणनिषेधो न तु सार्व्वधातुक इति पर्य्यवस्यति ।

लैगवायन इति । लिगोर्नड़ादित्वात् "नड़ादिभ्यः फक्" (४।१।९९) इति फक् । आदिवृद्ध्यनन्तरं "ओर्गुणः" (६।४।१४६) इति उकारस्य गुणः । गुणस्य इक्स्थानि-कत्वेऽपि न निषेधः । इक इत्येवं विहितत्वाभावात् ।

ङित्त्वादिति । लुङ्लङ्लृङ्क्षु ङिद्दर्शनात् लस्य ये आदेशा भवन्ति तेषां स्थानिवद्भा-वात् ङित्त्वात् ङिज्जन्यं गुणवृद्ध्योर्निषेधः प्राप्नोति ।

## ६। लकारस्य ङित्त्वादादेशेषु स्थानिवद्भावप्रसङ्ग इति चेत् यासुटो ङिद्वचनात्सिद्धम् ।

यासुटो ङिद्वचनेन ज्ञाप्यते न ङिदादेशा ङिद्भवन्ति। यद्येवं ज्ञाप्यते कथम् "नित्यं ङितः" (३।४।९९) "इतश्च" (३।४।१००) इति। ङितो यत् कार्य्यं तद्भवति; ङिति यत् कार्य्यं तन्न भवतीति। किं वक्तव्यमेतत् ? न। यासुटो ङिद्वचनादेव ज्ञायते समुदायस्य ङित्त्वं यासुडपर्य्याप्तः। अतः यासुट एव ङित्त्वं क्रियते। ङितो यत् कार्य्यं तत्स्यादङिति यत् कार्य्यं तन्मा भूदिति तस्य ङित्करणे प्रयोजनम् ।

———

यासुट इति। लकारस्य ङित्त्वात् न आदेशानां ङित्त्वम्। यदि तेषां ङित्त्वं स्यात् "यासुट् परस्मैपदेषूदात्तो ङिच्च" (३।४।१०३) इति ङित्करणमनर्थकं स्यात्, लकारस्य ङित्त्वादेव स्थानिवद्भावात् आदेशस्य यासुटोऽपि ङित्त्वं स्यात्। तस्माद्यासुटो ङित्करणं ज्ञापयति लकाराश्रयङित्त्वमादेशानां न भवतीति।

ङितो यत्कार्य्यमिति। "नित्यं ङितः" (३।४।९९) इत्यत्र ङितः कार्य्यं लकारस्य विशेषणत्वेन लुङ् लङ् लृङ् इति निष्पादनम्। तत् सिद्ध्यति, न तु ङिति यत्सम्प्रसारणादिकम्।

ङिद्वचनादेवेति। यदि हि ङिति यत्कार्य्यं सम्प्रसारणादिकं तत्स्यात् यासुटो ङिद्वचनमनर्थकं स्यादिति पूर्व्वमुक्तम्। सुतरां ङिद्वचनमेवात्र ज्ञापकं "नित्यं ङितः" इत्यत्र ङिति यत्कार्य्यं तन्न भवतीत्यस्य।

अपर्य्याप्त इति। यासुटि ङित्करणं सम्प्रसारणविधानेन चरितार्थम्। इदं ङित्करणं न समुदायस्य ङित्करणेन पर्य्याप्तं सुतरां "नित्यं ङितः" इत्यतो ङिदनुवर्त्तमानेऽपि यासुटो ङिद्वचनम्।

तस्य ङित्करण इति। अनेनापर्य्याप्तत्वं दर्शयति। समुदायस्य ङित्त्वे यासुटस्तद्करणे लुङादिप्रदर्शनमात्रं फलं स्यात् न तु ङिति यत्सम्प्रसारणादिकं कार्य्यं तत् स्यादिति तस्य यासुटो ङित्करणे प्रयोजनम्।

# दीधीवेवीटाम्। १। १। ६।

म॰ वृ॰। दीधीवेव्योरिटश्च ये गुणवृद्धी प्राप्नुतस्ते न भवतः। 'आदीध्यनम्' 'आदीध्यकः' 'आवेव्यनम्' 'आवेव्यकः'। इटः खल्वपि—'कणिता श्वः' 'रणिता श्वः'। वृद्धिरिटो न सम्भवतीति लघूपधगुणस्यात्र प्रतिषेधः।

भा॰ स॰। किमर्थमिदमुच्यते? 'आदीध्यनम्' 'आदीध्यकः' 'आवेव्यनम्' 'आवेव्यकः' इत्यत्र गुणवृद्धी मा भूतामिति।

अयं योगः शक्योऽकर्त्तुम्। कथम्?

१। दीधीवेव्योश्छन्दोविषयत्वाद्-
दृष्टानुविधित्वाच्च छन्दसः।
अदीधेददीधयुरिति
गुणदर्शनादप्रतिषेधः॥

दीधीवेव्यौ छन्दोविषयौ धातू। भवति हि छन्दसि दृष्टानुविधिः। 'अदीधेत्'

---

छन्दोविषयाविति। नैतौ धातू भाषायां प्रयुज्येते।

दृष्टानुविधिरिति। दृष्टमेवानुविधीयते इति दृष्टानुविधिः। 'आदीध्यनम्' 'आदीध्यकः' 'आवेव्यनम्' 'आवेव्यकः' इति प्रयोगा न हि छन्दसि दृश्यन्ते दृश्यते च तत्र गुण एव सुतरां नात्यत्र दृष्टानामनुविधानमिति वृथैव निषेधारम्भः। यद्यपि भाषायामपि दृष्टमेवानुविधीयते, "सिद्धे शब्दार्थसम्बन्धे" इति न्यायात् तथाप्यत्र विज्ञानादिप्रयोजनवशात् लक्षणनिष्पन्नशब्दानामदृष्टानामपि व्यवहारो लोकप्रसिद्धत्वात् छन्दोवद्दृष्टानुविधित्वं नानैकान्तिकमिति सिद्धाति "दृष्टानुविधिश्छन्दसि" इति।

अदीधेदिति। अत्र पित्वाद्गुणो न विरुध्यते। अदीधयुरित्यत्र प्रत्ययस्य ङित्व-

'अदीधयुः' इति तत्र गुणदर्शनात् अनर्थकः प्रतिषेधः । तथाहि "प्रजापतिर्वै यत् किञ्चन मनसा अदीधेत्" "होत्राय वृतः कृपयन्नदीधेत्" "अदीधयुर्दाशराज्ञे वृतासः" ।

'अदीधेत्' इति युक्तमुदाहरणं न तु 'अदीधयुः' इति । कथम् ? सार्वधातुकाश्रयङित्त्वनिमित्ते प्रतिषेधे "जुसि च" (७।३।८३) इति जुसि गुण आरभ्यमाणः 'क्ङिति च' (१।१।५) इत्येनं यथा बाधते तथा "दीधीवेवीटाम्" इत्येनमपि । नैष दोषः, यत एकत्र प्रत्ययाश्रयः, अन्यत्र प्रकृत्याश्रयः । अथवा येन नाप्राप्ते तस्य बाधनं भवति, अस्मिन् पुनः प्राप्ते चाप्राप्ते च ।

यदि पुनरयं योगो नारभ्यते, कथं 'दीध्यत्' इति ?

## २ । दीध्यदिति श्यन्व्यत्ययेन ।

---

मिति गुणो न युक्तः, "जक्षित्यादयः षट्" (६।१।६) इति दीधीवेव्योरभ्यस्तसंज्ञा । "सिजभ्यस्तविदिभ्यश्च" (३।४।१०९) इति झेर्जुस् ।

प्रत्ययाश्रय इति । "क्ङिति च" इत्यत्र प्रत्ययाश्रयः अत्र तु दीधीवेव्योरिति प्रकृत्याश्रयः ।

तस्य बाधनमिति । 'क्ङिति' नेत्येतस्मिन् नाप्राप्ते जुसि गुण आरभ्यते सुतरां तस्य निषेधस्य बाधनं जुसि गुणेन । अत्र तु प्रकृतिप्रत्यययोरुभयोर्ग्रहणेन प्राप्ताप्राप्तत्वम् । 'दीधीवेव्यो'रिति प्रकृत्याश्रयो निषेधः 'क्ङिति चे'ति प्रत्ययाश्रयनिषेधः । सुतरां जुसि गुणः प्रकृतिप्रत्ययाश्रयनिषेधं बाधते, सिद्धमिति च युक्तत्वेन 'अदीधयुः' इत्युदाहरणम् ।

दीध्यदिति । लेट् तिप् "इतश्च लोपः परस्मैपदेषु" (३।४।९७) इति इकारलोपः । ततः दीधी+त् इति स्थिते "लेटोऽडाटौ" (३।४।९४) इति अडागमेन सिद्धमिति 'दीध्यत्' इति पदम् ।

अन्व्यत्ययेन दीध्यदिति भविष्यति।

इटश्चापि ग्रहणं शक्यमकर्त्तुम्। कथम् 'अकणिषम्' 'अरणिषम्' 'कणिता श्वः' 'रणिता श्वः' इति। "आर्द्धधातुकस्येड्वलादेः" (७।२।३५) इत्यत्र "नेड्वशि कृति" (७।२।८) इत्यतो इडित्यनुवर्त्तमाने पुनरिड्ग्रहणस्येदं प्रयोजनम् इट् इडेव स्यात् यदन्यत् प्राप्नोति तन्मा भूत्। किमन्यत् प्राप्नोति? गुणः। यदि नियमः क्रियते, तदा पिपठिषतेः 'पिपठीः' इत्यत्र "र्वोरुपधाया दीर्घ इकः" (८।२।७६) इति दीर्घत्वं न

---

अन्व्यत्ययेनेति। अनो ङित्त्वाद्गुणाभावः। "यीवर्णयोर्दीधीवेव्योः" (७।४।५३) इत्यनेन यकारादौ दीधीवेव्योर्लोपात् 'दीध्यत्' इति पदं पूर्व्वोक्तदिशा सिद्धम्। अव्यत्ययेनेति पाठान्तरे तु अस्य ङित्त्वान्न गुणः। "एरनेकाचोऽसंयोगपूर्व्वस्य" (६।४।८२) इति यणादेशः।

अकणिषमिति। सिपो हि अमिप् सुतरां पित्त्वात् सिजन्ताङ्गस्य लघूपधो गुणः प्राप्नोति।

कणितेति। तिपो डादेशे तासप्रत्ययः। तस्य पित्त्वाद्गुणः सम्भवति।

नेड्वशि कृतीति। "नेड्वशि कृति" इत्यत्र नकारस्य निवृत्तेः ततः इडनुवर्त्तनम् "आर्द्धधातुकस्येड्वलादेः" इत्यत्र "नेड्वशी"त्यत इडनुवर्त्तमान इतीड्ग्रहणस्य भाष्ये प्रत्याख्यातत्वात् अवश्यं प्रत्याख्यानसम्पादकं भाष्यमेकादेशयुक्तिघटितमिति विवरणकारः।

पिपठीरिति। पिपठिषतेः क्विप्। "अतो लोपः" (६।४।४८) इत्यकारलोपः। ततः पिपठिष् इत्यत्र "पूर्व्वत्रासिद्धम्" (८।२।१) इति षत्वस्यासिद्धत्वात् "ससजुषो रुः" (८२६६) इति सस्य रुत्वम्, 'पूर्व्वत्रासिद्धे न स्थानिवत्" इति रुत्वे अल्लोपस्य स्थानिवद्भावाभावः। इडेव इट् स्यादिति नियमेन यदि गुणादिप्रतिषेधेन इड्रूपेणैवावस्थितिः निष्पाद्यते तदा "र्वोरुपधाया दीर्घ इकः" (८।२।७६) इत्यनेन पिपठिर् इति रेफान्तधातोरुपधाया इको दीर्घत्वमनेन नियमेन बाध्यते

प्राप्नोति । नैष दोषः । नियमस्तेऽत्राङ्गं कार्य्यं, नैतदाङ्गं कार्य्यम् । अथवा दीर्घस्यासिद्धत्वात् न भविष्यति नियमः ।

---

## हलोऽनन्तराः संयोगः । १ । १ । ७ ।

म॰ वृ॰ । भिन्नजातीयैरज्भिरव्यवहिताः श्लिष्टोच्चारिता हलः संयोगसंज्ञा भवन्ति । समुदायः संज्ञी जाताविदं बहुवचनम् । तेन द्वयोर्बहूनाञ्च संयोगसंज्ञा सिद्धा भवति । 'अग्निः' इति गनौ 'अश्वाः' इति शवौ 'कर्णः' इति रणौ 'इन्द्रः' 'चन्द्रः' 'मन्द्रः' इति नदराः 'उष्ट्रः' 'राष्ट्र' 'भ्राष्ट्रम्' इति षटराः, तिलान्त्स्यावपतीति नसतरयाः ।

हल इति किम् ? 'तितउच्छत्रम्' "संयोगान्तस्य लोपः" (८।२।२३) इति लोपः स्यात् ।

अनन्तरा इति किम् ? 'पचति पनसम्' "स्कोः संयोगाद्योः" (८।२।२९) इति लोपः स्यात् ।

---

नैष दोष इति । "अङ्गस्य" (६।४।१) इत्यनुवर्त्तनात् "आर्द्धधातुकस्येड्वलादेः" (७।२।३५) इत्यत्र अङ्गाविकारगतगुणसम्पर्कीयो नियमोऽवगम्यते । "र्वोरुपधाया दीर्घ इकः" (८।२।७६) इत्यत्रत्यं दीर्घत्वं न ह्यङ्गाधिकारगतं सुतरां नियमेन न बाध्यते ।

दीर्घस्यासिद्धत्वादिति । दीर्घत्वं हि पूर्वत्र असिद्धं सुतरां कृतेऽपि अकृतवदिति तत्र नियमस्याप्रचरः । ततः "शास्त्रदृष्ट्या अविकृतरूप एवेट्, प्रयोग एव तु विकृतः ।"

---

भा. स. । अनन्तरा इत्यत्र अविद्यमानमन्तरं येषामिति आहोस्वित् अविद्यमाना अन्तरा एषामिति । प्रथमे 'अप्सु' इति 'अप्‌सु' इत्यवग्रहे संयोगसंज्ञा न प्राप्नोति । द्वितीये न कश्चिद्दोषः, यतः अन्तरा मध्ये अविद्यमाना अन्ये वर्णा इति तस्यार्थः । प्रथमेऽपि न दोषः । कथम् ? इह संज्ञाकरणे नैव दोषो न प्रयोजनम् ।

# १ । संयोगसंज्ञायां सहवचनं यथान्यत्र ।

सहभूतानां संयोगसंज्ञा स्यान्न एकैकस्येति संयोगसंज्ञायां सहग्रहणं कर्त्तव्यम् । ततो हलोऽनन्तराः संयोगः ।" सहेति, वक्तव्यमिति । यथा "सह सुपा" (२।१।४) "उभे अभ्यस्तम्" (६।१।५) सहेति, अन्यत्रापि सहभूतकार्य्येच्छायां सहग्रहणम् । एकैकस्य संयोगसंज्ञायां किञ्च स्यात् ?

---

अन्तरा इति । अन्तरं अन्तरा वाव नञा बहुव्रीहेर्विषय इति संशयः ।

प्रथम इति । अविद्यमानमन्तरं येषामिति पक्षे ।

अवग्रह इति । अर्द्धमात्राकालोऽवग्रहः । अर्द्धमात्राकालं स्थित्वा वर्णान्तरमुच्चार्य्यते सुतरां वर्णात् वर्णान्तरोच्चारणे अन्तरं विवरं वर्णशून्यकाल उपस्थीयते । एवं संयोगत्वव्याहतत्वात् न संयोगसंज्ञा ।

द्वितीये इति । अविद्यमाना अन्तरा एषामिति पक्षे ।

नैव दोष इति । संयोगसंज्ञायां "संयोगे गुरु" (१।४।११) इति गुरुत्वात् "गुरोरनृतः" इति (८।२।८६) प्लुतेन भाव्यम् । संयोगसंज्ञायामसिद्धायां प्लुतो न भवेत् । 'अप्सु' इत्यस्याधिकरणवृत्तेः न चात्र "दूराद्धूते च" (८।२।८४) इत्यस्य सम्बन्धः । "विचार्य्यमाणानाम्" (८।२।९७) इत्यादौ तु "वाक्यस्य टेः" (८।२।८२) इत्यनुवर्त्तते न तु "गुरोरनृतः" इति । अप्सु भवोऽप्सव्यः—"दिगादिभ्यो यत्" (४।३।५४) इति यत्, "अपो योनियन्मतुषु सप्तम्या अलुग्वक्तव्यः । * ।" इति सप्तम्या अलुक् । एवं सिद्धेऽप्सव्यशब्दे स्यादेव दोष इति चेत्, एवंविधे विषये पदकारा अवग्रहं न कुर्व्वन्तीति न दोषः । "अप्सुयोनिः" इत्यादावपि नास्ति सुशब्दात् पूर्व्वमवग्रहः । सुतरां दोषाभावात् प्रयोजनाभावात् तदेतीनांच संज्ञाकरणम् ।

एकैकस्य संयोगसंज्ञायां सत्यां 'निर्यायात्' 'निर्व्वायात्' इत्यत्र "वान्यस्य संयोगादेः" (६।४।६८) इति एत्वम्, 'संस्त्रषीष्ट' इत्यत्र "ऋतश्च संयोगादेः" (७।२।४३) इति इट्। 'संक्रियते' इत्यत्र "गुणोऽर्त्तिसंयोगाद्योः" (७।४।२९) इति गुणः, 'हषत्करोति' 'समित्करोति' इत्यत्र "संयोगान्तस्य लोपः" (८।२।२३) इति लोपः, 'मङ्क्ता' 'वस्ता' इत्यत्र "स्कोः संयोगाद्योरन्ते च" (८।२।२९) इति लोपः, 'निर्यातः' 'निर्व्वातः' इत्यत्र "संयोगादेरातो धातोर्यण्वतः" (८।२।४३) इति निष्ठानत्वम्, प्रसज्येत ।

नैष दोषः । 'निर्यायात्' 'निर्व्वायात्' इत्यत्र "वान्यस्य संयोगादे"रिति सूत्रस्य संयोगौ आदी यस्य इत्यर्थात् न दोषः । एवमन्यत्र संयोगादिशब्दस्यार्थात्परिहारः । 'हषत्करोति' 'समित्करोति' इत्यत्र संयोगान्तस्येति संयोगौ अन्तौ अस्येत्यर्थात्,

---

निर्यायादिति । अत्र एकैकस्य संयोगसंज्ञायां रेफयुक्तयकारः संयोगः सुतरामेत्वप्राप्तिः । समुदायस्य संज्ञित्वपक्षे "अचो रहाभ्यां द्वे" (८।४।४६) इति यकारस्य द्वित्वे तस्यासिद्धत्वात् "वान्यस्य संयोगादेः" (६।४।६८) इति एत्वं न प्राप्नोति ।

हषत्करोतीति । ककारसन्निधौ दकारस्य संयोगत्वात् संयोगान्तलोपः स्यात् ।

मङ्क्तेति । "तकारे झलि परतः ककारः संयोगी भवति आदिश्चेति लोपप्रसङ्गः ।"

आदी इति । द्वौ आदी इति वचनमयुक्तम् । न ह्युभावानन्तर्येण स्थितौ द्वौ आदी भवितुं समर्थौ । एकस्य मुख्यमादित्वमन्यस्य गौणमिति समाधेयम् । कथं पुनरत्र संयोग आदिर्यस्येति एकत्वमनुपलभ्य संयोगौ आदी यस्येति द्वित्वमुपलभ्यते । एकत्वे सति संयोगादेरित्यनुक्त्वा, संयोगादित्युक्ते संयोगात् परो य आकारस्तस्याङ्गस्येत्वमित्यर्थलाभः स्यात्, सुतरां "वान्यस्य संयोगा"दिति सूत्रयेत् ।

संयोगावन्ताविति । संयोगस्य लोप इत्युक्ते संयोगस्य पदस्येत्युपस्थितेः "अलोऽन्त्यस्ये"त्यनेन अन्तग्रहणं स्यात् । एवं सति यदन्तग्रहणं कृतं तेन ज्ञापयति अत्र संख्याभेदस्य ग्रहणं भवतीति ।

'भक्ता' 'वस्ता' इत्यत्र स्कोः संयोगाद्योरित्यत्र संयोगयोरादी संयोगाद्योरित्यर्थात्, 'निर्यातः' 'निर्व्वातः' संयोगौ आदी यस्येत्यर्थात् दोषासम्भवः ।

कथं कृत्वा एकैकस्य संयोगसंज्ञा प्राप्नोति ? "प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टा" इति । तद्यथा वृद्धिगुणसंज्ञे प्रत्येकं भवतः । "गर्गाः शतं दण्ड्यन्ता"मित्यस्ति पुनः "समुदाये वाक्यपरिसमाप्तिः" इति । सत्येतस्मिन् दृष्टान्ते यदि प्रत्येकमित्युक्तम् इहापि सहग्रहणं कर्त्तव्यम् । तत्र प्रत्येकमित्यनुक्तेऽपि प्रत्येकं गुणवृद्धी संज्ञे भवतः, इहापि नार्थः सहग्रहणेन ।

अथ यत्र बहूनामानन्तर्यं किन्तत्र द्वयोर्द्वयोः संयोगसंज्ञा भवति, आहोस्विदविशेषेण । कश्चात्र विशेषः ?

## २ । समुदाये संयोगादिलोपो मस्जेः ।

समुदाये संयोगसंज्ञायां 'मङ्क्ता' 'मङ्क्तुम्' इति मस्जेः संयोगादिलोपो न सिद्ध्यति । 'निर्ग्लेयात्' 'निर्ग्लायात्' निर्म्लेयात्' 'निर्म्लायात्' इत्यत्र "वान्यस्य संयो-

---

संयोगयोरिति । स्कोर्द्वित्वात् तत्समीपवर्त्तिनोरपि हलोर्द्वित्वात् संयोगयोरिति द्विर्व्वचननिर्द्देशः कृतः ।

संयोगाविति । संयोगादित्युक्ते संयोगात् परः आकारस्तदन्ताद्धातोर्नत्वमिति सिद्धौ आदिग्रहणं द्वित्वसंख्याश्रयणार्थम् ।

द्वयोर्द्वयोरिति । "हलोऽनन्तरा संयोगः" इत्यत्र हल इति बहुवचनं जातिनिर्द्देशात् । सुतरां हल इति दृष्ट्वा द्वयोरिति वचनं न विरुध्यते ।

मङ्क्तेति । "मस्जिनशोर्झलि" (७।१।६०) नुमागमः । ततः समुदाये संयोगसंज्ञायां नसजानां संयोगसंज्ञा न तु द्वयोः सजयोः । एवं सति न भवति सकारस्य लोपः ।

निर्ग्लेयादिति । रेफगकारलकाराणां संयोगसंज्ञायामङ्गादिर्न लभ्यते रेफं विहाय च गकारलकारसमुदायो न संयोगः, सुतरां "वान्यस्य संयोगादेः" इत्यस्य न प्राप्तिः ।

गादेः" (६।४।६८) इत्येत्वं न 'स्वरिषीष्ट' इत्यत्र "ऋतश्च संयोगादेः" (७।२।४३) इति इट् न, 'संस्वर्यते' इत्यत्र "गुणोऽर्तिसंयोगाद्योः" (७।४।२९) इति गुणो न; 'गोमान् करोति' 'यवमान् करोति' इत्यत्र संयोगान्तस्य लोपो (८।२।२३) न, 'निग्लानः' 'निम्लानः' इत्यत्र "संयोगादेरातो धातोर्यण्वतः" (८।२।४३) इति निष्ठानत्वं न।

अस्तु तर्हि द्वयोर्द्वयोः संयोगसंज्ञा।

## ३। द्वयोर्हलोः संयोग इति चेत् द्विर्वचनम्।

चेत् द्वयोर्हलोः संयोग इति द्विर्वचनं न सिद्ध्यति। इन्द्रमिच्छति 'इन्द्रीयति' इन्द्रीयतेः सन् 'इन्दिद्रीयिषति' इत्यत्र "न न्द्राः संयोगादयः" (६।१।३) इति दकारस्य द्विर्वचनं न प्राप्नोति।

## ४। न वाज्विधेः।

अज्विधिवशात् न वा एष दोषः। न न्द्राः संयोगादयो द्विरुच्यन्ते, अजादेरिति वर्तते।

---

स्वरिषीष्टेति। स्व इत्यत्र द्वयोः संयोगत्वमनादृत्य समुदायग्रहणे न संयोगादित्वं-भ्यते, एवं संस्वर्यते इत्यत्रापि ज्ञेयम्।

गोमान् करोतीति। अत्र गोमा+न्+त् करोतीत्येवं स्थिते ककारतकारस-मुदायत्वात् न संयोगान्तलोपः।

निग्लान इति। रकारगकारलकारसमुदायत्वात् निर्ग्लैयादित्यत्रोक्तदिशा न निष्ठान-त्वम्।

इन्दिद्रीयिषतीति। इन्द्रीयतेरित्यत्र नदौ दरौ इति द्वौ संयोगौ तत्र दकारस्य संयोगादित्वात् द्विर्वचननिषेधप्रसङ्गः।

अज्विधिवशादिति। "न न्द्राः संयोगादयः" इत्यत्र अजादेरिति वर्तते तेन प्रति-षेधविधिरजाश्रयः। अचासौ आदिश्चेति अजादिः। अजादेरुत्तरस्याव्यवहितस्यैव निषेधः। इन्द्रशब्दस्थो दकारस्तु नकारेण व्यवहितः सुतरां द्विर्वचनं प्राप्नोति।

यद्येवं बहूनामथापि द्वयोर्द्वयोः संयोगसंज्ञा किं गतमियता सूत्रेण ? आहोस्वित् अन्यतरस्मिन् पक्षे भूयः सूत्रं कर्तव्यम् ? गतम्। बहूनां संयोगसंज्ञायाम् "अविद्यमानमन्तरमेषा"मिति विग्रहः, यदा हि द्वयोर्द्वयोः 'अविद्यमाना अन्तरा एषा'मिति। द्वयोश्चैवान्तरा कश्चिद्विद्यते वा नवा ? एवमपि बहूनामेव प्राप्नोति। एषामिति येषां निर्देशः तेषामन्येन व्यवधानेन भवितव्यम्।

अस्तु तर्हि समुदाये संज्ञा। ननु चोक्तं 'समुदाये संयोगादिलोपो मस्जे'रिति। नैष दोषः। "अन्त्यात् पूर्वो मस्जेर्मिदनुषङ्गसंयोगादिलोपार्थम्" इत्येतद्वक्ष्यति। अथवा

---

बहूनामिति। अन्तरं छिद्रम्। अविद्यमानं छिद्रं बहूनां चेत् तदा द्वयोः संयोगसंज्ञा न सम्भवति बहूनामेव।

द्वयोरिति। मध्यवाचिना अन्तरेत्यव्ययेन सह बहुव्रीहौ तु द्वयोर्मध्ये आधेयो भवतीति द्वयोर्द्वयोरेव संयोगसंज्ञा भवति।

द्वयोश्चैवान्तरेति। अत्र सम्बन्धमात्रविवक्षया षष्ठी। ननु "अन्तरान्तरेण युक्ते" (२।३।४) इति द्वितीया। अयं षष्ठ्यपवादो योगो नियतावधिकत्वे। यत्र अन्यसहितमसंग्रहवशान्न नियतावधित्वं तत्र सम्बन्धमात्रे षष्ठीति तत्त्वम्।

यानिति। अविद्यमानमन्तरमेषाम्, अविद्यमाना अन्तरा एषामिति एषां पदेन बहुवचननिर्देशात् यानिति निर्देशः। एवं बहुत्वनिर्देशे बहूनामेव संयोगे संयोगसंज्ञा, न तु द्वयोरिति न बोद्धव्यम्। एवं सति 'शिक्षा' इत्यत्र द्वयोः संयोगसंज्ञा न स्यात्। बहुवचनमविवक्षितमिति मन्तव्यम्। हल इति जातौ बहुवचनम्।

अन्त्यात् पूर्व इति। "मिदचोऽन्त्यात् परः" (१।१।४७) अचां सन्निविष्टानामन्त्यादचः परतो मिद्भवति। अत्र तु अन्त्यात् पूर्वः नुम् भवति, 'मग्नः' इति अनुषङ्गलोपार्थम् 'मङ्क्ता' 'मङ्क्तुम्' इति संयोगलोपार्थम्। अन्त्यादचः परे नुमि सति "अनिदितां हल उपधायाः क्ङिति" (६।४।२४) इति अनुपधात्वात् नलोपो न प्राप्नोति, संयोगादिलोपे तस्यासिद्धत्वादनुपधात्वमेव नकारस्य। उपधाभूतस्य नकारस्यानुषङ्ग इति प्राचां संज्ञा।

द्वयोरपि बहूनामपीत्यविशेषेण संयोगसंज्ञा, तत्र द्वयोर्या संज्ञा तदाश्रयो लोपो भविष्यति। निर्ग्लायादित्यादिषु अङ्गेन संयोगादिं विशेष्य अङ्गस्य संयोगादेरिति सिद्धेत्वम्। एवं सर्व्वनाङ्गं परिहृतम्। गोमान् करोतीत्यादिषु पदेन संयोगान्तं विशेष्य पदस्य संयोगान्तस्येति सिद्धेत् लोपः। 'निर्ग्लानः' 'निर्म्लानः' इत्यत्र धातुना संयोगादिं विशेष्य धातोः संयोगादेरिति निष्ठानत्वं स्यात्।

## ५। स्वरानन्तर्हितवचनम्।

स्वरैरनन्तर्हिता हलः संयोगसंज्ञा भवन्तीति वक्तव्यम्। व्यवहितानां मा भूत्— 'पचति पनसम्'। न च वक्तव्यम् अनन्तरशब्देनैव व्यवधानानवगमः;

## ६। दृष्टमानन्तर्य्यं व्यवहितेऽपि।

व्यवहितेऽपि अनन्तरशब्दो दृश्यते, तद्यथा 'अनन्तराविमौ ग्रामौ'। तयोश्चैवान्तरा नद्यश्च पर्व्वताश्च भवन्ति।

---

अविशेषेणेति। बहूनामपि द्वयोर्द्वयोरपि भवति बहुष्वनन्तरेष्वित्यविशेषः। "कार्य्यार्थत्वात् संयोगसंज्ञाया विरोधाभावात्, एकया संज्ञया सर्व्वेषामनुग्रहासिद्धा द्विर्व्वचनेन वैषम्यादविशेषेणेत्युक्तम्। बहूनां सन्निधौ बहूनामेव संयोगसंज्ञेत्यस्मिन् पक्षे आम्रीयमाणे मस्ज्जेर्दोषोऽन्त्यात् पूर्व्वे इति परिहृतः।"

अङ्गेन संयोगादिमिति। 'निर्ग्लेयात्' इत्यत्र त्रयो हलः। कार्य्यार्थं हि संज्ञा। त्रिषु न कार्य्यम्। अङ्गावयवः पदावयवः धात्ववयवः संयोगः, कार्य्यार्थमवाङ्गावयवसंयोगमाश्रितवान्। निर्+ग्लेयात् इत्यत्र अङ्गस्य संयोगात् कार्य्यं भवति।

पनसमिति। 'पनसम्' इत्यत्र सकारगतेनाचा सह सकारस्य संयोगसंज्ञायां "स्कोः संयोगाद्योरन्ते च" (८।२।२९) इति सलोपः प्रसज्यते।

अनन्तराविति। मध्यगता नद्यादयो यद्यपि व्यवधायकाः तथापि ग्रामसम्बन्धमात्रग्रहणेन जना वदन्ति अनन्तरौ ग्रामाविमाविति।

कथमत्र तदा अनन्तरशब्दः ?

## ७। आनन्तर्य्यवचनं किमर्थमिति चेदेक-प्रतिषेधार्थम्।

एकस्य हलः संयोगसंज्ञा मा भूदित्यानन्तर्य्यवचनम्। यदि स्यात् 'इयेष' 'उवोख' इत्यत्र "इजादेश्च गुरुमतोऽनृच्छः" (३।१।३६) इत्याम् प्रसज्येत।

## ८। न वाऽतज्जातीयव्यवायात्।

सर्व्वत्र हि अतज्जातीयकं व्यवधायकं भवति। अतज्जातीयव्यवधानात् न वा एष दोषः। 'किमनन्तरे एते ब्राह्मणकुले' इति पृच्छति 'नान्तरे' वृषलकुलमनयोरन्तरे, इत्युत्तरम्। ननु कथमनन्तराविमौ ग्रामाविति। ग्रामशब्दोऽयं बह्वर्थः, तद्यथा ग्राम-

---

कथमत्रेति। यदि अन्तरशब्दो व्यवहितेऽपि भवति, तदा कथं "हलोऽनन्तराः संयोगः" इत्यत्र अन्तरशब्दः। तदेव कथयति एकप्रतिषेधार्थमिति।

अतज्जातीयकमिति। लोकदृष्टान्तेन सिद्धान्ति व्यवधानमतज्जातीयेन। हलचो-रतज्जातीयत्वात् व्यवधानं भवति हलोरचा। यथा ब्राह्मणकुलयोर्व्यवधानं न ब्राह्मण-कुलेन, किन्तर्हि वृषलकुलेन।

ग्रामशब्द इति। 'अनन्तराविमौ ग्रामौ' इत्यत्र अतज्जातीयैरस्ति व्यवधानं, तत् 'कथम् अनन्तराविति प्रयोगः। ग्रामशब्देन बहुजातीयानां संग्रहो भवतीति, नास्त्यत्र दोषः। ग्रामः शालासमूहे, यथा ग्रामो दग्धः। "शालासमुदायरक्षणाय सर्व्वतो मार्गप्रतिरोधकं यत्परितः क्षिप्यते तदुच्यते वाटपरिक्षेपः"। वाटपरिक्षेपे यथा 'ग्रामं प्रविष्टः', मनुष्येषु यथा 'ग्रामो गतः' 'ग्राम आगतः'। 'ग्रामो लब्धः' इति प्रयोगे तदन्तर्व्वर्त्तिनामरण्यानां सीनां स्थण्डिलानां संग्रहो भवति। ततो ग्रामशब्दार्थे नद्या-दीनामन्तर्भावात् तेषां व्यवधायकत्वाभावात् ग्रामयोरानन्तर्य्यमुच्यते।

शब्दः भ्राखासमूहे, वाटपरिक्षेपे, मनुष्येषु, सारल्यके, ससीमके, सखण्डित्यके वर्त्तते। सुतरां सिद्ध्यति सर्व्वंच ह्यतज्जातीयकं व्यवधायकं भवतीति।

---

## मुखनासिकावचनोऽनुनासिकः । १ । १ । ८ ।

म. वृ.। मुखसहिता नासिका मुखनासिका तया य उच्चार्य्यते वर्णः सोऽनुनासिकसंज्ञो भवति। "आङोऽनुनासिकश्छन्दसि" (६।१।१२६) 'अभ्र आँ अपः' 'गभीर आँ उग्रपुत्रे' 'घन आँ इन्द्रः [अपः]'।

मुखग्रहणं किम्? अनुस्वारस्यैव हि स्यात्।

नासिकाग्रहणं किम्? क-च-ट-त-पानां मा भूत्।

अनुनासिकप्रदेशाः—"आङोऽनुनासिकश्छन्दसि" (६।१।१२६) इत्येवमादयः।

भा. स.। किमिदं मुखनासिकावचनम्? मुखञ्च नासिका च मुखनासिकं। मुखनासिकं वचनमस्य सोऽयं मुखनासिकावचनः। एवं सति मुखनासिकवचन इति प्राप्नोति। निपातनाद्दीर्घत्वमथवा मुखनासिकमावचनमस्येति, आवचनमीषद्वचनम्

---

मुखनासिकमिति। "द्वन्द्वश्च प्राणितूर्य्यसेनाङ्गानाम्" (२।४।२) प्राण्यङ्गत्वात् समाहारद्वन्द्वः "सनपुंसकम्" (२।४।१७) इति नपुंसकत्वे एकत्वम्।

किञ्चिन्मुखवचनं किञ्चिन्नासिकावचनम्। अथवा मुखद्वितीया नासिका मुखोपसंहिता वा नासिका मुखनासिका मुखनासिका वचनमस्येति।

अथ मुखग्रहणं किमर्थम्? केवलं नासिकाग्रहणेन यमानुस्वाराणामेवानुनासिकत्वं प्राप्नोति।

अथ नासिकाग्रहणं किमर्थम्? केवलं मुखग्रहणेन क-च-ट-त-पानामेव प्राप्नोति।

---

किञ्चिन्मुखवचनमिति। "भागस्य मुखेनोच्चारणात् भागस्य नासिकया।"

मुखद्वितीयेति। मुखसहाया नासिकेत्यर्थः। मुखसहितया नासिकयेत्यर्थः।

मुखोपसंहितेति। मुखोपसन्निहिता नासिका। एवं सान्निध्यवचनेन मुखनासिकयोरन्तरालं स्थानं निर्द्दिश्यते।

वचनमिति। उच्यते इति वचनः "कृत्यल्युटो बहुलम्" (३।३।११३) इति बाहुलकात् कर्म्मणि ल्युट्। उच्यतेऽनेनेति वचनं करणे ल्युट्। करणे ल्युडेव भाष्ये परिगृहीतः। पक्षेऽस्मिन् मुखनासिकेति पदनिरपेक्षत्वेन प्रथमं वचनशब्दं गृहीत्वा "नपुंसकं लिङ्गसर्व्वनाम" इति नपुंसकम्. ततः पदान्तरसम्बन्धादुपजायमानमपि स्त्रीत्वं बहिरङ्गत्वान्न भवति (२० पृ.)।

नासिकाग्रहणेनेति। "मुखनासिकावचनोऽनुनासिक" इत्यनुक्त्वा 'नासिकावचनोऽनुनासिकः' इत्युक्ते इत्यर्थः।

यमानुस्वाराणामिति। यमः समानाकारः। वर्गाणां प्रथमद्वितीयतृतीयचतुर्थवर्णानां पञ्चमे परे पूर्व्ववर्णसमानाकारं वर्णान्तरं यमसंज्ञम्। यथा 'पलिक्क्नीः' 'चख्ख्नतुः' 'अग्ग्निः' 'अघ्घ्नन्'। अत्र क-ख-ग-घानां नकारे परे तत्सदृश-क-ख-ग-घागमः यमः। चेत् यमानुस्वाराणां ग्रहणं स्यात् "विड्वनोरनुनासिकस्यात्" (६।४।४१) इत्यादिषु अनुनासिकानुवादेषु यमानुस्वाराणामसम्भवात् स्यादप्रतिपत्तिः।

मुखग्रहणेनेति। "मुखनासिकावचनोऽनुनासिकः" इत्यनुक्त्वा 'मुखवचनोऽनुनासिक' इत्युक्ते इत्यर्थः। क-च-ट-त-पानामनुनासिकत्वेऽनिष्टप्रसङ्गः 'अत्ता' इत्यत्र

प्रासादवासिन्यायेनोभयवचनसिद्धत्वात् मुखग्रहणं शक्यमकर्त्तुम्। तद्यथा केचित् प्रासादवासिनः, केचिद्भूमिवासिनः, केचिदुभयवासिनः। ये पुनरुभयवासिनः तेषा-मेकतरग्रहणेनापरेषामपि ग्रहणं भवति। एवं मुखनासिकोभयवचनानां केवल-नासिकाग्रहणेन सिद्धं भविष्यति। एवमुभयवचनतासिद्धत्वेऽपि, यमानुस्वाराणामपि ग्रहणं प्राप्नोति। उभयवचनो न तु केवलनासिकावचन इति न दोषः, नापि तेषां ग्रहणे प्रयोजनम्।

सतोऽनुनासिकस्य संज्ञया भवितव्यं संज्ञया चानुनासिको भाव्यतेऽत इतरेतराश्रयं भवति, इतरेतराश्रयाणि च कार्य्याणि न प्रकल्पन्ते। उक्तं (१०२ पृ.) "सिद्धन्तु नित्यशब्दत्वात्" इति। नित्याः शब्दाः, नित्येषु शब्देषु सतोऽनुनासिकस्य संज्ञा क्रियते न संज्ञयाऽनुनासिको भाव्यते। यदि नित्याः शब्दाः, किमर्थं शास्त्रम्? "किमर्थं शास्त्रमिति चेन्निवर्त्तकत्वात् सिद्धम्।" निवर्त्तकं हि शास्त्रम्। तद्यथा आङ् अवि-शेषेणानुनासिक उपदिष्टः, सर्व्वत्र तस्यानुनासिकबुद्धिरुपजायते सा पुनः "आङोऽनु-नासिकश्छन्दसि" इति शास्त्रात् छन्दस्येव परत आङोऽनुनासिकस्य प्रसङ्गेऽनुनासिकः साधुर्भवतीति निवर्त्तते।

---

कस्य 'पक्तः' इत्यत्र चस्य 'तप्तः' इत्यत्र पस्य अनुनासिकत्वात् (६।४।३७) लोपः स्यात् 'ओदनमपक्' इत्यत्र "अनुनासिकस्य क्विझलोः क्ङिति" (६।४।१५) इति दीर्घो भवेत्।

प्रासादवासिन्यायेनेति। प्रासादवासिनः प्रासादवासिग्रहणेन गृह्यन्ते भूमिवासिनो भूमिवासिग्रहणेन गृह्यन्ते, उभयवासिनस्तु प्रासादवासिग्रहणेन भूमिवासिग्रहणेन च।

प्रयोजनमिति। एषां हि नासिक्यत्वात् न तु तद्भागमात्रत्वादिति न प्रयोजनमित्यु-क्तम्। अत्र पुनः दर्शनत्रयं ज्ञेयम्। अनुनासिकस्य पूर्व्वो भागो मुखेन परो भागो नासिकया इति प्रथमम्, परो भागो मुखेन पूर्व्वो भागो नासिकया इति द्वितीयम्, कृत्स्नस्य मुखेन नासिकया इति तृतीयम्। अत्रैव प्रासादवासिन्यायो द्रष्टव्यः अन्यत्र तु केचित् प्रासादवासिनः केचिद्भूमिवासिनः, इति एकेनान्यस्य ग्रहणमसम्भवम्।

# तुल्यास्यप्रयत्नं सवर्णम्। १।१।९।

म. वृ.। तुल्यशब्दः सदृशपर्य्यायः। आस्ये भवमास्यं ताल्वादि स्थानम्। प्रयतनं प्रयत्नः स्पृष्टतादिवर्णगुणः। तुल्य आस्ये प्रयत्नो यस्य वर्णस्य येन वर्णेन सह स समानजातीयं प्रति सवर्णसंज्ञो भवति।

चत्वारः आभ्यन्तरप्रयत्नाः सवर्णसंज्ञायामाश्रीयन्ते, (१) स्पृष्टता, (२) ईषत्स्पृष्टता, (३) संवृतता, (४) विवृतता चेति। अ अ अ इति त्रयोऽकारा उदात्तानुदात्तस्वरिताः प्रत्येकं सानुनासिकनिरनुनासिकाश्च ह्रस्वदीर्घप्लुतभेदादष्टादशधा भिद्यन्ते। तथेवर्णः, तथोवर्णः तथा ऋवर्णः, ऌवर्णस्य दीर्घो न अस्ति, तं द्वादशप्रभेदमाचक्षते। सन्ध्यक्षराणां ह्रस्वा न सन्ति तान्यपि द्वादशप्रभेदानि। अन्तःस्था द्विप्रभेदा रेफवर्ज्जिता यवलाः सानुनासिका निरनुनासिकाश्च। रेफोष्मणां सवर्णा न सन्ति। वर्ग्यो वर्ग्येण सवर्णः। 'दण्डाग्रम्' 'खड्गाग्रम्'।

आस्यग्रहणं किम्? क-च-ट-त-पानां भिन्नस्थानानां तुल्यप्रयत्नानां मा भूत्, किञ्च स्यात्? 'तर्प्तां' 'तर्प्तम्' इत्यत्र "झरो झरि सवर्णे" (८।४।६५) इति पकारस्य तकारे लोपः स्यात्।

प्रयत्नग्रहणं किम्? इचुयशानां तुल्यस्थानानां भिन्नप्रयत्नानां मा भूत्। किञ्च स्यात्? 'अरुश्च्योतति' इत्यत्र

"झरो झरि सवर्णे" (८।४।६५) इति शकारस्य चकारे लोपः स्यात् ।

ऋकारऌकारयोः सवर्णसंज्ञा वक्तव्या ।*। होतृ+ऌकारः 'होतॄकारः' उभयोर्ऋवर्णस्य ऌवर्णस्य चान्तरतमः सवर्णो दीर्घो नास्तीति ऋकार एव दीर्घो भवति ।

सवर्णप्रदेशाः —"अकः सवर्णे दीर्घः" (६।१।१०१) इत्येवमादयः ।

भा. स. । तुलया सम्मितं तुल्यम् । आस्यञ्च प्रयत्नश्च आस्यप्रयत्नम् । तुल्यास्यञ्च तुल्यप्रयत्नञ्च सवर्णसंज्ञं भवति । किं पुनरास्यम् ? लौकिकमास्यम् ओष्ठात् प्रभृति प्राक् काकलकात् । अस्यन्ति वर्णाननेनेति आस्यम् अथवा अन्नम् एतदास्यन्दत इति वा

---

तुलयेति । "नौवयोधर्म्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमित-सम्मितेषु" (४।४।९१) इति तुलाशब्दात् सम्मिते यत् । एवं व्युत्पत्तावपि प्रवीणादिवत् सदृशपर्य्यायोऽयं रूढ़िशब्दः ।

आस्यञ्चेति । तुल्यौ स्थानप्रयत्नौ यस्येति द्वन्द्वगर्भो बहुव्रीहिः । अयमेव पक्षः प्रथमं परिगृहीतः । ततः तुल्यः आस्ये प्रयत्नः एषामिति त्रिपदो बहुव्रीहिः, ततः तुल्यः आस्ये तुल्यास्यः—मयूरव्यंसकादित्वात् समासः, तुल्यास्यः प्रयत्नः एषामिति अथ तुल्यास्य-शब्दयोस्तत्पुरुषस्ततो बहुव्रीहिः, अथवा आस्ये प्रयत्न आस्यप्रयत्नः, तुल्य आस्यप्रयत्न एषाम् इति आस्यप्रयत्नशब्दयोस्तत्पुरुषः ततो बहुव्रीहिः इति पक्षचतुष्टयम् ।

लौकिकमिति । लोके यत् आस्यमिति प्रसिद्धम् ।

काकलकादिति । ग्रीवाया उन्नतप्रदेशः काकलकम् ।

अस्यन्तीति । अस्यन्ति उच्चारयन्ति वर्णाननेनेति आस्यम्, असु क्षेपणे इति धातोः "कृत्यल्युटो बहुलम्" (३।३।११३) इति बाहुलकात्करणे ण्यत् ।

अन्नमिति । अन्नं कर्तृ एतत् आस्यम् आस्यन्दते द्रवीकरोतीति आस्यम् । आङ्-पूर्वात् स्यन्दतेः "अन्येष्वपि दृश्यते" (३।२।१०१) इति डः ।

आस्यम् । प्रयतनं प्रयत्नः । प्रयतः प्रपूर्व्वाद्यततेर्भावसाधनो नङ् प्रत्ययः । लौकिकमास्यं चेत् सर्व्वेषां तत्तुल्यं किमास्यग्रहणेन ? वक्ष्यत्येतत् प्रयत्नविशेषणमास्योपादानमिति ।

१ । सवर्णसंज्ञायां भिन्नदेशेष्वतिप्रसङ्गः प्रयत्नसामान्यात् ।

प्रयत्नसामान्यात् समानप्रयत्नानां ञवगडदशां सवर्णसंज्ञायां भिन्नदेशेष्वतिप्रसङ्गो भवति ।

२ । सिद्धं त्वास्ये तुल्यदेशप्रयत्नं सवर्णम् ।

सिद्धम् । कथम् ? आस्ये तुल्यो देशः प्रयत्नश्च येषां सवर्णसंज्ञा भवतीति वक्तव्यम् ।

---

सर्व्वेषामिति । सर्व्वे वर्णा आस्य एव उच्चार्य्यन्ते, सुतरां व्यर्थमास्यग्रहणम् ।

प्रयत्नविशेषणमिति । न हि केवलं प्रयत्नग्रहणे सिद्ध्यति सवर्णसंज्ञा तथा सति समानप्रयत्नानां क-च-ट-त-पानां सवर्णत्वं स्यात् ।

ञ-व-ग-ड-दशामिति । शकारस्य विवृतत्वात् अप्रसङ्गेऽपि तदचग्रहणं प्रत्याहारपाठवशात् सुतरां ञ-व-ग-ड दानामिति तत्त्वम् ।

भिन्नदेशेष्विति । इन्वपचे न हि आस्यं प्रयत्नविशेषणं सुतरां मुखप्रयत्नयोः समानत्वात् भिन्नस्थानानामपि सवर्णसंज्ञा प्राप्नोति ।

देश इति । देशः स्थानम् । स्थानं यथा—अकुहविसर्ज्जनीयाः कण्ठाः, इचुयशाः तालव्याः, ऋटुरषा मूर्द्धन्याः, लृतुलसा दन्त्याः, उपूपध्मानीया ओष्ठ्याः, ए ऐ कण्ठतालव्यौ ओ औ कण्ठोष्ठ्यौ, वकारः दन्तौष्ठ्यः, जिह्वामूलीयः जिह्वामूलस्थानः, अनुस्वारो नासिक्यः ।

प्रयत्न इति । प्रयत्नो द्विविधः, आभ्यन्तरः बाह्यश्च । तत्र प्रयत्नः—स्पृष्टता, ईषत्स्पृष्टता, संवृतता, विवृतता चेति । द्वितीयस्तु एकादश संवारादयो मूले एव वक्ष्यन्ते।

एवमपि सर्व्वेषां तत्तुल्यं क्रियास्यग्रहणेन । प्रयत्नविशेषणमास्योपादानम् । एवमास्याद्बाह्या ये संवारविवारश्वासनादघोषवद्घोषवदल्पप्राणतामहाप्राणता इति प्रयत्नास्ते ज्ञापिता भवन्ति । तेषु सत्स्वसत्स्वपि सवर्णसंज्ञा सिद्धा भवति । एवं सत्यवर्णस्यास्याद्बाह्यस्थानत्वान्न सवर्णसंज्ञा प्राप्नोति । सर्व्वमुखस्थानमवर्णमेके इच्छन्ति । आस्ये येषां तुल्यो देश इति न ततः सिध्यति । सिद्ध्यति व्यपदेशिवद्भावेन ।

---

स्पृष्टता स्पर्शानां ; ईषत्स्पृष्टता अन्तःस्थानाम्, अकारस्य संवृतता, शास्त्रकार्य्यार्थं विवृतत्वप्रतिज्ञानमित्युक्तम् । ऊष्मणां स्वराणां विवृतता ईषद्विवृतता वा । वर्णोत्पत्तेः प्रागेव जिह्वाग्रोपाग्रमध्यमूलानि ताल्वादि सम्यक् स्पृशन्ति, ईषत् स्पृशन्ति, समीपे दूरे चावतिष्ठन्ते इति स्पृष्टतादीनां चतुर्णामाभ्यन्तरत्वम् आस्यान्तर्गततत्तत्कार्य्यकारित्वात् । वर्णोत्पत्तेः पश्चात् गलबिलस्य सङ्कोचात् संवारः विकाशात् विवारः गलबिलस्य श्वासप्रयत्नकत्वात्त्वासः प्राणवायोर्घाततारतम्येन नादादय इति बाह्यत्वम् । आस्यबहिर्भूतदेशे कार्य्यकारित्वात् वर्गाणां प्रथमद्वितीयाः श-ष-स-विसर्ज्जनीयजिह्वामूलीयोपाध्मानीया यमौ च प्रथमद्वितीयौ विवृतकण्ठाः, श्वासानुप्रदाना अघोषा वर्गयमानां प्रथमे अल्पप्राणा इतरे सर्व्वे महाप्राणाः, वर्गाणां तृतीयचतुर्थाः अन्तःस्था हकारानुस्वारौ यमौ च तृतीयचतुर्थौ संवृतकण्ठाः, नादानुप्रदाना घोषवन्तो वर्गाणां तृतीया अन्तःस्थाश्चाल्पप्राणाः, यथा तृतीयास्तथा पञ्चमाः, आनुनासिक्यमेषामधिको गुणः ।'' संक्षेपतस्तु विवाराः श्वासा अघोषाश्च, हशः संवारा नादा घोषाश्च । वर्गाणां प्रथमतृतीयपञ्चमा यणश्चाल्पप्राणाः, वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणा इति ।

आस्ये येषामिति । यदि न अवर्णस्य आस्यात् बाह्यं स्थानम् किन्तर्हि सर्व्वमुखस्थानं तदा आस्यमेव तस्योच्चारणस्थानं भवति न तु आस्ये कश्चिद्देश इति न तस्य सवर्णसंज्ञासिद्धिः ।

व्यपदेशिवदिति । बुद्धिकृतभेदाश्रयणं व्यपदेशः, यथा राहोः शिरः । आस्यतद्देशयोर्बुद्धिकृतभेदाश्रयणेन सिद्ध्यति ।

आस्ये येषां तुल्योदेश इति क्वते सूत्रं भिद्यते। अस्तु यथान्यासमिति चेत् "सवर्णसंज्ञायां भिन्नदेशेष्वतिप्रसङ्गः प्रयत्नसामान्यात्"। नैष दोषः। आस्ये भवमास्यमिति नैतल्लौकिकमास्यम्। तत आस्यं स्थानं करणञ्च। एवमपि प्रयत्नो न विशेषित इति चेत्, न हि प्रयतनं प्रयत्नः, प्रारम्भो यत्नस्य प्रयत्नः। एवमपि प्रश्लिष्टावर्णयोरेङो-रवर्णेन विवततरावर्णेन चैचोश्च सवर्णसंज्ञा प्राप्नोति। एङोरैचोरेव ततो मिथः सवर्णसंज्ञा प्राप्नोति। नैतौ तुल्यस्थानौ। उदात्तादीनां तर्हि सवर्णसंज्ञा न प्राप्नोति। अभेदका उदात्तादयः।

अथवास्तु प्रयतनमेव प्रयत्नः, तदेव च तद्धितान्तमास्यम्। यत्समानं तदाश्रीयते।

---

आस्ये भवमिति। "शरीरावयवाद्यत्" (५।१।६) इति यत्। यस्येति लोपे "हलो यमां यमि" (८।४।६४) इति यलोपः। यलोपे वक्तव्ये स्थानिवद्भावनिषेधात् न चाचा-ल्लोपस्य स्थानिवद्भावः।

स्थानं करणमिति। "स्थानं ताल्वादि, करणं स्पृष्टतादि, जिह्वाया अग्रोपाग्रमध्य-मूलानि वा।"

न विशेषित इति। प्रयत्नो हि आस्ये भवः, सुतरां तद्धितान्तास्यशब्दग्रहणादेव तद्ग्रहणसिद्धेः न कर्त्तव्यं प्रयत्नग्रहणम्।

प्रारम्भो यत्नस्य इति। यत्नस्येत्यत्र जातावेकवचनम्। ततो निर्द्धारणे षष्ठी। यत्नानां मध्ये योऽसौ वर्णोत्पत्तेः प्राक् आरभ्यमाणः सोऽयं प्रयत्नः। अथवा प्रकृष्टो यत्नः प्रयत्नः प्रारम्भे यत्नो वा प्रयत्नः, वर्णोच्चारणप्रारम्भकाल एव आभ्यन्तरप्रयत्नानामारभ्यमाण-त्वात्।

तदेव चेति। तत्पूर्व्वोक्तमेव तद्धितान्तम् आस्यम्।

यत् समान इति। वर्ग्याणां स्पृष्टत्वस्य समानत्वात् विवारादिबाह्यप्रयत्नभेदेऽपि सवर्णसंज्ञा। सुतरामत्र भेदमुपेक्ष्य समानग्रहणम्।

किं सति भेदे? भेदे सत्येव। समाने सति स्यादिति चेत् सवर्णसंज्ञावचनमनर्थकं स्यात् सुतरां भेदे सति साश्रयणीया। सति भेदे किञ्चित् समानं कृत्वा चेत् सवर्णसंज्ञा भविष्यति, शकारछकारयोः षकारठकारयोः सकारथकारयोः सवर्णसंज्ञा प्राप्नोति। एतेषां हि सर्व्वं समानं करणवर्ज्जम्। एवं सति चास्ये प्रयत्नेति न द्वन्द्वः किन्तर्हि

---

किं सति भेद इति। वर्ग्याणां स्पृष्टत्वस्य समानत्वात् यदि विवारादिभेदेऽपि सवर्णसंज्ञाग्रहणं भवति तदा समानन्यायात् विवारादिसमानत्वे स्पृष्टतादिभेदेऽपि सवर्णसंज्ञाग्रहणं भवति।

भेदे सतीति। यदि भेदेऽपि सवर्णसंज्ञाग्रहणं न स्यात् तदा "झरो झरि सवर्णे" (८।४।६५) इत्यत्र 'झरो झरि' इत्येव ब्रूयात्। तत्र सवर्णग्रहणेन यथासंख्यातानुदेशो (१।३।१०) न भवति, तेन 'शिण्ढि' इत्यत्र ढकारे डकारस्य सवर्णभावे लोपो भवति। ढकारडकारयोरस्ति वाह्यप्रयत्ने भेदः। यदि सर्व्वसमानत्वे सवर्णत्वं स्यात् ढकारे डकारलोपोऽत्र न भवेत्।

सवर्णसंज्ञेति। सर्व्वसमानत्वे स्वस्यैव स्वेन सवर्णत्वं स्यादिति सवर्णसंज्ञाग्रहणानर्थक्यम्।

किञ्चित्समानमिति। भेदे सति सवर्णसंज्ञाग्रहणे स्पृष्टत्वादिसमानत्वे विवारादि-भेदे यथा तथा विवारादिसमानत्वे स्पृष्टतादिभेदे सवर्णसंज्ञा प्राप्नोति, सुतरां शकार-छकारयोः षकारटकारयोरघोषत्वादिसमानत्वे स्पृष्टत्वादिभेदे सवर्णत्वम्।

करणवर्ज्जमिति। छकारठकारौ हि वर्ग्यौ सुतरां तयोः स्पृष्टत्वं, शकारषकारयो-रूष्मणो विवृतत्वं सुतरां करणे भेदः। किमिदं करणं पूर्व्वमेवोक्तम्।

न द्वन्द्व इति। द्वन्द्वे हि 'आस्ये प्रयत्न' इत्याकारेण एकस्मिन्नेव स्थाने ययोस्तुल्यप्रयत्न इति नाश्रीयते। सुतरां तत्र वाह्यप्रयत्नानामपि ग्रहणत्वात् दोषसम्भावना। आस्ये प्रयत्न इति समासे तु न दोषः, तेन प्राधान्येनाभ्यन्तरप्रयत्नस्य ग्रहणात्। आभ्यन्तरप्रयत्नानां वर्णोत्पत्तेः प्राक् जिह्वाग्रोपाग्रमध्यमूलैस्ताल्वादिस्थानस्पर्शः, अतएव एकस्मिन्नेव स्थाने प्रयत्नसम्पर्कः। न तथा वाह्यप्रयत्नेषु तेषां हि वर्णोत्पत्तेः पश्चात् मूर्द्ध्नि प्रतिहते निवृत्ते प्राणवायौ सम्भावना।

तुल्य आस्ये प्रयत्न एषामिति अथवा तुल्यः आस्ये तुल्यास्य इति पूर्वंतत्पुरुषः, ततः तुल्यास्यः प्रयत्न एषामिति बहुव्रीहिः, अथवा आस्ये प्रयत्नः आस्यप्रयत्नः तुल्य आस्यप्रयत्न एषामिति परंतत्पुरुषस्ततो बहुव्रीहिः ।

## ३ । तस्य ।

यो यस्य तुल्यास्यप्रयत्नः स तस्य सवर्ण इति यथा स्यादिति तस्येति ग्रहणं कर्तव्यम् । अन्यथान्यस्य तुल्यास्यप्रयत्नोऽन्यस्य सवर्णः स्यात् ।

## ४ । तस्यावचनं वचनप्रामाण्यात् ।

यद्यन्यस्य तुल्यास्यप्रयत्नोऽन्यस्य सवर्णः स्यात् सवर्णसंज्ञाकथनमनर्थकं स्यादतो वचनप्रामाण्यात् तस्येति न वक्तव्यम् ।

## ५ । सम्बन्धिशब्दैर्वा तुल्यम् ।

तुल्यास्यप्रयत्नं सवर्णमित्यत्र यत् प्रति यत् तुल्यास्यप्रयत्नं तत् प्रति तत् सवर्णसंज्ञमिति सम्बन्धिशब्दावेतौ, तद्यथा मातरि वर्त्तितव्यं पितरि शुश्रूषितव्यमित्युक्ते या यस्य माता, यश्च यस्य पितेति सम्बन्धवशाद्गम्यते ।

## ६ । ऋकारलृकारयोः सवर्णविधिः ।

ऋकारलृकारयोः सवर्णसंज्ञा विधेया, होतृ+लृकारः 'होतृकारः' इति सवर्णदीर्घो यथा स्यात् । नास्ति प्रयोजनं, यतः "अकः सवर्णे दीर्घः" (६।१।१००) इत्यत्र "ऋति ऋ वा वचनं लृति लृ वा वचनम्" इति वक्ष्यति ।

---

आस्ये प्रयत्न इति । "अमूर्द्धमस्तकात् स्वाङ्गादकामे" (६।३।१२) इत्यनेनात्र कथं न अलुक् समासः ? न ह्यत्रास्यशब्दः स्वाङ्गवाची ।

लृति वा वचनमिति । "लृति वा वचन"मित्यत्र "अकः सवर्णे दीर्घः" इत्यतो दीर्घ इत्यनुवर्त्तते । दीर्घपक्षे नास्ति लृकारस्य दीर्घः सुतरामृकारस्यान्तरतम्याद्दीर्घऋकारो भविष्यति ।

तत्सवर्णे यथा स्यात् 'दध्य्लृकारः' 'मध्व्लृकारः' इत्यत्र मा भूत्। "ऋति ऋ वा वचनम्" इत्यत्रत्यस्य ऋतीत्यस्य ऋत इति पञ्चम्यन्तं पाठं कृत्वा लृति लृकारो वा ऋत इत्येव सिद्धयति।

एवं सति ऋकारलृकारयोः सवर्णत्वं न वक्तव्यं भवति। अवश्यवक्तव्यमन्यथा ऋकारलृकारयोरच्त्वाभावात् "ऊकालोऽज्झ्रस्वदीर्घप्लुतः" (१।२।२७) इति प्लुतौ न स्यात्। होतृ+ऋकारः 'होतृकारः' 'होतृ३कारः', 'होतृ+लृकारः' 'होत्लृकारः', 'होत्लृ३कारः' इति प्लुतसिद्धयर्थम् ऋकारस्य लृकारस्याच्त्वं वक्ष्यामि। अच्त्ववचन-सवर्णसंज्ञावचनयोः सवर्णसंज्ञावचनमेव न्यायः। यतः सवर्णसंज्ञायां दीर्घत्वम् ऋकार-ग्रहणेन लृकारग्रहणञ्च भवति। ऋकारग्रहणेन लृकारग्रहणे "उरण् रपरः" (१।१।५१) इत्यत्र लृकारस्यापि रत्वं प्राप्नोति। लृकारस्य लपरत्वं वक्ष्यामि। ऋकारलृकारयोः

---

तत्सवर्णे इति। सवर्णसंज्ञामविधाय दीर्घ इति वचने येनापि केनाप्यचा लृति दीर्घकार्यं स्यात्।

ऋत इति। 'होतृ+लृकारः' इत्यत्र ऋकारे परतो लृकारोऽस्ति। अत्र उभयो-र्दीर्घ एकादेशे न स्यान्यत्प्रसङ्गोऽतो दीर्घऋकार एव। सुतरां सवर्णसंज्ञामविधायापि लृकारस्थाने सिद्धो दीर्घऋकारः।

अच्त्वाभावादिति। ऋकारे हि मध्ये द्वौ रेफौ तयोरेका मात्रा अभितोऽज्भक्ती-रपरैका मात्रा इति द्विमात्रोऽयम् ऋकारः। एवम् लृकारे मध्ये द्वौ लकारौ तयोरेका मात्रा अभितोऽजभक्तीरेका मात्रा इति द्विमात्रोऽयम् लृकारः। रेफलकारयोरीषत्-स्पृष्टत्वम्। रेफलकारयोरीषत्स्पृष्टत्वम् ऋकारलृकारयोर्वर्णसामाम्नायिकयोर्विवृत-त्वम् सुतरां ताभ्यां तयोरग्रहणादनच्त्वम्।

लृकारग्रहणञ्चेति। ऋकारेण लृकारग्रहणे सति "ऋत्यकः" (६।१।१२८) इत्यत्र 'खट्वऋश्यः' 'मालऋश्यः' इत्यपि यथा सिद्धं भवति तथा 'खट्वलृकारः' 'माललृकारः'-इति। "वा सुप्यापिशलेः" (६।१।९२) इत्यत्र 'उपर्कारीयति' 'उपार्कारीयति' इत्यपि यथा सिद्धं भवति 'उपल्कारीयति' 'उपाल्कारीयति' इति।

लपरत्वमिति। लपरत्वं व्याख्यानादिति भावः। व्याख्यानं हि लणसूत्रस्याक्षा-

सवर्णसंज्ञावक्तव्या, अन्यथा "उरण् रपरः" इत्यत्र लृकारग्रहणं कर्त्तव्यं भवति, सवर्णसंज्ञायां तदेव रेफबाधनार्थं भविष्यति ।

ऋकारग्रहणेन लृकारग्रहणे "रषाभ्यां नो णः समानपदे" (८।४।१) इत्यत्र "मातॄणां" "पितॄणाम्" इत्येतदर्थम् "ऋवर्णान्तादिति वाच्यम्" इति ऋकारग्रहणं कृतं, तेन 'क्लृप्यमानं पश्य' इत्यत्र णत्वं प्राप्नोति । अस्य असत्यामपि सवर्णसंज्ञायाम् 'प्रक्लृप्यमानं पश्य' इत्यत्र "कृत्यचः" (८।४।२९) इत्यनेन कथं न णत्वं प्राप्नोति । चु-टु-तु-ल-शर्व्यवाये नेति वक्ष्यामि । अपर आह "त्रिभिश्च मध्यमैर्वर्गैर्लृशसैश्च व्यवाये नेति वक्ष्यामि" इति । "वर्णैकदेशाश्च वर्णग्रहणेन गृह्यन्ते" इति लृकारे लकारः, सुतरां लकारमाश्रित्य प्रतिषेधो भविष्यति । एवं सति रषाभ्यां णत्वे ऋकारग्रहणं व्यर्थम्, ऋकारे योऽसौ रेफः तदाश्रयणेन णत्वं स्यात् ।

---

रेण प्रत्याहारात् रपर इत्यत्र लकारस्यापि प्राप्तिरिति आन्तरतम्येन ऋकारस्य रकारः ऌकारस्य लकार इति ।

चु-टु-तु-ल शरिति । "अट्कुप्वाङ्नुम्व्यवायेऽपि" (८।४।२) इत्येतदाश्रित्यैवमुक्तम् । अट् कु पु इत्येतेषामन्यतमा हि चु-टु-तु-ल शरः । अत्र शर्षु षकारोऽपि यद्यपि परिगृहीतः तथापि रषाभ्यामित्यत्र षकारस्य विद्यमानत्वान्न दोषः ।

त्रिभिश्चेति । अत्र लशसैरित्युक्त्वा षकारग्रहणं परित्यक्तमिति विशेषः ।

वर्णैकदेशा इति । वर्णैकदेशा इत्यस्य ग्रहणपक्षोऽग्रहणपक्षोऽपि विद्यते । अग्रहणपक्षे क्षुभ्नादेराकृतिगणत्वात्सत्वाभावः । अनुबन्धनिर्दिष्टयोर्ऋकारलृकारयोर्न साङ्कर्य्यं भेदेनानुबन्धनिर्देशात् अनुबन्धकार्य्येषु परस्परस्यानुपादानाच्च ।

नाज्झलौ । १ । १ । १० ।

म॰ वृ॰ । अच् हल् च अज्झलौ तुल्यास्यप्रयत्नावपि अज्झलौ परस्परं सवर्णसंज्ञौ न भवतः । अवर्णहकारौ—'दण्डहस्तः', इवर्णशकारौ—'दधिशीतम्', सवर्णदीर्घत्वं न भवति । 'वैपाशो मत्स्यः' 'आनडुहं चर्म्म' इति "यस्येति च" (६।४।१४८) लोपो न भवति ।

भा॰ स॰

१ । अज्झलोः प्रतिषेधे शकारप्रतिषेधो अज्झल्त्वात् ।

शकारो हि अच् हल्च् । सुतरामज्झल्त्वात् अज्झलोः प्रतिषेधे शकारस्य शकारेण सवर्णसंज्ञाप्रतिषेधः प्राप्नोति । कथं तावदच्त्वम् ? सवर्णग्रहणेन इकारः शकारमपि गृह्णातीति शकारस्याच्त्वं हल्सूपदेशात् हल्त्वम् । तत्र को दोषः ?

---

शकारो हीति । शकारोऽत्रोपलक्षणं, शकारेण शर्ग्रहणं भवति, तेन शरां शर्भिः सावर्ण्यमत्र निषिध्यते । इकारेण शकारः, ऋकारेण षकारः, लृकारेण सकारो गृह्यते। न च वक्तव्यम्, "नाज्झलौ" इत्यनेनैव निषेधसूत्रेण एभिरेषां ग्रहणं न स्यात् । निषेधवाक्यं हि प्राप्तिमाश्रित्योपतिष्ठते । सुतरां निषेधवाक्यारम्भात् प्राक् इकारादिभिः शरां ग्रहणमवश्यम्भावि । अनेन निषेधवाक्येन अन्यत्र अज्झलोः सावर्ण्यं निषिद्धं स्यात् न तस्मिन् सूत्रे । यतो नेदं सूत्रं स्वस्य निषेधसूचकं भवितुमर्हति । सुतरामनत्या-ऽज्झल्पदेन अज्झलोः सावर्ण्यं, न तु शरां शर्भिः ।

## २। तत्र सवर्णलोपे दोषः ।

तत्र सवर्णलोपे दोषः । 'परशुशतानि कार्य्याणि' "झरो झरि सवर्णे" (८।४।६५) इति लोपो न प्राप्नोति ।

## ३। सिद्धमनच्त्वात् ।

अनच्त्वात् सिद्धमेतत् । कथमनच्त्वम् ? "स्पृष्टं करणं स्पर्शानाम् ।" "ईषत्स्पृष्टमन्तःस्थानाम् ।" "विवृतमूष्मणाम् ।" ईषदित्यनुवर्त्तते । "स्वराणाञ्च" विवृतमित्यनुवर्त्तते ईषदिति निवृत्तम् । सुतरामूष्मणामीषद्विवृतत्वात् अचां विवृतत्वात् शकारस्य नाच्त्वम् सवर्णत्वाभावात् ।

## ४। वाक्यापरिसमाप्तेर्वा ।

अथवा सिद्धमेतत् वाक्यापरिसमाप्तिः । दृश्यतेऽत्र वाक्यापरिसमाप्तिर्यतः इह पूर्व्वं

---

परशुशतानीति । शतात्पराणि परशुशतानि "कर्तृकरणे कृता वहुलम्" (२।१।३२) इति वाहुलकात् सुप्सुपेति वा समासः, ततः पारस्करादित्वात् (६।१।१५७) सुट् । सुटि सकारस्य शुत्वम् (८।४।४०), ततः "अनचि च" (८।४।४७) इति द्विर्व्वचनम् । झरो झरीत्यनेन सवर्णलोपाप्राप्तौ त्रिशकारकश्रवणप्रसङ्गः । "नाज्झलौ"वित्यनेन सूत्रेण "शरोऽचि" (८।४।४९) "अनचि च" (८।४।४७) इत्यत्र सवर्णत्वनिषेधात् । शकारस्य द्विर्व्वचनम् । "अनेन निषेधवाक्येन अन्यत्र अज्झलोः सावर्ण्यं निषिद्धं स्यात्" इति पूर्व्वमुक्तम् ।

अनच्त्वादिति । अज्झलोः प्रयत्नभेदात् नास्ति सवर्णसंज्ञायाः प्राप्तिः । सूत्रप्रत्याख्यानकरमिदं वाक्यम् ।

वाक्यापरिसमाप्तेरिति । 'विवृतमूष्मणाम्' इत्यत्र ईषच्छब्दस्यानुवर्त्तनपक्षं परिगृह्य परिहारान्तरं वक्ष्यते । "अणुदित् सवर्णस्य चाप्रत्ययः" (१।१।६९) इत्यनेन हि सवर्णसंज्ञाग्रहणं भवति । न चास्मिन् सूत्रे तस्य निष्पादनम् । सूत्रेऽस्मिन् निष्पन्ने सति

वर्णानामुपदेशः, उपदेशादनन्तरम् इत्संज्ञा, इत्संज्ञानन्तरं "आदिरन्त्येन सहेता" (१।१।७१) इति प्रत्याहारः, प्रत्याहारानन्तरं सवर्णसंज्ञा, सवर्णसंज्ञानन्तरं "अणुदित् सवर्णस्य चाप्रत्ययः" (१।१।६९) इति सवर्णग्रहणम्। एतेन सर्व्वेण समुदितेनान्यत्र सवर्णानां ग्रहणं भवति। सुतराम् इकारः शकारं न गृह्णाति। चेदिकारः शकारं न गृह्णाति ईकारमपि न गृह्णीयात्। सुतरां न सिद्ध्येत् 'अकः सवर्णे दीर्घः' (६।१।१००) इति दीर्घत्वमपि। नैष दोषः। अकः सवर्णे इत्यत्र प्रत्याहारग्रहणादीकारमपि गृह्णाति।

---

अस्यापवादविषयं परिहाय इष्टविषये सवर्णसंज्ञानिर्व्वाहार्थं तस्य प्रवृत्तिः। यथा "अस्य च्वौ" (७।४।३२) इत्यादिषु। सुतराम् उपदेशानन्तरम् इत्संज्ञेत्यादि वाक्यानामिहापरिसमाप्तिः इकारशकारयोः सावर्ण्यग्रहणं न भवति। नाज्झलावित्यनेनाक्षरसामाम्नायिकानामेव सावर्ण्यव्युदासो न तु सर्व्वेषामिति दीर्घशकारयोः सावर्ण्यवारणाय अकः सवर्णे इत्यत्र अस्तीत्यनुवर्त्तनं युक्तम्। चतुर्द्दशसूत्र्या पठितवर्णानां मध्ये अचां हल्वर्णेन सावर्ण्ये प्राप्ते नाज्झलाविति सूत्रं प्रवृत्तम्। न त्वाकारोऽक्षरसमाम्नाये पठितः। तस्य ग्रहणं भवति ग्रहणकशास्त्रेण। नाज्झलाविति निषेधस्य अक्षरसमाम्नायपठितवर्णमात्रविषयत्वात् आकारस्य तत्पठितत्वाभावेन न निषेधस्य विषयः, सुतरां 'विश्वपाभिः' इत्यत्र ग्रहणकशास्त्रबलादाकारेण गृहीतो हकारः परिगृहीतो भवति। ततो "हो ढः" (८।२।३१) इति ढत्वप्रसङ्गः। एतद्दोषनिवारणाय "नाज्झलौ" इत्यत्र आकारप्रश्लेषः कृतः, तेन आकारेण हलः सावर्ण्यनिषेधः। आकारप्रश्लेषस्य ज्ञापकन्तु "कालसमयवेलासु" (३।३।१६७) इत्यत्र 'वेलासु' इति निर्द्देशः अन्यथा इण्मध्यवर्त्तिना हकारेण आकारस्यापि ग्रहणात् इणः परतया सकारस्य षत्वं स्यात्।

प्रत्याहारग्रहणादिति। अक इत्यत्र प्रत्याहारग्रहणात् प्रत्याहारग्रहणान्तरं भवति सवर्णसंज्ञाग्रहणं, सवर्णसंज्ञाग्रहणानन्तरन्तु सवर्णग्रहणं, सुतरामत्रास्ति वाक्यपरिसमाप्तिः। ततोऽत्रेकारेण पुनरीकारस्य ग्रहणम्।

अपर आह "अज्झलोः प्रतिषेधे शकारप्रतिषेधोऽज्झस्त्वात्" "तत्र सवर्णलोपे दोषः"। परिहारद्वयमपि "शिड्‌विधानत्वात्" "वाक्यापरिसमाप्तेर्वा।" अस्मिन् पक्षे वाग्रहणेन अस्तु वा शकारस्य शकारेण सावर्ण्यग्रहणम्। ननु 'परश्शतानि' इत्यत्र "झरो झरी"ति लोपो न प्राप्नोति, ततो भवति त्रिशकारकम्, न तु द्विशकारकम्, सुतरां लोपे ह्यलोपे च भेदो भवति। न भवति, यतो विभाषा द्विर्वचनम्। एवमपि भेदो यतोऽसति लोपे कदाचित् द्विशकारकम्, कदाचित्त्रिशकारकम्, लोपे तु द्विशकारकमेव। स्याद्भेदो यदि नित्यलोपः स्यात्, विभाषा तु सलोप इति न भेदः।

इति श्रीभाष्यसङ्क्रमन्यां प्रथमाध्यायस्य प्रथमे पादे
चतुर्थमाह्निकम्।

---

वाग्रहणेनेति। पूर्वत्र वा-ग्रहणं परिहारान्तरविकल्पप्रदर्शनाय, अत्र तु तेन परिहारद्वये ह्यपरितुष्यता पुनरिकारादिभिः शकारादीनां सावर्ण्यग्रहणम्। सुतरां शकारस्याच्त्वात् शकारस्य शकारेण सावर्ण्यग्रहणमित्युक्तम्।

असति लोप इति। झरो झरीत्यनेनासति लोपे द्विर्वचनस्य विकल्पविषयत्वात् कदाचित् द्विशकारकत्वं कदाचित् त्रिशकारकत्वम्।

यदि नित्यलोप इति। "यरोऽनुनासिकेऽनुनासिको वा" (८।४।४५) इत्यतो वेत्यनुवर्त्तनात् यथा "अनचि च" (८।४।४७) इति द्विर्वचनं यथा वैकल्पिकं, तथा "झयो होऽन्यतरस्याम्" (८।४।६२) इत्यतोऽन्यतरस्यामित्यनुवर्त्तनात् "झरो झरि सवर्णे" (८।४।६५) इत्यस्य लोपोऽपि वैकल्पिकः। सुतरां न कश्चिद्भेदः।

इति श्रीतत्त्वसङ्कलन्यां प्रथमाध्यायस्य प्रथमे पादे
चतुर्थमाह्निकम्।

---

